



अथ

श्रीदुर्गसिंहविरचितवृत्तिसहितं

## कातन्त्रम् ॥

---

॥ गणेशाय नमः ॥

देवदेवं प्रणम्यादौ सर्वज्ञं सर्वदर्शिनम् ।
कातन्त्रस्य प्रवक्ष्यामि व्याख्यानं शार्ववर्मिकम्[१] ॥

**सिद्धो वर्णसमाम्नायः ॥१॥**

सिद्धः खलु वर्णानां समाम्नायो वेदितव्यः । न पुनरन्यथोपदेष्टव्य इत्यर्थः ॥ सिद्धशब्दोऽत्र नित्यार्थो निष्पन्नार्थः प्रसिद्धार्थश्च । यथा सिद्धमाकाशम् । सिद्धमन्नम् । काम्पिल्यः[२] सिद्ध इति । वर्णा अकारादयः । तेषां समाम्नायः पाठक्रमः ॥

**तत्र चतुर्दशादौ स्वराः ॥२॥**

तस्मिन्वर्णसमाम्नायविषय आदौ ये चतुर्दश वर्णास्ते स्वरसंज्ञा भवन्ति । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ ॥ यथानु-…रेण ह्रस्व ऌकारोऽस्ति तथा दीर्घोऽप्यस्तीति मतम् ॥ स्वरप्रदेशाः । स्वरोऽवर्णवर्जो नामी [का॰ १. १. ७] इत्येवमादयः ॥

---

१ सार्ववर्मिकम् । B. D. G. (and a correction in A.)

२ काम्पिल्लः F. काम्पीले C. D.

**दश समानाः ॥३॥**

तस्मिन्वर्णसमाम्नायविषय आदौ ये दश वर्णा [illegible] भवन्ति। अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ॥ समानप्रदे [illegible] सवर्णे दीर्घीभवति परश्च लोपम् [का० १. २. १] इ [illegible]

**तेषां द्वौ द्वावन्योन्यस्य सवर्णौ ॥४॥**

तेषामेव दशानां(१) यौ द्वौ द्वौ वर्णौ तावन्यो [illegible] ज्ञकौ भवतः(२)। अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ॥ ते [illegible] र्थम्। तेन ह्रस्वयोर्द्वयोर्दीर्घयोश्च(३) सवर्णसंज्ञा [illegible] ॥ सवर्ण-प्रदेशाः। समानः सवर्णे दीर्घीभवति परश्च लोपम् [का० [illegible]] इत्येवमादयः॥

**पूर्वो ह्रस्वः ॥५॥**

द्वयोर्द्वयोः सवर्णसंज्ञयोर्यो यः(४) पूर्वो वर्णः [illegible] भवति। अ इ उ ऋ ऌ ॥ ह्रस्वप्रदेशाः। स्वरो ह्रस्वं [illegible] [का० २. ४. ५२] इत्येवमादयः।

**परो दीर्घः ॥६॥**

द्वयोर्द्वयोः सवर्णसंज्ञयोर्यो यः(४) परो वर्णः [illegible]

---

१ दशानां मध्ये। C.

२ तावन्योऽन्यस्य परस्परं सवर्णसंज्ञौ भवतः। C. D.

३ दीर्घयोश्च द्व [illegible]

४ तयोर्द्वयोः स [illegible] यो यः C. D. F.

ति । ऋ ॠ ऌ ॡ ॥ ह्रस्वो लघुर्दीर्घो(१) गुरुरित्युच्चारण-
ग्राह्यमेतौ । तथा संयोगे सति ह्रस्वोऽपि गुरुः । गुरुमतोऽनृच्छ
ति वर्जनात् ॥ दीर्घप्रदेशाः । रो रे लोपं स्वरश्च पूर्वो दीर्घः
का० १. ५. १०] इत्येवमादयः ॥

## ...ऽवर्णवर्जो नामी ॥ ७ ॥

...वर्णवर्जस्वरो नामिसंज्ञो भवति । इ ई उ ऊ ऋ ॠ ऌ ॡ
ए ऐ ओ औ ॥ नामिप्रदेशाः । नामिपरो रम् [का० १. ५. १२]
...त्येवमादयः ॥

## एकारादीनि सन्ध्यक्षराणि ॥ ८ ॥

एकारादीनि स्वरनामानि सन्ध्यक्षराणि भवन्ति । ए ऐ
ओ औ ॥ सन्ध्यक्षरप्रदेशाः । सन्ध्यक्षरे च [का० ३. ६. ३८] इत्येव-
मादयः ॥

## ...कादीनि व्यञ्जनानि ॥ ९ ॥

ककारादीनि हकारपर्यन्तानि व्यञ्जनसंज्ञकानि(२) भवन्ति ।
क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म
य र ल व श ष स ह(३) ॥ व्यञ्जनप्रदेशाः । व्यञ्जनमस्वरं परं वर्णं
नयेत् [का० १. १. २१] इत्येवमादयः ॥

---

१ ह्रस्वोऽपि लघुर्दीर्घोऽपि० D. E. (C. orig.)

२ व्यञ्जनसंज्ञानि C. D. E.

३ हेति D. ह इति C.

## ते वर्गाः पञ्च पञ्च पञ्च ॥ १० ॥

ते कादयो मावसाना वर्णाः पञ्च पञ्च भूत्वा पञ्चैव ते वर्ग-संज्ञा(१) भवन्ति। क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म ॥ वर्गप्रदेशाः । वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषाः [का० १. १. ११] इत्येवमादयः ॥

## वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषाः ॥ ११ ॥

वर्गाणां प्रथमद्वितीया वर्णाः शषसाश्चाघोषसंज्ञा भवन्ति। क ख च छ ट ठ त थ प फ श ष स। अघोषप्रदेशाः । अघोषे प्रथमः [का० २. ३. ६१] इत्येवमादयः ॥

## घोषवन्तोऽन्ये ॥ १२ ॥

अघोषेभ्यो येऽन्येऽवशिष्टा गादयस्ते(२) घोषवत्संज्ञा(३) भवन्ति। ग घ ङ ज झ ञ ड ढ ण द ध न ब भ म य र ल व ह(४) ॥ घोषवत्प्रदेशाः। घोषवति लोपम् [का० १. ५. ११] इत्येवमादयः ॥

## अनुनासिका ङञणनमाः ॥ १३ ॥

ङ ञ ण न म। इत्येते वर्णा अनुनासिकसंज्ञा भवन्ति ॥ अनुनासिकप्रदेशाः। धुड् व्यञ्जनमनन्तःस्थानुनासिकम् [का० २. १. १३] इत्येवमादयः ॥

---

१ ते ककारादयो वर्णा मावसानाः पञ्च पञ्च भूत्वा पञ्चैव वर्गसंज्ञा० C. D. E.

२ गादयो वर्णास्ते C. D.

३ घोषवत्संज्ञका D. ; घोषवन्त॰ E.

४ हेति। C. D.

अन्तःस्था यरलवाः ॥१४॥

यरलव। इत्येते वर्णा अन्तःस्थासंज्ञा भवन्ति॥ अन्तःस्थाप्र-
देशाः। उवर्णस्य जान्तःस्थापवर्गपरस्यावर्णे [का° ३.३.२७] इत्ये-
वमादयः।

ऊष्माणः शषसहाः ॥१५॥

शषसह। इत्येते वर्णा ऊष्मसंज्ञा भवन्ति। शिडिति शादयः
[का° ३.८.३२] इति पुनर्लघुसंज्ञा एताः पूर्वाचार्यप्रसिद्धा अन्वर्था
इह ज्ञाप्यन्ते॥

अः इति विसर्जनीयः ॥१६॥

अकार इहोच्चारणार्थः। इति[१] कुमारीस्तनयुगाकृति-
र्वर्णो विसर्जनीयसंज्ञो भवति॥ विसर्जनीयप्रदेशाः। विसर्जनीयस्य
वा शम् [का° १.५.२] इत्येवमादयः॥

Xक इति[२] जिह्वामूलीयः ॥१७॥

ककार इहोच्चारणार्थः। इति वज्राकृतिर्वर्णो जिह्वामूली-
यसंज्ञो भवति॥ जिह्वामूलीयप्रदेशाः। कखयोर्जिह्वामूलीयं न
वा [का° १.५.४] इत्येवमादयः॥

---

१ यथा कादिषु। is added by D. before, by C. after इति.

२ कXइति A.; क इति B. C.; रक इति D. (C.?); क इति E. F.

**ᨊप इत्युपध्मानीयः[1] ॥१८॥**

पकार इहोच्चारणार्थः। इति गजकुम्भाकृतिर्वर्ण उपध्मानीयसंज्ञो भवति॥ उपध्मानीयप्रदेशाः। पफयोरुपध्मानीयं न वा [का॰ १. ५. ५] इत्येवमादयः।

**अं इत्यनुस्वारः ॥१९॥**

अकार इहोच्चारणार्थः। इति बिन्दुमात्रो वर्णोऽनुस्वारसंज्ञो भवति ॥ अनुस्वारप्रदेशाः। मोऽनुस्वारं व्यञ्जने [का॰ १. ४. १५] इत्येवमादयः॥

**पूर्वपरयोरर्थोपलब्धौ पदम् ॥२०॥**

पूर्वपरयोः प्रकृतिविभक्त्योरर्थोपलब्धौ सत्यां समुदायः पदसंज्ञो[2] भवति। तेऽत्र। यजन्तेऽत्र। उपलब्धिग्रहणं विभक्त्यर्थम् ॥ पदप्रदेशाः। एदोत्परः पदान्ते लोपमकारः [का॰ १. २. १७] इत्येवमादयः॥

**व्यञ्जनमस्वरं परं वर्णं नयेत् ॥२१॥**

व्यञ्जनं परं वर्णं नयेत्। न तु स्वरम्। व्यञ्जनमन्वक्। स्वरः स्वयं राजते हि। तद्गच्छति। षडत्र। कX खनति[3]। कᨊ फलतीति[4] योगवाहत्वात् स्वरूपमेतत्॥

---

१ ᨊप E.; पँ इत्यु॰ F.; प इत्यु॰ B.; प~ इत्यु॰ A.; ष्प॰ D.; ᨊ॰ C.

२ समुदायपद॰ B.; समुदायस्य पदसंज्ञा॰ C. D. E.

३ कःखनति B. D.; कखनति E.; कᨊखनति C.

४ कः॰ D.; कX खनतीति॰ B.; क៩ फ॰ F.; कᨊफलति C.; कᨊफलति E.

अनतिक्रमयन्विश्लेषयेत् ॥२२॥

वर्णान्संघटितान्संमिलितान्(१) अनतिक्रमयन्विश्लेषयेत्। वि-
घटयेदित्यर्थः। वैयाकरणः। उच्चकैः। असंमोहार्थोऽयं योगः॥

लोकोपचाराद्ग्रहणसिद्धिः ॥२३॥

लोकानामुपचारो व्यवहारः। तस्मादनुक्तस्यापि ग्रहणस्य
सिद्धिर्वेदितव्येति। निपाताव्ययोपसर्गकारककालसंख्यालोपा-
दयः॥ तथा वरणा इति नगरस्यापि संज्ञा। पञ्चाला वरणा
इति जनपदस्यापि(२)। पञ्चाला वरणा इति(३) योगो न दृश्यते।
संज्ञाशब्दत्वात्॥ हरीतक्यः फलानीति। फलेष्वपि स्त्रियां वृत्तिः॥
एवमन्येऽपि संज्ञाशब्दा इव तद्धिता लोकतः सिद्धाः। खलतिकं
वनानीति। तेषां वनानामेकवचनान्तमेव नाम॥ शब्दानामेकार्थे
ऽपि लिङ्गवचनभेदः। यथा। आपो जलम्। दाराः कलत्रं भा-
र्येति॥ वैदिका लौकिकश्चैव ये यथोक्तास्तथैव च(४)। निर्णीता-
स्तु(५) विज्ञेया लोकात्तेषामसंग्रहः॥

॥ इति दौर्गसिंह्यां वृत्तौ सन्धौ प्रथमः पादः(६) समाप्तः॥

---

१ E. adds एकत्र पिंडीभूतान्
२ पञ्चाला इति C. D. E. F.; E. adds वरणा नगरं पंचाला जनपदः।
३ पञ्चाला इति F.
४ तथैव ते। C. D. E. F.
५ च for तु D.
६ नाम्नि प्रथमः सन्धिः D.; वृत्तौ प्रथमः सन्धिः E.

**समानः सवर्णे दीर्घीभवति परश्च लोपम् ॥१॥**

समानसंज्ञको वर्णः सवर्णे परे दीर्घीभवति परश्च लोपमापद्यते। दण्डाग्रम्। सागता। दधीदम्। नदीह ते। मधूदकम्। वधूढम्। पितृषभः[१]। कृकारः। क्लृकारेण[२]॥ होतृकार इति वक्तव्यम्॥ समानग्रहणमश्रुतादपि दीर्घात्समानात्सवर्णस्य लोपार्थम्। तेन वृच्चाः[३]॥

**अवर्ण इवर्णे ए ॥२॥**

अवर्ण इवर्णे परे एर्भवति परश्च लोपमापद्यते। वर्णग्रहणे सवर्णग्रहणम्। तवेहा। सेयम्॥ चकाराधिकारोऽनुक्तसमुच्चयार्थः। तेन क्वचित्पूर्वोऽपि लुप्यते[४]। हलीषा। लाङ्गलीषा। मनस ईषा[५]। मनीषा॥

**उवर्णे ओ ॥३॥**

अवर्ण उवर्णे परे ओर्भवति परश्च लोपमापद्यते। तवोदनम्। गङ्गोदकम्॥

**ऋवर्णे अर् ॥४॥**

अवर्ण ऋवर्णे परे अर्भवति परश्च लोपमापद्यते। तवर्कारः।

---

१ वधूढा। ° C. D. E.; C. adds मातृषभः। D. E. मातृकारेण.

२ कृकारः। क्लृकारः। B.; क्लृकारः। क्लृकारेण। C. E.; क्लृकारः। क्लृकारेण। D.

३ वृचा यदीह। E.; वृच। नदीह॥ D.; नदीहा C.

४ लोप्यते A.

५ मनसीषा। B.; om. E.; हलीशा। लांगलीशा। मनीशा। C.

सर्कारेण ॥ ऋणप्रवसनवत्सतरकम्बलदशानामृणे क्वचिदरोऽपि दीर्घता । ऋणार्णम् । प्रार्णमित्येवमादयः(१) ॥ ऋते च तृतीयासमासे । शीतेन ऋतः(२) । शीतार्तः(३) ॥ ऋति धातोरुपसर्गस्य । प्रार्छति ॥ नामधातोर्वा(४) । प्रार्षभीयति । प्रर्षभीयति(५) ॥

## लृवर्णे अल् ॥ ५ ॥

अवर्ण लृवर्णे परे अल्भवति परश्च लोपमापद्यते । तवल्कारः । सल्कारेण ॥ उपसर्गस्य वा लृति धातोरलो दीर्घः । उपाल्कारीयति । उपल्कारीयति ॥

## एकारे ऐ ऐकारे च ॥ ६ ॥

अवर्ण एकारे ऐकारे च परे ऐर्भवति परश्च लोपमापद्यते । तवैषा । सैन्द्री ॥ चकाराधिकारात्क्वचित्पूर्वोऽपि लुप्यते(६) । एवे चानियोगे । अद्येव । इहेव ॥ नियोगे तु । अद्यैव गच्छ । इहैव तिष्ठ ॥ स्वस्वादैरमीरेरिणोरपि वक्तव्यम् । स्वैरम् । स्वैरी(७) ॥

## ओकारे औ औकारे च ॥ ७ ॥

अवर्ण ओकारे औकारे च परे और्भवति परश्च लोपमा-

---

१ °त्यादयः । C. D. F.; प्रार्णं । वसनार्ण° E.

२ Om. C. D. E.

३ C. D. E. add दुःखार्तः । तृतीयासमास इति किम् । परमर्तः ।

४ नामधातौ वा । D.

५ C. adds नामधातोरिति किं । प्रर्षभं वनं ।

६ लोपः । A. B.; पूर्वलोपः । E. F.

७ स्वैरिणी ॥ C. D. E.

पद्यते । तवौदनम् । सौपगवी ॥ चकाराधिकारादुपसर्गावर्णलोपो धातोरेदोतोः । प्रेलयति । परोखति[1] ॥ इणेधत्योर्न[2] । उपैति । उपैधते ॥ नामधातोर्वा । उपेकीयति । उपैकीयति । प्रोषधीयति । प्रौषधीयति ॥ ओष्ठोत्वोः समासे वा । बिम्बोष्ठः[3] । बिम्बौष्ठः । स्थूलोतुः । स्थूलौतुः ॥ समास इति किम् । हे छात्त्रौष्ठं पश्य । अद्यौतुं पश्य ॥ ओमि च नित्यम् । अद्योम् । सोमित्यवोचत् ॥ अक्षस्योत्वमूहिन्याम्[4] । अक्षौहिणी सेना ॥ प्रस्योढोढ्योश्च[5] । प्रौढः । प्रौढिः ॥ एषैष्ययोरैत्वं[6] लोपस्यापवादः । प्रैषः । प्रैष्यः । ईषेस्तु प्रेषः । प्रेष्यः ॥

## इवर्णो यमसवर्णे न च परो लोप्यः ॥८॥

इवर्णो यमापद्यतेऽसवर्णे[7] न च परो लोप्यः । दध्यत्र । नद्येषा ॥ इवर्ण इति किम् । पचति ॥ असवर्ण इति किम् । दधि ॥

## वमुवर्णः ॥९॥

उवर्णो वमापद्यतेऽसवर्णे[7] न च परो लोप्यः । मध्वत्र । वध्वासनम् ॥

## रमृवर्णः ॥१०॥

ऋवर्णो रमापद्यतेऽसवर्णे[7] न च परो लोप्यः । पित्रर्थः । कर्थः[8] ॥

---

१ प्रोखति C.; प्रोषति । D. E.
२ इणेधत्योर्णः । A.
३ F. adds बिम्ब ओष्ठः ।
४ °ऊहिण्याम् all MSS. except E.
५ प्रस्योहोढोढ्योश्च D.
६ एषऐष्ययोर्° D. E.; एषोष्य° C.
७ D. adds परे.
८ Thus A. B. F.; मात्रर्थः D. E.; मात्रासनं C.

**लमॢवर्णः ॥ ११ ॥**

ॢवर्णो लमापद्यतेऽसवर्णे[1] न च परो लोप्यः । लनुबन्धः[2] । लाकृतिः ॥

**ए अय् ॥ १२ ॥**

एकारो अय् भवति[3] न च परो लोप्यः । नयति । अग्नये[4] ॥

**ऐ आय् ॥ १३ ॥**

ऐकार आय् भवति[3] न च परो लोप्यः । नायकः । रायैन्द्री ॥

**ओ अव् ॥ १४ ॥**

ओकारो अव् भवति[3] न च परो लोप्यः । लवणम् । पटवोतुः ॥

**औ आव् ॥ १५ ॥**

औकार आव् भवति[3] न च परो लोप्यः । गावौ । गावः ॥ एतेषु विसन्धिः पृथग्योगस्य स्पष्टार्थः । विवक्षितस्य[5] सन्धिर्भवति । गवाजिनम् । गोऽजिनमिति स्वरे विभाषा । गवाक्षः । गवेन्द्र इति नित्यमकारवर्णागमः ॥

---

१ D. adds परे.
२ लानुबन्धः A. corr.
३ D. E. add असवर्णे परे.
४ जयति ॥ C. D. E.; E. adds नयनं ।
५ तेन विवक्षितस्य D. E.

## अयादीनां यवलोपः पदान्ते न वा लोपे तु प्रकृतिः ॥१६॥

अय् इत्येवमादीनां पदान्ते वर्तमानानां यवयोर्लोपो भवति न वा। लोपे तु प्रकृतिः स्वभावो भवति। त आङ्गः। तयाङ्गः। तस्मा आसनम्। तस्मायासनम्। पट इह। पटविह। असा इन्दुः। असाविन्दुः॥ अयादीनामिति किम्। दध्यत्र। मध्वत्र॥ पदान्त इति किम्। नयनम्। नायकः॥

## एदोत्परः पदान्ते लोपमकारः॥१७॥

एदोद्भ्यां परोऽकारः पदान्ते वर्तमानो लोपमापद्यते। तेऽत्र। पटोऽत्र॥ एदोद्भ्यामिति किम्। तावत्र॥ पदान्तग्रहणं पदान्ताधिकारनिवृत्त्यर्थम्। तेन चितम्। स्तुतम्॥

## न व्यञ्जने स्वराः संधेयाः॥१८॥

न खलु व्यञ्जने परे स्वराः संधानीया भवन्ति। देवीगृहम्। पटुहस्तम्। मातृमण्डलम्। जले पद्मम्। रैष्टतिः। वायो गतिः। नौयानम्॥ नञा निर्दिष्टमनित्यम्। तेन पित्र्यम्। गव्यूतिः। अध्वमाने संज्ञेयम्॥

॥ इति दौर्गसिंह्यां वृत्तौ सन्धौ द्वितीयः पादः समाप्तः(१)॥

---

१ °वृत्तौ द्वितीयः सन्धिः समाप्तः। D. E.

## ओदन्ता अ इ उ आ निपाताः स्वरे प्रकृत्या ॥१॥

ओदन्ता निपाता अ इ उ आश्च केवलाः स्वरे परे प्रकृत्या[१] तिष्ठन्ति। नो अत्र। अहो आश्चर्यम्। अथो एवम्। अ अपेहि। इ इन्द्रं पश्य। उ उत्तिष्ठ। आ एवं किं मन्यसे। आ एवं नु तत्॥ एवमितिकिम्। नवा उ[२]॥ अन्तग्रहणमकारादीनां केवलार्थम्। तेन चेतीतीह नन्विति वेति॥ निपाता इति किम्। पट इह। पटविह। ईषतुः। ऊषतुः। आटतुः॥

## द्विवचनमनौ ॥२॥

द्विवचनं यदनौभूतं[३] तत्स्वरे परे प्रकृत्या[१] तिष्ठति। औकाररूपं परित्यज्य रूपान्तरं प्राप्तमित्यर्थः। अग्नी एतौ। पटू इमौ। शाले एते। माले इमे॥ द्विवचनमिति किम्। चित्रन्वत्र॥ पर्युदासः किम्। अयजाव[४] ह्यावाम्। देवयोरत्र॥ अनौभूतमिति किम्। तावत्र॥

## बहुवचनममी ॥३॥

बहुवचनं[५] यदमीरूपं तत्स्वरे परे प्रकृत्या[१] तिष्ठति। अमी अश्वाः। अमी एडकाः[६]॥ बहुवचनमिति किम्। अम्यत्र॥ अमीरूपमिति किम्[७]। तयाहुः[८]॥

---

१ C. D. add स्वभावेन.
२ नवायुः C. D. E.
३ यदनौरूपं F.
४ अजयाव A.
५ बहुवचनान्तं य० C. D. E.
६ C. adds अमी आदित्यरश्मयः।; E. अमी उष्ट्राः।
७ अमी इति किम्। C. D. E.
८ त आहुः C. D. E. F.

अनुपदिष्टाश्च ॥४॥

ये चाक्षरसमाम्नायविषये(१) व्यक्त्या नोपदिष्टा(२) जात्या(३) तु स्वरसंज्ञिताः प्लुतास्ते स्वरे परे प्रकृत्या(४) तिष्ठन्ति। आगच्छ भो देवदत्त ३ अत्र(५)। तिष्ठ(६) भो यज्ञदत्त ३ इह॥ दूराह्वाने(७) गाने रोदने च प्लुतास्ते लोकतः सिद्धाः ॥

॥ इति दीर्घसंज्ञायां वृत्तौ सन्धौ तृतीयः पादः समाप्तः(८) ॥

---

वर्गप्रथमाः पदान्ताः स्वरघोषवत्सु तृतीयान् ॥१॥

वर्गप्रथमाः(९) पदान्ताः स्वरघोषवत्सु तृतीयानापद्यन्ते। वागत्र। षड् गच्छन्ति॥ वर्गप्रथमा इति किम्। भवानाह॥ पदान्ता इति किम्। शकनीयम्॥ स्वरघोषवत्स्विति किम्। वाक् पूता। षट् कुर्वन्ति॥

पञ्चमे पञ्चमांस्तृतीयान्न वा ॥२॥

वर्गप्रथमाः(९) पदान्ताः पञ्चमे परे पञ्चमानापद्यन्ते। तृतीयान्न वा। वाङ्मती। वाग्मती। षण्मुखानि। षड्मुखानि।

---

१ चाक्षरवर्णसमा° C. D. E.
२ व्यक्त्यानुपदिष्टा A.
३ यात्या D.; E. omits तु.
४ C. D. add स्वभावेन.
५ Most MSS. omit the ३.
६ उत्तिष्ठ C. D. E.
७ दूरादाह्वाने D. a. m.
८ वृत्तौ नाम्नि (om. E.) तृतीयः सन्धिः समाप्तः। D. E.
९ वर्णानां प्रथमाः C. D.

तन्नयनम् । तद्नयनम् । त्रिष्टुम्मिनोति[१] । त्रिष्टुब्[१] मिनोति ॥ पदान्ते धुटां प्रथमे सति । तृप्रन्नयनम् । ज्ञानभुन्नाथो वा ॥ व्यवस्थितविभाषया प्रत्ययपञ्चमे[२] नित्यं पञ्चमो भाषायाम् । वाङ्मयम् । यन्मात्रम् ॥

## वर्गप्रथमेभ्यः शकारः स्वरयवरपरश्छकारं न वा ॥३॥

वर्गप्रथमेभ्यः पदान्तेभ्यः परः शकारः स्वरयवरपरश्छकारमापद्यते न वा । वाक्छूरः । वाक्शूरः । षट् छ्यामाः । षट् श्यामाः । तच्छ्वेतम् । तच्श्वेतम् । त्रिष्टुप्छ्रुतम् । त्रिष्टुप्श्रुतम्[१] ॥ वर्गप्रथमेभ्य इति किम् । प्राङ् शेते ॥ स्वरयवरपर इति किम् । वाक्श्लक्ष्णः । तच्श्मशानम् ॥ लानुनासिकेष्वपीच्छन्त्यन्ये[३] ॥

## तेभ्य एव हकारः पूर्वचतुर्थं न वा ॥४॥

तेभ्य एव वर्गप्रथमेभ्यः पदान्तेभ्यः परो हकारः पूर्वचतुर्थमापद्यते न वा । वाग्घीनः । वाग्हीनः । अज्झलौ । अज्हलौ । षड्ढलानि । षड् हलानि । तद्धितम् । तद्हितम् । ककुब्भासः । ककुब्हासः ॥ हकार इति किम् । तज्ज्ञतम् ॥ तेभ्योग्रहणं स्वरयवरपरनिवृत्त्यर्थम् । तेन वाग् ह्लादयति ॥ एवेति तृतीयमतव्यवच्छेदार्थम् ॥

---

१ तृष्टु० A. B. E. F.
२ ०विभाषाप्रत्यये D.
३ लानुनासिकेष्वपि नेच्छन्त्यन्ये। A.; ०केष्वपीचन्तन्ये ॥ D.

## पररूपं तकारो लचटवर्गेषु ॥५॥

तकारः पदान्तो लचटवर्गेषु परतः[१] पररूपमापद्यते। तल्लुनाति। तच्चरति। तच्छादयति[२]। तज्जयति। तज्झासयति[२]। तञ्ञकारेण। तट्टीकते। तट्ठकारेण[२]। तड्डीनम्। तड्ढौकते[२]। तण्णकारेण॥ पदान्ते धुटां प्रथमे सति। तज्जयः। दृग्लेखा[३]। ज्ञानभुट्टीकनमिति॥ लचटवर्गेष्विति किम्। तत् पचति॥

## चं शे ॥६॥

तकारः पदान्तः शे परे चमापद्यते। तच्श्लक्ष्णः[४]। तच्श्मशानम्॥ अछत्वपक्षे वचनमिदम्॥

## ङणना ह्रस्वोपधाः स्वरे द्विः ॥७॥

ङणनाः पदान्ता ह्रस्वोपधाः स्वरे परे द्विर्भवन्ति। क्रुङ्ङत्र। सुगण्णत्र। पचन्नत्र॥ ङणना इति किम्। किमत्र॥ पदान्ता इति किम्। वृत्रहणौ॥ ह्रस्वोपधा इति किम्। प्राङास्ते॥

## नोऽन्तश्चछयोः शकारमनुस्वारपूर्वम् ॥८॥

नकारः पदान्तश्चछयोः परयोः शकारमापद्यतेऽनुस्वारपूर्वम्। भवांश्चरति। भवांश्छादयति। भवांश्च्यवते[५]। भवांश्छ्यति॥

---

१ परेषु C. D. E.

२ The MSS. have almost invariably the double aspirate छ्छ° etc.

३ दृग्लेषा D.; दृषल्लेषा C. E.

४ F. adds तच्श्वेतं।

५ भवांश्च्यवति। F.

व्यवस्थितवास्मरणात् प्रशाञ्चरति[१]। एवमुत्तरत्रापि॥ तथान्तो विरतिरिति तेन त्वन्तरसि[२]॥

**टठयोः षकारम्॥९॥**

नकारः पदान्तष्टठयोः परयोः षकारमापद्यतेऽनुस्वारपूर्वम्। भवांष्टीकते। भवांष्ठकारेण॥

**तथयोः सकारम्॥१०॥**

नकारः पदान्तस्तथयोः परयोः सकारमापद्यतेऽनुस्वारपूर्वम्[३]। भवांस्तरति। भवांस्थुडति[४]॥
पुंस्कोकिलः। पुंस्खननम्। पुंश्चकोरः। पुंश्छत्नम्। पुंष्टिट्टिभः[५]। सुपुंस्तरति॥ पुंसोऽशिव्यघोषविषये संयोगान्तलोपस्यानित्यत्वात्। यथा प्राप्तमेव॥ अशिटीति[६] किम्। पुंसरः॥

**ले लम्॥११॥**

नकारः पदान्तो ले परे लमापद्यतेऽनुस्वारहीनम्। भवाँल्लुनाति। भवाँल्लिखति॥ कारहीनत्वादनुनासिकम्॥

**जझञशकारेषु ञकारम्॥१२॥**

नकारः पदान्तो जझञशकारेषु परतो[७] ञकारमापद्यते।

---

१ प्रशान् चरति। B. D. E. F.; प्रशान्चरति C.
२ तन्तरसि A.; त्वं तरसि E.
३ °पूर्वं च C. E.
४ भवांस्थूडति B. F.; °स्थुलति D.
५ पुंष्टिटिभः। F.; D. adds पुंस्फलनम्; C. पुंस्फलं।
६ अशिडिति B.; अशिडीति E.
७ परेषु C. D. E.

भवाञ्जयति । भवाञ्झाषयति(१) । भवाञ्ञकारेण । भवाञ्शेते ॥ पदमध्ये च टवर्गादेश इति जझञेषु ञकारविधानम् ॥

शि न्चौ वा(२) ॥१३॥

नकारः पदान्तः शि(३) परे न्चौ(४) वा प्राप्नोति ञकारं वा(५) । भवान्च्छूरः । भवाञ्च्छूरः(६) । भवाञ्शूरः । कुर्वन्च्छूरः । कुर्वञ्च्छूरः(६) । कुर्वञ्शूरः । प्रशान्च्छयनम् । प्रशाञ्च्छयनम्(६) । प्रशाञ्शयनम् ॥ णत्वं(७) गत्वं च न स्यात् । अनुस्वारो वर्गान्तश्च स्यादेव ॥ वात्र समुच्चये ॥

डढणपरस्तु णकारम्(८) ॥१४॥

डढणाः परेऽस्मादिति(९) डढणपरः । डढणपरो नकारो(१०) णमापद्यते(११) । भवाण्डीनम् । भवाण्ढौकते । भवाण्णकारेण ॥ तुशब्दो वानिवृत्त्यर्थः ॥

मोऽनुस्वारं व्यञ्जने ॥१५॥

मकारः पुनरन्तो व्यञ्जने परेऽनुस्वारमापद्यते । त्वं यासि ।

---

१ °ञ्झासयति A. B. F.
२ शे न्चौ° B.; शि ञ्चौ° D.
३ शे B.
४ ञ्चौ D.; नञ्चौ A.; नचौ F.
५ प्राप्नुतः । B.; प्राप्नोति वा । D.
६ Om. F.
७ नत्वं A. B.
८ नकारम् । D.
९ यस्मादिति D. E.; यस्मादिति विग्रहः C.
१० णकारो B.
११ णकारमापद्यते C.; नमापद्यते । D.; ऽस्मादिति [बहुव्रीहिः by another hand] । डढणपरस्तु नकारो णत्वमापद्यते । A.

त्वं रमसे ॥ अन्त इति किम् । गम्यते ॥ अनुस्वार इति संज्ञापूर्वको विधिरनित्यः । तेन सम्राट् । सम्राजौ[१] ॥

**वर्गे तद्वर्गपञ्चमं वा ॥१६॥**

अन्तोऽनुस्वारो वर्गे परे तद्वर्गपञ्चमं वापद्यते[२]। त्वङ्करोषि । त्वं करोषि । त्वञ्चरसि । त्वं चरसि[३] । पुम्भ्याम् । पुंभ्याम् ॥ वर्ग इति किम् । त्वं लुनासि ॥

॥ इति दौर्गसिंह्यां वृत्तौ सन्धौ चतुर्थः पादः समाप्तः ॥

---

**विसर्जनीयश्चे छे वा शम् ॥१॥**

विसर्जनीयश्चे वा छे वा परे शमापद्यते[४] । कश्चरति । कश्छादयति ॥

**टे ठे वा षम् ॥२॥**

विसर्जनीयष्टे वा ठे वा परे षमापद्यते[५]। कष्टीकते। कष्ठकारेण ॥ प्रत्येकं वात्र समुच्चये[६] बालावबोधार्थः ॥

---

१ संम्राट् । संम्राजौ D.; सम्म्राट् । सम्म्राजौ । E.

२ पञ्चमापद्यते वा । D.; A. adds न वा.

३ D. adds स्यादिधुटि पदान्तवत् । विरतेरविधानात् ।; C. reads स्यादिधुटिपदांवत् । पुम्भ्यां । पुम्भ्यां ।

४ शकारमापद्यते D. E.

५ षकारमापद्यते D. E.

६ वा समुच्चये F.

## ते थे वा सम् ॥३॥

विसर्जनीयस्ते वा थे वा परे समापद्यते[१]। कस्तरति। कस्थुडति[२]॥ कारस्करादय इति संज्ञाशब्दा लोकतः सिद्धाः[३]॥

## कखयोर्जिह्वामूलीयं न वा ॥४॥

विसर्जनीयः कखयोः परयोर्जिह्वामूलीयमापद्यते न वा। कᳵकरोति[४]। कः करोति। कᳵखनति[५]। कः खनति॥

## पफयोरुपध्मानीयं न वा ॥५॥

विसर्जनीयः पफयोः परयोरुपध्मानीयमापद्यते न वा। कᳶपचति[६]। कः पचति। कᳶफलति[७]। कः फलति॥ व्यवस्थितविभाषयाघोषे शित्परे न शादयः। पुरुषः त्सरुकः[८]। वासः चौमम्। अद्भिः प्सातम्॥

## शे षे से वा वा पररूपम् ॥६॥

विसर्जनीयः शे वा षे वा से वा परे पररूपमापद्यते न वा[९]। कश्शेते। कः शेते। कष्षण्डः। कः षण्डः। कस्साधुः। कः साधुः॥

---

१ सकारमापद्यते D. E.
२ कस्थुलति। D.; कस्थूडति A.B.F.
३ कारस्कारादय° A. B.; D. om. इति।; कारस्करादयः। संज्ञाशब्दा इव तद्धिता लोकतः सिद्धाः। E.
४ कष्करोति D.; कᳵकरोति E.
५ कष्खनति D.; कᳵखनति E.
६ कप्पचति D.; कःपचति F.; कᳶपचति E.
७ कप्फलति D.; कःफलति F.; कᳶफलति E.
८ पुरुषत्सरुकः A.
९ B. om. न वा; C. E. om. न.

चटतानित्यकरणाद्[१] विसर्जनीयादेशस्याघोषे प्रथमो न स्यात् । कश्चरतीत्यादिष्वप्येवम् ॥

**उमकारयोर्मध्ये ॥ ७ ॥**

द्वयोरकारयोर्मध्ये विसर्जनीय उमापद्यते । कोऽत्र । कोऽर्थः ॥ पुनरत्रेति रप्रकृतिः [का° १. ५. १४] इति परत्वाद्रेफः[२] स्यात् ॥

**अघोषवतोश्च ॥ ८ ॥**

अकारघोषवतोर्मध्ये विसर्जनीय उमापद्यते । को गच्छति । को धावति । अघोषवतोरिति किम् । कः शेते ॥

**अपरो लोप्योऽन्यस्वरे यं वा ॥ ९ ॥**

अकारात्परो विसर्जनीयो लोप्यो भवति । उक्तादन्यस्वरे । यं वापद्यते । क इह । कयिह । क उपरि । कयुपरि ॥ अपर इति किम् । अग्निरत्र ॥ वात्र समुच्चये । ईषत्स्पृष्टतरो[३] ऽत्र[४] यकारः[५] ॥

**आभोभ्यामेवमेव स्वरे ॥ १० ॥**

आकारभोशब्दाभ्यां परो विसर्जनीय एवमेव भवति स्वरे परे । देवा आहुः । देवायाहुः । भो अत्र । भोयत्र ॥ भो इत्यामन्त्रणौकारोपलक्षणं केचित् । भगो अत्र[६] । भगोयत्र । अघो

१ चटता इत्य° D. E.
२ रप्रकृतिपरत्वाद्रेफः D.
३ ईषत्पृष्टतरो A. B. F.
४ (ऽ)यं D.
५ यकार इति । F.
६ भगोऽत्र D.

अत्र[१]। अघोयत्र॥ आदीषत्स्पृष्टतरश्चौकारादीषत्स्पृष्टतरो[२]ऽत्र[३] यकारः। एवमेवग्रहणं नित्यलोपनिरासार्थम्[४]॥

घोषवति लोपम् ॥११॥

आकारभोशब्दाभ्यां परो विसर्जनीयो लोपमापद्यते घोषवति परे। देवा गताः। भो यासि। भगो व्रज। अघो यज॥ लोपग्रहणं यं वेति निवृत्त्यर्थम्॥

नामिपरो रम् ॥१२॥

नामिनः परो विसर्जनीयो रमापद्यते। निरपेक्षः[५]। सुपीः। सुढः। ईकारर्थं[६] वचनमिदम्॥

घोषवत्स्वरपरः ॥१३॥

नामिनः परो विसर्जनीयो घोषवत्स्वरपरो रमापद्यते। अग्निर्गच्छति। अग्निरत्र। पटुर्वदति। पटुरत्र॥ घोषवत्स्वरपर इति किम्। अग्निः शेते[७]॥

रप्रकृतिरनामिपरोऽपि ॥१४॥

रेफप्रकृतिर्विसर्जनीयो नामिनः परोऽनामिनः परोऽपि[८]

---

१ अघोऽत्र A. B. and orig. F.
२ ईषत्पृष्टतरो A. B. F.
३ ऽयं D.; एव E. F.
४ नित्यमतलोप॰ D.
५ निरुपेक्षः A.
६ इकारर्थं A. C.
७ A. B. om. from घोषवत्स्वर॰
८ नामिपरो (ऽ)प्यनामिनो ऽपि D.; नामिपरोऽप्यनामिपरो E.

घोषवत्स्वरपरोऽघोषवत्स्वरपरोऽपि[१] रमापद्यते । गीर्पतिः । गोःपतिर्वा । धूर्पतिः । धूःपतिर्वा ॥ स्वरघोषवतोर्नित्यम् । पितरत्र । पितर्यातः ॥ अरेफप्रकृतिरपि । हे प्रचेता राजन् । हे प्रचेतो राजन्निति वा[२] । उषर्बुधः ॥ अह्नोऽरेफे । अहर्पतिः । अहर्गणः । अहरत्र ॥ रेफे तु । अहोरात्रम् । अहोरूपम् । अहोरथन्तरं साम[३] ॥

## एषसपरो व्यञ्जने लोप्यः ॥१५॥

एषसाभ्यां परो विसर्जनीयो लोप्यो भवति व्यञ्जने परे । एष चरति । स टीकते । एष शेते[४] । स पचति । परत्वात्पूर्वान्बाधते[५] । अप्यधिकारात्स्वरूपग्रहणाद्वा । एषकः करोति । सकः करोति । अनेषो[६] गच्छति । असो गच्छति[७] । अकि नञ्समासे[८] न स्यात् ॥

## न विसर्जनीयलोपे पुनः सन्धिः ॥१६॥

विसर्जनीयलोपे कृते पुनः सन्धिर्न भवति । अन्यलोपे तु भवत्येव । क इह । देवा आहुः । भो अत्र[९] ॥ विसर्जनीयाधिकारे पुनर्विसर्जनीयग्रहणमुत्तरत्र विसर्जनीयाधिकारनिवृत्त्यर्थम् । तेन । एष च्छात्रेण[१०] । द्विर्भावः सिद्धः ॥

---

१ ऽप्यघोषवत्स्वरोऽपि D.; ऽप्यघोषवत्स्वरपरो E.
२ E. adds उषसो बुधे ।
३ रथान्तरं° A. B.; D. E. om. from अहोरूपम्°
४ Om. F.
५ Om. B.; परत्वात्पूर्वान्विधीन्बाधते D. E.
६ अनेषको D.
७ धावति । D.
८ D. adds च.
९ D. om. from क इह.
१० छत्रेण E.

## रो रे लोपं स्वरश्च पूर्वो दीर्घः ॥१७॥

रो रे परे लोपमापद्यते। पूर्वो(१) दीर्घो भवति(२)। अग्नी रथेन। पुना रात्रिः। उच्चै रौति(३)॥

## द्विर्भावं स्वरपरश्छकारः ॥१८॥

स्वरात्परश्छकारो द्विर्भावमापद्यते। वृक्षच्छाया। इच्छति॥ अप्यधिकाराद्दीर्घात्पदान्ताद्वा। कुटीच्छाया। कुटीछाया॥ आङ्माभ्यां नित्यम्। आच्छाया। मा च्छिदत्॥

॥ इति दौर्गसिंह्यां वृत्तौ सन्धौ पञ्चमः पादः समाप्तः॥

---

॥ अथ नाम्नि चतुष्टयम्॥

## धातुविभक्तिवर्जमर्थवल्लिङ्गम् ॥१॥

अर्थोऽभिधेयम्(४)। धातुविभक्तिवर्जमर्थवल्लिङ्गसंज्ञं भवति। वृक्षः। कुण्डम्। कुमारी। डित्थः(५)। राजपुरुषः। औपगवः। कारकः॥ धातुविभक्तिवर्जमिति किम्। अहन्। वृक्षान्॥ अर्थवदिति किम्। वृक्ष इति वृक्षकषामेकैकशो(६) मा भूत्(७)। राज-

---

१ स्वरश्च पूर्वो D. E.
२ E. adds आंतरतम्यात्।
३ रौति मयूरः D. E.
४ ऽभिधेयः। D. E.
५ D. adds डवित्थः।; E. दिवित्थः।
६ वरकषाणामेकैकशो E.
७ लिङ्गसंज्ञा मा भूत्। तथा राज० D. E.

नित्युमन्तवचनस्य च ॥ लिङ्गप्रदेशाः। लिङ्गान्तनकारस्य [का॰ २. ३. ५६] इत्येवमादयः ॥

### तस्मात्परा विभक्तयः[१] ॥२॥

तस्मादर्थवतो लिङ्गात्पराः[२] स्यादयो विभक्तयो भवन्ति। सि औ जस्। अम् औ शस्। टा भ्याम् भिस्॥ ङे भ्याम् भ्यस्। ङसि भ्याम् भ्यस्। ङस् ओस् आम्। ङि ओस् सुप्॥ दृशत्[३]। दृशद् दृशदौ दृशदः। दृशदम् दृशदौ दृशदः। दृशदा। दृशद्भ्याम्। दृशद्भिरित्यादि[४]॥ एवं कुमारी कुमार्यौ कुमार्यः। खट्वा खट्वे खट्वाः॥ अर्थस्य विभञ्जनाद्विभक्तय इति[५]॥

### पञ्चादौ घुट् ॥३॥

स्यादीनामादौ पञ्च वचनानि घुट्संज्ञकानि[६] भवन्ति। सि औ जस्। अम् औ[७]॥ घुट्प्रदेशाः। घुटि चासंबुद्धौ [का॰ २. २. १७] इत्येवमादयः॥

### जस्शसौ नपुंसके ॥४॥

नपुंसकलिङ्गे जस्शसौ घुट्संज्ञकौ भवतः। सामानि तिष्ठन्ति।

---

१ S. adds here the terminations सि—सुप्।
२ तस्माल्लिङ्गात्पराः A.
३ D. E. write दृषत्॰ throughout.
४ D. E. add the remaining forms of दृषद्, viz. दृषदे॰
५ विभक्तय उच्यन्ते॥ D. E.
६ स्यादीनां विभक्तीनामादौ पंच वचनानि घुट्संज्ञानि E.
७ E. adds the corresponding cases of राजन्.

सामानि पश्य ॥ नपुंसके जसेव(१) घुडिति नियमाद् वारिणी। जतुनी(२) ॥

## आमन्त्रिते सिः संबुद्धिः ॥५॥

सिद्धस्याभिमुख्यकरणमामन्त्रितम्(३) । तस्मिन्नर्थे विहितः सिः(४) संबुद्धिसंज्ञो भवति । हे अम्ब । हे वृक्ष(५) ॥ संबुद्धिप्रदेशाः । संबुद्धौ च [का० २. १. ३८] इत्येवमादयः ॥

## आगम उदनुबन्धः स्वरादन्त्यात्परः ॥६॥

प्रकृतिप्रत्यययोरनुपघाती । आगमः(६) ॥ आगम उदनुबन्धो ऽन्त्यात्स्वरात्परः(७) परिभाष्यते । पद्मानि । पयांसि ॥ आगम इति किम् । विद्युत्वान् ॥ उदनुबन्ध आगमस्य लिङ्गम् ॥

## तृतीयादौ तु परादिः ॥७॥

आगम उदनुबन्धस्तृतीयादौ विभक्तौ परादिर्भवति । सर्वस्मै । सर्वेषाम् । वृक्षाणाम् ॥ तुशब्दस्तृतीयाद्यधिकारनिवृत्त्यर्थः(८) ॥

## इदुदग्निः ॥८॥

इकार उकारश्चाग्निसंज्ञो भवति । अग्निम् । पटुम् ॥ इदुदिति किम् । सेनान्यम् । यवल्वम् ॥ अग्निप्रदेशाः । अग्नेरमोऽकारः [का० २. १. ५०] इत्येवमादयः ॥

---

१ नपुंसकलिङ्गे जस्शसेव F.
२ यतुनी A.
३ सिद्धस्याभिख्यं करणम्० D.; सिद्धस्याभिमुखीकरणम्० E.
४ आमन्त्रितेऽर्थे सिः D.
५ हे अङ्क D. E.; D. adds हे अम्ब.
६ आगम उच्यते । D. E.
७ A. om. स्वरात्.
८ तृतीयाधिकार० D. E.

## ईदूत् स्त्र्याख्यौ नदी ॥ ९ ॥

ईदूदित्येवं(१) स्त्र्याख्यौ नदीसंज्ञकौ(२) भवतः । नद्यै । वध्वै ॥ तपरकरणमसंदेहार्थम् ॥ स्त्र्याख्याविति किम् । सेनान्ये । यवल्वे ॥ नदीप्रदेशाः । नद्या ऐ आसासाम् [का° २. १. ४५] इत्येवमादयः ॥

## आ श्रद्धा ॥ १० ॥

आकारो यः स्त्र्याख्यः स श्रद्धासंज्ञो भवति । श्रद्धा(३) । माला ॥ स्त्र्याख्य इति किम् । कीलालपाः ॥ श्रद्धाप्रदेशाः । श्रद्धायाः सिर्लोपम् [का° २. १. ३७] इत्येवमादयः ॥

## अन्त्यात्पूर्व उपधा(४) ॥ ११ ॥

लिङ्गस्य धातोर्वान्त्याद्वर्णाद्यः पूर्वो वर्णः स उपधासंज्ञो भवति । राजन् अकारः । भिद् इकारः । वृत् ऋकारः(५) ॥ उपधाप्रदेशाः । अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु [का° ३. ६. ५] इत्येवमादयः ॥

## व्यञ्जनान्नोऽनुषङ्गः ॥ १२ ॥

लिङ्गस्य धातोर्वान्त्याद्व्यञ्जनाद्यः पूर्वो नकारः सोऽनुषङ्गसंज्ञो भवति । विदुषः । अस्यते(६) ॥ न इति किम् । ऊर्ग्भ्याम् ॥ अनुषङ्गप्रदेशाः । अनुषङ्गस्याक्रुञ्चेत् [का° २. २. ३८] इत्येवमादयः ॥

---

१ ईत ऊत इत्येतौ D.
२ °संज्ञौ D. E. F.
३ D. E. add शाला ।
४ पूर्वोपधा ॥ B.
५ A. adds वृ वकारः ।; D. E. राजा । भेत्ता । वर्तते ।
६ स्रस्यते । F.

धुड् व्यञ्जनमनन्तःस्थानुनासिकम् ॥ १३ ॥

अन्तःस्थानुनासिकवर्जितं व्यञ्जनं धुट्संज्ञं भवति । पयांसि । अपक्त ॥ अन्तःस्थानुनासिकवर्जमिति[१] किम् । चत्वारि । अमंस्त ॥ धुट्प्रदेशाः । धुटश्च धुटि [का० ३. ६. ५१] इत्येवमादयः ॥

अकारो दीर्घं घोषवति ॥ १४ ॥

अकारो लिङ्गान्तो घोषवति विभक्तौ दीर्घमापद्यते । आभ्याम् । वृक्षाय । वृक्षाणाम् ॥ घोषवतीति किम् । वृक्षः ॥

जसि ॥ १५ ॥

अकारो लिङ्गान्तो जसि परे दीर्घमापद्यते । वृक्षाः ॥ अकारे लोपे[२] प्राप्ते वचनम् ॥

शसि सस्य च नः ॥ १६ ॥

अकारो लिङ्गान्तः शसि परे दीर्घमापद्यते । सस्य च नो भवति । वृक्षान्[३] ॥ स्याद्यधिकारः किम् । अल्पशः[४] ॥

अकारे लोपम् ॥ १७ ॥

विभक्तौ लिङ्गस्याकारो लोपमापद्यते । अकारे सामान्ये । वृक्षम् । युष्मत् । यः । सः । उशना ॥

---

१ °अनुनासिकमिति° D. E.
२ अकारलोपे D. E.; see, however, sûtra 17, below.
३ D. E. add सारसान्; E. also देवान्.
४ D. E. add स्तोकशः ।

**भिसैस् वा ॥१८॥**

अकारान्ताल्लिङ्गात्परो भिस् ऐस् वा भवति । वृक्षैः[1] ॥ वाशब्दः पक्षान्तरं सूचयति[2] । एस् ऐस् वा ॥ ऐस्करणादतिजरसैरिति केचित् ॥

**धुटि बहुत्वे त्वे ॥१९॥**

अकारो लिङ्गान्तो बहुत्वे धुति परे एकारो भवति । एषु । वृक्षेभ्यः । परत्वादेत्वं स्यात् ॥ धुटीति किम् । वृक्षाणाम् ॥ तुशब्दो विभाषानिवृत्त्यर्थः ॥

**ओसि च ॥२०॥**

अकारो लिङ्गान्त ओसि परे एकारो भवति । वृक्षयोः[1] ॥

**ङसिरात् ॥२१॥**

अकारान्ताल्लिङ्गात्परो ङसिर् आद् भवति । वृक्षात्[1] ॥ दीर्घोच्चारणादतिजरसात्[3] ॥

**ङस् स्य ॥२२॥**

अकारान्ताल्लिङ्गात्परो ङस् स्यो भवति । वृक्षस्य[1] ॥

**इन टा ॥२३॥**

अकारान्ताल्लिङ्गात्परष्टा इनो भवति[4] । वृक्षेण[1] । टेनेति

---

१ D. E. add the corresponding forms of देव viz. देवैः ।

२ तेन ऐस् D.; E. omits ऐस् वा ।

३ D. adds इति केचित् ।

४ परस्य टावचनस्य इनादेशो भवति । D. E.

सिद्धे इनोच्चारणमग्रत इन एव(१)। तेन। अतिजरसिन कुलेन॥ पृथग्योगो बालावबोधनार्थः(२)॥

ङेर्यः(३) ॥२४॥

अकारान्ताल्लिङ्गात्परस्य ङेवचनस्य य आदेशो भवति। वृक्षाय॥

स्मै सर्वनाम्नः ॥२५॥

अकारान्तात्सर्वनाम्नो लिङ्गात्परस्य ङेवचनस्य स्मैर्भवति(४)। सर्वस्मै। विश्वस्मै॥ सर्वेषां नामेति किम्। विश्वो नाम कश्चित्(५)। विश्वमतिक्रान्ताय विश्वाय(६)। अतिविश्वाय॥ तीयाद्वा वक्तव्यम्। द्वितीयस्मै। द्वितीयाय। तृतीयस्मै। तृतीयाय॥ किं तत्सर्वनाम। सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम(७) त्वत् त्व नेम सम सिम पूर्वापरावर दक्षिणोत्तरपराधराणि(८)॥ व्यवस्थायामसंज्ञायाम्॥ स्वमज्ञातिधनाख्यायाम्॥ अन्तरं बहिर्योगोपसंव्यानयोः॥ त्वत्। त्यद् तद् यद् एतद् अदस् इदम् किम् एक द्वि(९) युष्मद् अस्मद् भवन्तः(१०)॥

---

१ इन एव यथा स्यात्। D. E.
२ ०बोधार्थः। F.
३ ङे यः। D. E.
४ स्मैरादेशो भवति D. E.
५ विश्वनाम कश्चित् A. B. D.
६ विश्वमतिक्रान्तः। विश्वाय। A. B. F.; विश्वमतिक्रान्तः। कश्चित्। असौ विश्व अतिविश्व। तस्मै विश्वाय। अति० E.
७ कतर। कतम। E.
८ पूर्वपरावरदक्षिणोत्तरापराधराणि। D. E.
९ यद् अदस् इदम् एतद् एक किम् द्वि D. E.
१० भवतः F.; भवन्तु A. B.

ङसिः स्मात् ॥ २६ ॥

अकारान्तात्सर्वनाम्नो लिङ्गात्परो ङसिः स्माद्भवति । सर्व-स्मात् । विश्वस्मात् ॥ अकारान्तादिति किम् । भवतः ॥

ङिः स्मिन् ॥ २७ ॥

अकारान्तात्सर्वनाम्नो लिङ्गात्परो ङिः स्मिन्भवति । सर्व-स्मिन् । विश्वस्मिन् ॥ सर्वेषां नामेति किम् । समे देशे यजति ॥

विभाष्येते पूर्वादेः ॥ २८ ॥

पूर्वादेर्गणात्परयोर्ङसिङ्योः(१) स्थाने स्मात्स्मिनौ विभाष्येते प्राप्ते विभाषा । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे ॥ तीयाद्वा वक्तव्यम् । द्वितीयस्मात् । द्वितीयात् । द्वितीयस्मिन् । द्वितीये । तृतीयस्मात् । तृतीयात् । तृतीयस्मिन् । तृतीये ॥

सुरामि सर्वतः ॥ २९ ॥

अकारान्तात्सर्वनाम्नो लिङ्गात्सर्वत आमि परे सुरागमो भवति । सर्वेषाम् । विश्वेषाम्(२) । यासाम् । तासाम् ॥ उकारः परादित्वार्थः(३) ॥ प्रतिपदोक्तग्रहणात् । लाम् । युवाम् ॥

जस् सर्व इः ॥ ३० ॥

अकारान्तात्सर्वनाम्नो लिङ्गात्परो जस् सर्व इर्भवति । सर्वे । विश्वे ॥ अकारान्तादिति किम् । सर्वाः ॥

---

१ पूर्वादेर्गणादकारान्तात्परयोः D.

२ E. adds सर्वतोग्रहणादाकारान्तादपि स्मात् । सर्वासाम् ।

३ परादित्वर्थः । B.

## अल्पादेर्वा ॥३१॥

अल्पादेर्गणात्परो[१] जस् सर्व इर्भवति वा । अल्पे । अल्पाः । प्रथमे । प्रथमाः ॥ उभय इति नित्यं भाषायाम् ॥ अल्प प्रथम चरम तय अय कतिपय नेम अर्ध पूर्वादयश्च ॥

## द्वन्द्वस्थाच्च ॥३२॥

द्वन्द्वस्थाच्च सर्वनाम्नो लिङ्गादकारान्तात्परो[२] जस् सर्व इर्भवति वा । कतरकतमे । कतरकतमाः । द्वन्द्वकतमे । द्वन्द्वकतमाः[३] ॥

## नान्यत्सार्वनामिकम् ॥३३॥

चकारोऽनुवर्तते[४]। द्वन्द्वस्थस्य सर्वनाम्नो लिङ्गस्योक्तमन्यच्च सार्वनामिकं कार्यं न भवति । पूर्वापराय । पूर्वापरात् । दक्षिणोत्तरपूर्वाणाम् ॥

## तृतीयासमासे च ॥३४॥

तृतीयायाः समासेऽसमासे चोक्तमन्यच्च सार्वनामिकं कार्यं न भवति । मासेन पूर्वाय । मासपूर्वाय । मासेनावराः । मासावराः ॥ अतत्वात्सर्वनाम्नैव समास इह स्यादक् । त्वयकाकृतम् । मयकाकृतम् ॥

---

१ अल्पादेर्गणाल्लिङ्गादकारान्तात्परो D.

२ लिङ्गात्परो F.

३ दन्तकतमे । दन्तकतमाः ॥ D. E.

४ D. om. च.

बहुव्रीहौ ॥३५॥

बहुव्रीहौ समासे(१) सार्वनामिकं कार्यं न भवति । त्वत्कपितृको मत्कपितृकः । अक् न स्यात् ॥ वस्त्रान्तरवसनान्तराः । अप्रधानादेव द्वन्द्वस्थाच्च [का० २. १. ३२] इति वा न स्यात् ॥

दिशां वा ॥३६॥

दिशां बहुव्रीहौ समासे(१) सार्वनामिकं कार्यं न भवति वा । उत्तरपूर्वस्यै । उत्तरपूर्वायै ॥ दिशां बहुव्रीहाविति किम् । दक्षिणपूर्वायै मुग्धायै ॥

श्रद्धायाः सिर्लोपम् ॥ ३७ ॥

श्रद्धासंज्ञकात्परः सिर्लोपमापद्यते । श्रद्धा(२) । माला ॥ श्रद्धाया इति(३) किम् । कीलालपाः(४) ॥ सिरदिति कृते(५) जरा जरस् स्यात् ॥

टौसोरे ॥ ३८ ॥

टौसोः परयोः श्रद्धाया एत्वं भवति । तुलया । तुलयोः ॥

संबुद्धौ च ॥ ३९ ॥

श्रद्धायाः संबुद्धौ चैत्वं(६) भवति । हे श्रद्धे(२) । हे माले ॥

---

१ D. E. add उक्तमन्यच्च.
२ D. E. add the corresponding cases of शाला.
३ श्रद्धा इति E.
४ सोमपाः । D. E.
५ सिरत्कृते D. E.
६ E. omits च.

## ह्रस्वोऽम्बार्थानाम् ॥ ४० ॥

अम्बार्थानां श्रद्धासंजकानां संवुद्धौ ह्रस्वो भवति। हे अम्ब। हे अक्क[१] ॥ अदम्बार्थानामिति सिद्धे ह्रस्व इति संज्ञापूर्वकत्वात्सुखार्थम् ॥[२] वक्रस्वरत्वाड् डलकवतां[३] न स्यात्। हे अम्बाडे। हे अम्बाले। हे अम्बिके ॥

## औरीम्[४] ॥ ४१ ॥

श्रद्धायाः पर औरीमापद्यते[५]। श्रद्धे[६]। माले ॥ दीर्घः किम्। जरसी इति[७] केचित्।

## ङवन्ति यै यास् यास् याम् ॥ ४२ ॥

श्रद्धायाः पराणि ङवन्ति वचनानि यै यास् यास् यामिति यथासंख्यं भवन्ति। मालायै। मालायाः। मालायाः। मालायाम्[८] ॥

## सर्वनाम्नस्तु ससवो ह्रस्वपूर्वाश्च ॥ ४३ ॥

सर्वनाम्नः श्रद्धायाः पराणि ङवन्ति वचनानि यै यास् यास् यामिति यथासंख्यं सह सुना भवन्ति। ह्रस्वपूर्वाश्च। उदनुबन्धः[९] परादित्वार्थः। सर्वस्यै। सर्वस्याः। सर्वस्याः। सर्वस्याम् ॥ तुशब्दः स्यागमाधिकारनिवृत्त्यर्थः ॥

---

१ D. adds हे अल्ल।
२ तेन वक्र० E.
३ डलिकवतां D. E.
४ औरिम् ॥ A. E.
५ श्रद्धासंज्ञकात्परः औरिमा० E.
६ See Note २ p. ३३.
७ जरसीति E.
८ A. (and B. marg.) gives the forms of श्रद्धा instead.
९ उकारः D. E.

**द्वितीयातृतीयाभ्यां वा ॥ ४४ ॥**

अप्राप्ते विभाषा। द्वितीयातृतीयाभ्यां पराणि ङवन्ति वचनानि यै यास् यास् यामिति यथासंख्यं सह सुना भवन्ति ह्रस्वपूर्वाश्च वा। द्वितीयस्यै। द्वितीयायै। तृतीयस्यै। तृतीयायै[१]॥ तीयाद्वेति सिद्धे द्वितीयातृतीयाभ्यामिति स्पष्टार्थम्॥

**नद्या ऐ आस् आस् आम्[२] ॥ ४५ ॥**

नदीसंज्ञकात्पराणि[३] ङवन्ति वचनानि ऐ। आस्। आस्। आमिति यथासंख्यं भवन्ति। वा न स्मर्यते। नद्यै। नद्याः। नद्याः। नद्याम्। वध्वै। वध्वाः। वध्वाः। वध्वाम्॥

**संबुद्धौ ह्रस्वः ॥ ४६ ॥**

नद्याः संबुद्धौ ह्रस्वो भवति। हे नदि। हे वधु॥ नद्या इति किम्। हे ग्रामणीः। हे खलपूः॥

**अमृशसोरादिर्लोपम् ॥ ४७ ॥**

नद्याः परयोरम्शसोरादिर्लोपमापद्यते। नदीम्। नदीः। वधूम्। वधूः।

**ईकारान्तात्सिः ॥ ४८ ॥**

नदीसंज्ञकेकारान्तात्परः[४] सिर्लोपमापद्यते। नदी। मही[५]॥ ईकारोऽन्तो यस्मादिति[६] किम्। लक्ष्मीः॥

---

१ D. adds the remaining two forms of each word.

२ आसासामां E.

३ नद्याः पराणि E.

४ नदीसंज्ञकादीकारान्तात्० E.

५ E. adds मषी। लषी।

६ यस्माल्लिङ्गादिति D. E.

**व्यञ्जनाच्च ॥ ४९ ॥**

व्यञ्जनसंज्ञकात्परः सिर्लोपमापद्यते । वाक् । तडित्[१] ॥ संयोगान्तलोपे सिद्धं चेद् नादेर्धुटो[२] लोपः स्यात् ॥ लिङ्गं चानुवर्तते ॥

**अग्नेरमोऽकारः ॥ ५० ॥**

अग्निसंज्ञकात्परोऽमोऽकारो लोपमापद्यते । अग्निम् । पटुम् ॥ बुद्धिम्[३] । धेनुम्[३] ॥

**औकारः पूर्वम् ॥ ५१ ॥**

अग्नेः पर[४]औकारः पूर्वस्वरमापद्यते । अग्नी । पटू । बुद्धी । धेनू ॥

**शसोऽकारः सश्च नोऽस्त्रियाम् ॥ ५२ ॥**

अग्नेः परः शसोऽकारः पूर्वस्वरमापद्यते । सश्च नो भवति । अस्त्रियाम् । अग्नीन् । पटून् ॥ अस्त्रियामिति किम् । बुद्धीः । धेनूः ॥

**टा ना ॥ ५३ ॥**

अग्नेः परस्य टावचनस्य नादेशो भवति । अस्त्रियाम् । अग्निना । पटुना ॥ अस्त्रियामिति किम् । बुद्ध्या । धेन्वा ॥

---

१ D. E. add योषित् ।
२ चेत् । तन्न । आदि॰ D. E.
३ Om. A. E. F.
४ अग्निसंज्ञकात्परः E.

## अदोऽमुश्च ॥ ५४ ॥

अदसोऽमुरादेशो भवति । टावचनस्य च नादेशः । अस्त्रियाम् । अमुना ॥ अस्त्रियामिति किम् । अमुया ॥

## इरेदुरोज्जसि ॥ ५५ ॥

लिङ्गस्य(१) इरेद् भवति । उरोच्च(२) । जसि परे । अग्नयः । पटवः । बुद्धयः । धेनवः ॥

## संबुद्धौ च ॥ ५६ ॥

संबुद्धौ च लिङ्गस्य इरेद्भवति(३) । उरोच्च(२) । हे अग्ने । हे धेनो ॥ अग्नेः संबुद्धावित्येके(४) । हे नदि । हे वधु ॥

## ङे ॥ ५७ ॥

ङयि परतो लिङ्गस्य(५) इरेद्भवति । उरोच्च(२) । अग्नये । पटवे । बुद्धये । धेनवे ॥ ङे इत्यविकृतनिर्देशात् । बुद्ध्यै । धेन्वै ॥

## ङसिङसोरलोपश्च ॥ ५८ ॥

अग्नेः(६) परस्य ङसिङसोरकारस्य लोपो भवति । इरेद्भवति(७) । उरोच्च(८) । अग्नेः । अग्नेः । धेनोः । धेनोः ॥

---

१ अग्निसंज्ञकस्य लिङ्गस्य D.
२ उरोद्भवति । D. E.
३ Om. E.; अग्निसंज्ञकस्य लिङ्गस्य संबुद्धौ च इर° D.
४ संबुद्धाविति किम् । D.
५ Om. D. E.
६ Om. E.; अग्निसंज्ञकात्परयोः E.
७ लिङ्गस्य इर° A.
८ D. E. add भवति.

गोश्च ॥ ५९ ॥

गोशब्दात्परस्य ङसिङसोरस्य[1] लोपो भवति। गोः। गोः॥

ङिरौ सपूर्वः ॥ ६० ॥

अग्निसंज्ञकात्परो ङिः सह पूर्वेण स्वरेण और्भवति। अग्नौ। धेनौ ॥

सखिपत्योर्ङिः ॥ ६१ ॥

सखिपतिभ्यां परो ङिरौर्भवति[2]। सख्यौ। पत्यौ ॥ पुनर्ङिग्रहणं सपूर्वनिवृत्त्यर्थम् ॥

ङसिङसोरुमः ॥ ६२ ॥

सखिपतिभ्यां परो ङसिङसोरकार उमापद्यते[3]। सख्युः। सख्युः। पत्युः। पत्युः॥ अग्रहणं यथासंख्यनिवृत्त्यर्थम् ॥

ऋदन्तात्सपूर्वः ॥ ६३ ॥

ऋदन्ताल्लिङ्गात्परो[4] ङसिङसोरकार उमापद्यते सह पूर्वेण स्वरेण। पितुः। पितुः। मातुः। मातुः॥ ऋदन्तादिति किम्। स्त्रो धातोः[5] ॥

---

१ °अकारस्य F.; गोशब्दाच्च परयोर्ङसिङसोरकारस्य E.
२ सखिपत्योर्ङिरेव और्भवति E.
३ °परयोर्ङसिङसोर उमापद्यते E.
४ °परयोर् E.; °लिङ्गसंज्ञात्परो F.
५ स्त्रोः धातोः B.

**आ सौ सिलोपश्च ॥ ६४ ॥**

ऋदन्तस्य लिङ्गस्य आ भवति सौ परे सिलोपश्च । पिता । माता ॥

**अग्निवच्छसि ॥ ६५ ॥**

ऋदन्तस्य लिङ्गस्याग्निवद्भवति शसि परे । पितॄन्(१) ॥ तत्रा-स्त्रियामिति प्रतिषेधात् । मातॄः(२) ॥

**अर्ङौ ॥ ६६ ॥**

ऋदन्तस्य लिङ्गस्य अर्भवति ङौ परे । पितरि । मातरि ।(३) योगविभागात् । पितरस्तर्पयामास ॥

**घुटि च ॥ ६७ ॥**

ऋदन्तस्य लिङ्गस्य अर्भवति घुटि परे । पितरौ । पितरः ॥ घुटीति किम् । पितॄन्(४) । पृथग्योग उत्तरार्थः ॥

**धातोस्तृशब्दस्यार्(५) ॥ ६८ ॥**

धातोर्विहितस्य तृशब्दस्य(६) ऋत आर्भवति घुटि परे । अरो ऽपवादः । कर्तारौ । कर्तारः ॥ धातोर्विहितस्येति किम् । यातरौ । यातरः । यत ऋन्दीर्घश्च(७) ॥ तृशब्दस्येति किम् । ननान्दरौ ।

---

१ D. adds कर्तॄन् ।
२ E. adds कार्यातिदेशो ऽयं ।
३ अर्ङाविति योग० D.
४ D. E. om. from घुटीति०
५ ०शब्दस्यारः । B.
६ Om. A. D.; स्तृशब्दस्य B.
७ यतेर्ऋन् दीर्घश्च । E.; यतोर्ऋया दीर्घश्च । F.

ननान्दरः। नप्ति च नन्दे:[१]॥ क्रुशेस्तुन् घुटि स्त्रियां च नाम्यौणादिकत्वात्। क्रोष्टा। क्रोष्ट्री[२]। तृचा सिद्धम्। प्रसादौ तु[३] तृजन्तस्य तुनन्तस्य च प्रयोगः। क्रोष्टॄन्। क्रोष्टून्। क्रोष्ट्रा। क्रोष्टुना। इत्येवमादयः॥

## स्वस्रादीनां च[४] ॥ ६९ ॥

स्वस्रादीनां च[५] ऋत आर्भवति घुटि परे। स्वसारौ। नप्तारौ॥

स्वसा नप्ता च नेष्टा च त्वष्टा चत्ता[६] तथैव च।
होता पोता प्रशास्ता[७] च अष्टौ स्वस्रादयः स्मृताः॥

## आ च न संबुद्धौ ॥ ७० ॥

ऋदन्तस्य लिङ्गस्य संबुद्धावार आ च न भवति। अर्थादरेव। हे कर्तः। हे स्वसः॥

## ह्रस्वनदीश्रद्धाभ्यः सिर्लोपम् ॥ ७१ ॥

ह्रस्वनदीश्रद्धाभ्यः परः संबुद्धिः सिर्लोपमापद्यते। हे वृक्ष। हे अग्ने। हे धेनो। हे नदि। हे वधु। हे श्रद्धे[८]। हे माले॥ संबुद्धिरिति[९] किम्। वृक्षः॥ नदीश्रद्धाग्रहणमुत्तरार्थमिहार्थं च॥

---

१ °नंदेर्ऋत्न दीर्घस्य। E.; नप्ति च नन्दे ऋणदीर्घस्य॥ D.
२ क्रोष्टारौ। D.
३ B. adds स्वरो पि.
४ स्वश्र° स्वस्र° B. F. throughout.
५ D. adds लिङ्गानां च.
६ चेत्ता A. B.
७ प्रशस्ता A. B.
८ D. E. add हे शाले।
९ संबुद्धाविति F.

**आमि च नुः ॥ ७२ ॥**

ह्रस्वनदीश्रद्धाभ्यः पर[१] आमि परे नुरागमो भवति। वृक्षाणाम्। अग्नीनाम्। धेनूनाम्[१]। नदीनाम्। वधूनाम्। श्रद्धानाम्। मालानाम्॥ श्रद्धासहचरितस्यामो ग्रहणाद्वा। नद्याम्। युवाम्॥

**त्रेस्त्रयश्च ॥ ७३ ॥**

त्रेस्त्रयादेशो भवति नुरागमश्च। आमि परे। त्रयाणाम्। परमत्रयाणाम्॥

**चतुरः ॥ ७४ ॥**

चत्वार् इत्येतस्य आमि परे नुरागमो भवति। चतुर्णाम्[२]॥ अप्रधानादेव। अतिचतुराम्॥

**संख्यायाः ष्णान्तायाः[३] ॥ ७५ ॥**

संख्यायाः षकारनकारान्ताया[४] आमि[५] परे नुरागमो भवति। षण्णाम्। पञ्चानाम्[६]॥ अन्तग्रहणाद्भूतपूर्वनान्ताया अपि[७]। अष्टानाम्॥ संख्याया इति किम्। विप्रुषाम्। यज्वनाम्॥

---

१ Om. D. F.
२ D. E. add परमचतुर्णाम्।
३ स्नान्तायाः B.; ष्णान्तायाः E. F.
४ सकार° B.
५ °कारान्तायाश्चामि A. B.
६ D. E. add सप्तानाम्।
७ °नान्ता अपि D.

**कतेश्च जस्शसोर्लुक् ॥ ७६ ॥**

कतेः संख्याया षकारनकारान्तायाश्च[१] जस्शसोर्लुग्भवति। कति । कति । षट् । षट् । पञ्च । पञ्च ॥

**नियो ङिराम् ॥ ७७ ॥**

नियः परो ङिराम्[२] भवति । नियाम् । ग्रामण्याम् ॥

॥ इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये प्रथमः पादः समाप्तः[३]॥

---

**न सखिष्टादावग्निः ॥ १ ॥**

सखिस्थः सखिष्टादौ[४] स्वरे नाग्निर्भवति । सख्या । सख्ये ॥

**पतिरसमासे ॥ २ ॥**

पतिस्थः पतिष्टादौ[५] स्वरे नाग्निर्भवति । असमासे । पत्या । पत्ये ॥ असमास इति किम् । नरपतिना[६] ॥

**स्त्री नदीवत् ॥ ३ ॥**

स्त्रीशब्दो नदीवद्भवति विभक्तौ । हे स्त्रि । स्त्रियै । स्त्रीणाम् ॥ विकल्पमपि बाधते ॥

---

१ सकार० B.; ष्णान्तायाश्च F.; षकारनकारान्तायाश्च परयोस् D. E.

२ ङिरामो B. E.

३ D. E. omit नाम्नि चतुष्टये.

४ सखिशब्दष्टादौ D. E.

५ पतिशब्दादौ D.; पतिशब्दष्टादौ E.

६ D. E. add नरपतये ॥

स्त्र्याख्यावियुवौ वामि ॥ ४ ॥

स्त्र्याख्याविय्युवस्थानावामि[1] परे नदीवद्भवतो वा[2]। श्रीणाम्। श्रियाम्। भ्रूणाम्। भ्रुवाम्॥ स्त्र्याख्याविति किम्। यवक्रियाम्। कटप्रुवाम्॥

ह्रस्वश्च ङवति ॥ ५ ॥

ह्रस्व इदुदेव। स्त्र्याख्याविय्युवस्थानौ च[3] ङवति परे नदीवद्भवतो वा[2]। बुद्ध्यै। बुद्धये। धेन्वै। धेनवे। श्रियै। श्रिये। भ्रुवै। भ्रुवे। पट्व्यै। पटवे॥ स्त्रियै वेति केचित्॥ ङवतीति किम्। हे श्रीः। हे भ्रूः। अप्रसिद्धमुपमेयमिति॥

नपुंसकात्स्यमोर्लोपो न च तदुक्तम् ॥ ६ ॥

नपुंसकलिङ्गात्परयोः[4] स्यमोर्लोपो भवति। तदुक्तं च कार्यं न भवति। पयः। पयः। तत्। तत्। सुसखि। सुसखि॥ नपुंसकादिति किम्। सुपया गौः॥

अकारादसंबुद्धौ मुश्च ॥ ७ ॥

अकारान्तान्नपुंसकलिङ्गात्परयोः स्यमोर्लोपो भवति मुरागमश्च। असंबुद्धौ। कुण्डम्। अतिजरम्॥ असंबुद्धाविति किम्। हे कुण्ड॥

---

१ °स्थानिनौ आमि E.
२ E. om. वा.
३ Om. B. E.; ह्रस्वश्च D.; °स्थानिनौ E.
४ नपुंसकात्प° A. B.

## अन्यादेस्तु तुः ॥ ८ ॥

अन्यादेर्गणान्नपुंसकलिङ्गात्परयोः स्यमोर्लोपो भवति तुरागमश्च(१)। अन्यत्। अन्यतरत्। इतरत्। कतरत्। कतमत्॥ तुशब्दोऽसंबुद्धिनिवृत्त्यर्थः। हे अन्यत्(२)॥

## औरीम् ॥ ९ ॥

सर्वस्मान्नपुंसकलिङ्गात्पर औरीमापद्यते। कुण्डे। पयसी॥

## जस्शसोः शिः(३) ॥ १० ॥

सर्वस्मान्नपुंसकलिङ्गात्परयोर्जस्शसोः स्थाने(४) शिर्भवति(५)। पद्मानि। पयांसि॥

## धुट्स्वराद् घुटि नुः ॥ ११ ॥

धुटः पूर्वः स्वरात्परो नपुंसकलिङ्गस्य घुटि परे नुरागमो भवति। पयांसि। पद्मानि। सुकर्त्तॄणि(६)। सुसखीनि॥ कथं सुकुञ्चि। गोमन्ति। सुवल्गि। धुटो व्यवहितत्वात्॥ गोरङ्क्षीति धुड्जातित्वाददोषः॥ बहूर्जि। बहूर्ञ्जीति वा वक्तव्यम्॥

## नामिनः स्वरे ॥ १२ ॥

नाम्यन्तान्नपुंसकलिङ्गात्स्वरे परे नुरागमो भवति(७)। वारिणा(८)। वारिणे॥ नामिनः स्वर इति किम्। कुलयोः॥

---

१ Om. A.
२ D. adds अन्य। अन्यतरत्। इतरत्। डतर। डतम॥
३ सिः B. D. E.; जस्शसोः शिः। F.
४ Om. E.; स्थानो F.
५ सिर्भवति B. E.
६ Om. F.
७ नुर्भवति। D.
८ वारिणी D. E.; D. adds चतुर्नी.

अस्थिदधिसक्थ्यक्ष्णामनन्तष्टादौ[१] ॥ १३ ॥

नाम्यन्तानां नपुंसकलिङ्गानामस्थ्यादीनां[२] टादौ स्वरे ऽन्तो ऽन् भवति। अस्थ्ना। दध्ना। सक्थ्ना[३]। अक्ष्णा। अत्यस्थ्ना। अतिदध्ना ब्राह्मणेन ॥ अकारोच्चारणं किम्। अस्थ्नि। अस्थनि वा स्यात् ॥

भाषितपुंस्कं पुम्वद्वा ॥ १४ ॥

भाषितपुंस्कं नाम्यन्तं नपुंसकलिङ्गं टादौ स्वरे पुम्वद्भवति वा। कर्त्रा। कर्तृणा कुलेन। मृदवे। मृदुने वस्त्राय ॥ भाषितपुंस्कमिति किम्। वारिणे ॥ नाम्यन्तमिति किम्। सोमपेन कुलेन[४] ॥ नपुंसकमिति किम्। कल्याण्यै ॥ भाषितपुंस्को[५] ऽर्थ इति किम्। पीलुने फलाय ॥

दीर्घमामि सनौ ॥ १५ ॥

नाम्यन्तं लिङ्गं सनावामि परे दीर्घमापद्यते। अग्नीनाम्। धेनूनाम्। कर्तॄणाम् ॥ सनौग्रहणमुत्तरार्थमिह[६] कृते च न्वागमे दीर्घार्थं च ॥

नान्तस्य चोपधायाः ॥ १६ ॥

नान्तस्य लिङ्गस्योपधाया दीर्घो भवति। सनावामि परे। पञ्चानाम्। सप्तानाम् ॥ सनाविति किम्। वर्मणाम्[७] ॥

---

१ °शकथ्य° B. D. F.; स्कथ्य° E.
२ नाम्यन्तान्नपुंसक° B.
३ शकथ्ना B. D. F.
४ Om. D. E.
५ अभाषित° D.
६ इहार्थ E.
७ चर्मणां E., orig. D.

## घुटि चासंबुद्धौ ॥ १७ ॥

नान्तस्य लिङ्गस्योपधाया दीर्घो भवति । घुटि परे । असंबुद्धौ । राजा । राजानौ । सामानि ॥ नान्तस्येति किम् । जनम् । जनौ ॥ असंबुद्धाविति किम् । हे राजन् ॥

## सान्तमहतोर्नोपधायाः ॥ १८ ॥

सान्तमहन्त् इत्येतयोर्नकारस्योपधाया दीर्घो भवति । घुट्यसंबुद्धौ । श्रेयान् । श्रेयांसौ । महान् । महान्तौ ॥ असंबुद्धाविति किम् । हे श्रेयन् । हे महन् ॥ सान्तस्येति किम् । हंसम् । हंसौ ॥ महतः साहचर्याद्(१) धातोर्न स्यात् । सुहिन् । सुहिंसौ ॥

## अपश्च ॥ १९ ॥

अप् इत्येतस्य नोपधाया अनोपधायाश्च दीर्घो भवति । घुट्यसंबुद्धौ । आपः । स्वाम्पि तडागानि ॥ असंबुद्धाविति किम् । हे शुच्यप्(२) ॥

## अन्त्वसन्तस्य चाधातोः सौ(३) ॥ २० ॥

अन्तु । अस्(४) इत्येवमन्तस्याधातोः(५) श्रुतस्यातः(६) सावसंबुद्धौ दीर्घो भवति । भवान् । गोमान् । सुश्रोताः ॥ पुंस्यपि

---

१ महत्साह° D. E.
२ सुच्यप् A. B. D.
३ अन्त्वसन्तस्य धातोः सौ ॥ A.
४ अन्त्व अस D. E.
५ अन्तस्य धातोः A.; अन्तस्य चाधातोः F.
६ श्रुतस्य B.; D. om. श्रुतस्यातः

दीर्घाहो निदाघः(१)॥ अधातोरिति किम्। पिण्डग्रः। चर्मवः॥ असंबुद्धाविति किम्। हे सुश्रोतः॥

इन्हन्पूषार्यम्णां शौ च ॥ २१ ॥

इन्। हन्। पूषन्(२)। अर्यमन्। इत्येतेषामुपधाया दीर्घो भवति। शौ सौ च परे। असंबुद्धौ। सुदण्डीनि। सुवृत्रहाणि। सुपूषाणि। स्वर्यमाणि। दण्डी। वृत्रहा। पूषा। अर्यमा॥ असंबुद्धाविति किम्। हे दण्डिन्॥ शौ सावेवेति नियमात्। दण्डिनौ। वृत्रहणौ। पूषणौ। अर्यमणौ(३)॥ अस्मादेव हन उपधाया दीर्घात्(४) क्विपि न दीर्घः॥

उशनःपुरुदंशोऽनेहसां सावनन्तः॥ २२ ॥

उशनस्। पुरुदंशस्। अनेहस्। इत्येषामन्तोऽन् भवति। सावसंबुद्धौ। उशना। पुरुदंशा। अनेहा॥ असंबुद्धाविति किम्। हे उशनः। हे पुरुदंशः। हे अनेहः॥ कथं(५) हे उशनन्। हे उशन। नञोऽनित्यत्वात्(६)। अकार उत्तरार्थः॥

सख्युश्च ॥ २३ ॥

सख्युरन्तोऽन् भवति। सावसंबुद्धौ। सखा॥ असंबुद्धाविति किम्। हे सखे॥

---

१ निधाघः A.
२ पूषण F.
३ पूषाणौ। अर्यमाणौ E.
४ Om. D. E.
५ Om. A. B.
६ नञानिर्दिष्टस्यानित्यत्वात्। D. E.

घुटि त्वै ॥ २४ ॥

सख्युरन्त ऐर्भवति घुटि परे । सखायौ । सखायः । सखायम् । सखायौ ॥ घुटीति किम् । सखीन् ॥ तुशब्द उत्तरत्रासंबुद्धिनिवृत्त्यर्थः ॥

दिव उद् व्यञ्जने ॥ २५ ॥

दिवो वकारस्य उद् भवति व्यञ्जने परे । द्युभ्याम् । द्युषु(१) । द्युगतः । द्युत्वम् ॥ ये न स्यात् । दिव्यम् ॥

औ सौ ॥ २६ ॥

दिवो वकारस्य और्भवति सौ परे । द्यौः । हे द्यौः ॥

वाम्या ॥ २७ ॥

दिवो वकारस्य आ भवति वा । अमि(२) परे । द्याम् । दिवम् । अतिद्याम् । अतिदिवम् ॥

युजेरसमासे नुर्घुटि ॥ २८ ॥

युजिरः क्विबन्तस्यासमासे(३) नुर्भवति घुटि परे । युङ् । युञ्जौ । युञ्जः ॥ असमास इति किम् । अश्वयुक् ॥

अभ्यस्तादन्तिरनकारः ॥ २९ ॥

इयमभ्यस्तं जक्षादिश्चेति वक्ष्यति ॥ अभ्यस्तात्परोऽन्तिरन-

---

१ D. adds व्यञ्जनमिह सामान्यम् ।

२ आमि B.

३ युजिर्क्विबन्त० E.

कारको भवति घुटि परे । ददत् । दधत् । जक्षत् । जाग्रत् ॥ अभ्यस्तादिति किम् । विहन् ॥

वा नपुंसके ॥ ३० ॥

अभ्यस्तात्परोऽन्तिरनकारको भवति वा । नपुंसके घुटि परे । ददति । ददन्ति[१] । जाग्रति । जाग्रन्ति कुलानि ॥

तुदभादिभ्य ईकारे ॥ ३१ ॥

तुद इत्यदन्तोऽनुक्रियते । तुदभादिभ्यः[२] परोऽन्तिरनकारको भवति वा । ईकारे परे । तुदती । तुदन्ती स्त्री । तुदती । तुदन्ती कुले । भाती । भान्ती स्त्री । भाती । भान्ती कुले ॥ तुदभादिभ्य इति किम् । पचन्ती । दीव्यन्ती ॥

हनेर्हो घिरुपधालोपे ॥ ३२ ॥

हनेरुपधाया लोपे[३] कृते हेः स्थाने घिर्भवति[४] । वृत्रघ्नः । वृत्रघ्ना ॥ उपधालोप इति किम् । वृत्रहयति ॥

गोरौ घुटि ॥ ३३ ॥

गोर्मुख्यस्य औभवति घुटि परे । गौः । गावौ । गावः ॥ गोर्घुटीति किम्[५] । हे चित्रगो । हे चित्रगवः ॥

---

१ D. E. add दधति । दधन्ति [कुलानि E.] । जक्षति । जक्षन्ति [कुलानि E.] ।

२ तुद भा इत्येवमादिभ्यः D. E.

३ °उपधालोपे D.

४ B. adds अघुटस्वरादौ ।

५ गोमुख्यस्येति किम् D. E.

## अम्शसोरा ॥ ३४ ॥

गोशब्दस्यान्त आ भवति । अम्शसोः परयोः । गाम् । गाः ॥ दीर्घः किम् । पुंसि स्त्रियाम् आद् आ न स्यात् ॥

## पन्थिमन्थ्यृभुक्षीणां सौ ॥ ३५ ॥

पथ्यादीनामन्त[१] आ भवति सौ परे । पन्थाः । हे पन्थाः । मन्थाः । हे मन्थाः । ऋभुक्षाः । हे ऋभुक्षाः ॥

## अनन्तो घुटि ॥ ३६ ॥

पथ्यादीनामन्तो[२]ऽन् भवति घुटि परे । पन्थानौ । मन्थानौ । ऋभुक्षाणौ ॥

## अघुट्स्वरे लोपम् ॥ ३७ ॥

पथ्यादीनामन्तो[२]ऽघुट्स्वरे लोपमापद्यते । पथः । पथा । मथः । मथा । ऋभुक्षः । ऋभुक्षा ॥

## व्यञ्जने चैषां निः ॥ ३८ ॥

एषां पथ्यादीनाम्[२] अघुट्स्वरे व्यञ्जने च निर्लोपमापद्यते। पथः। पथिकः। पथयति। मथः। मथिकः। मथयति। पथिभ्याम्। पथित्वम्। मथिभ्याम्। मथित्वम्[३]॥ एषांग्रहणमघुट्स्वरव्यञ्जन-

---

१ पन्थ्यादीनाम० D.
२ पंथ्यादीनाम० E.
३ B. om. from पथिभ्याम्; पथिता। मथिता। D. E.

मात्रे[1] निर्लोपार्थम् । तेन पथिगतः । पथ्युत्तमः । मथिगतः । मथ्युत्तमः ॥

### अनुषङ्गश्चाक्रुञ्चेत् ॥ ३९ ॥

क्रुञ्चश्च । इश्चेति क्रुञ्चेदिति लुप्तविभक्तिकं[2] पदम् ॥ अनुषङ्गसंज्ञको[3] नकारो लोपमापद्यते । अघुट्स्वरव्यञ्जनयोः । क्रुञ्चेरिदनुबन्धस्य च[4] न भवति । विदुषः । विदुषा । विदुषी । वैदुष्यम्[5] । महतः । महता । महद्भ्याम् । महत्सु । महत्ता ॥ अक्रुञ्चेदिति किम् । क्रुञ्चः । क्रुञ्च्याम् । सुकंसः । सुकन्ध्याम् ॥

### पुंसोऽन्शब्दलोपः ॥ ४० ॥

पुमन्स् इत्येतस्य अन्शब्दस्य लोपो भवति । अघुट्स्वरव्यञ्जनयोः । पुंसः । पुंसा । पुंभ्याम्[6] । पुंस्त्वम् । पौंस्नम् ॥ अघुट्स्वरव्यञ्जनयोरिति किम् । पुमांसौ ॥

### चतुरो वाशब्दस्योत्वम् ॥ ४१ ॥

चत्वार् इत्येतस्य वाशब्दस्य उत्वं भवति । अघुट्स्वरव्यञ्जनयोः । चतुरः । चातुरिकः । चतुर्थः । प्रियचतयति । चतुर्भिः । चातुर्यम् ॥

---

१ A. adds च; °व्यञ्जने च F.
२ °इश्च क्रुंचेत् इति° E.; °क्रुञ्चेलुप्त° F.; क्रुञ्च इश्च क्रुञ्चेदिति° D.; क्रुञ्चश्च इश्च क्रुञ्चेल्लुप्त° B.
३ °संज्ञो E.
४ Om. E.
५ Om. A.; वैदुषम् D. E.
६ E. adds पुंसु ।; पुन्सः । पुन्सा । पुंभ्याम् । पुम्भ्याम् । D.

अनडुहश्च ॥ ४२ ॥

अनड्वाह् इत्येतस्य वाशब्दस्य उत्वं भवति । अघुट्स्वरव्यञ्जनयोः । अनडुहः । अनडुहा(१) । आनडुहिकः । अनडुद्भ्याम् । अनडुत्सु(२) । अनडुही । अनड्वाही ॥ स्त्री वेत्येके(३) ॥

सौ नुः ॥ ४३ ॥

अनड्वाह् इत्येतस्य सौ परे नुरागमो भवति । अनड्वान् ॥ साविति किम् । अनड्वाहौ ॥

संबुद्धावुभयोर्ह्रस्वः ॥ ४४ ॥

उभयोश्चतुरनडुहोः संबुद्धौ ह्रस्वो भवति । हे प्रियचत्वः । हे अनड्वन् ॥

अदसः पदे मः ॥ ४५ ॥

अदसः पदे सति दस्य मो भवति विभक्तौ । अमुष्मात् । अमुष्मिन् ॥ विभक्ताविति किम् । अदस्यति । अदस्त्वम् । अदःपुत्रः ॥ अदमुयङ् । अमुद्र्यङ् । अमुमुयङ् । अदद्र्यङ्ङिति वक्तव्यम्(४) ॥

अघुट्स्वरादौ सेट्कस्यापि वन्सेर्वशब्दस्योत्वम् ॥ ४६ ॥

अघुट्स्वरादौ प्रत्यये(५) परे(५) सेट्कस्याप्यसेट्कस्यापि(५) वन्सेर्व-

---

१ Om. D.

२ E. adds आनडुह्यं; F. अनडुत्ता।

३ स्त्री वेति केचित् ॥ D.

४ अदद्र्यङ् ॥ परतः केचिदिच्छन्ति केचिदिच्छन्ति पूर्वतः । उभयोः केचिदिच्छन्ति केचिन्नेच्छन्ति चोभयोः । इति वक्तव्यम् ॥ E. (and D. in the margin.)

५ D. om. प्रत्यये परे; E. om. the first अपि and writes वंसेः

शब्दस्य उत्वं भवति[१]। पेचुषः। पेचुषा। पेचुषी। पैचुषम्[२]।
विदुषः। विदुषा। विदुषी। वैदुषम्॥ ये च वक्तव्यम्। पैचुष्यम्।
वैदुष्यम्॥

श्वयुवमघोनां च॥४७॥

श्वन् युवन् मघवन्। इत्येतेषां वशब्दस्य उत्वं भवति। अघुट्स्वरादौ प्रत्यये[३] परे[३]। शुनः। शुना। शुनी। यूनः। यूना। यूनी। मघोनः। मघोना। मघोनी॥ अप्यधिकारात्। शौवनं मांसम्। यौवनं वर्तते। माघवनः स्थालीपाकः। तद्धिते लक्षतः[४]। उपशुनम्। शुनः संकोचः[५]। शौवः॥

वाहेर्वाशब्दस्यौ॥४८॥

वाहेर्वाशब्दस्यौर्भवति। अघुट्स्वरादौ[६]। प्रष्ठौहः। प्रष्ठौहा। प्रष्ठौही। प्राष्ठौह्यम्॥

अन्चेरलोपः[७] पूर्वस्य च दीर्घः॥४९॥

अञ्चेरकारस्य[७] लोपो भवति पूर्वस्य च दीर्घः। आन्तरतम्यात्। अघुट्स्वरादौ[६]। प्रतीचः। प्रतीचा। प्रतीची। प्रातीच्यम्। गोचः। गोचा। गोची। गौच्यम्॥

---

१ B. adds विभक्तौ।
२ पैचुष्यम D.
३ Om. A. F.
४ लक्षितः। B.
५ शङ्कोचः F.
६ E. adds प्रत्यये परे.
७ अंचेर° E.; अञ्चेर° D.

तिर्यङ् तिरश्चिः ॥ ५० ॥

तिर्यञ्च्[१] इत्ययं[२] तिरश्चिर्भवति। अघुट्स्वरादौ[३]। तिरश्चः। तिरश्चा। तिरश्ची। तैरश्च्यम् ॥

उदङ् उदीचिः ॥ ५१ ॥

उदञ्च् इत्ययम्[२] उदीचिर्भवति। अघुट्स्वरादौ[३]। उदीचः। उदीचा। उदीची। औदीच्यम् ॥

पात्पदं समासान्तः ॥ ५२ ॥

समासस्यान्तः[४] पाच्छब्दः[५] पदमापद्यते। अघुट्स्वरादौ[३]। व्याघ्रपदः। व्याघ्रपदा। व्याघ्रपदी। वैयाघ्रपद्यम्। एकपदः। सुपदः। कुम्भपदी ॥ असमासान्त इत्यपि। पदः[६] पश्य। पादसमानार्थः पादप्यस्तीति[७] मतम् ॥

अवमसंयोगादनोऽलोपोऽलुप्तवच्च पूर्वविधौ ॥ ५३ ॥

अनोऽकारस्य लोपो[८] भवति। अघुट्स्वरादौ[३]। स चेदमन्तात्संयोगात्परो न भवति। स चालुप्तवद्भवति[९]। पूर्वस्य वर्णस्य विधौ कर्तव्ये। राज्ञः। राज्ञा। दध्नः। दध्ना। प्रतिदीव्नः। प्रतिदीव्ना[१०] ॥ अवमसंयोगादिति किम्। पर्वणः। चर्मणः ॥

---

१ तिरिश्अन्च F.; तिर्यञ्च D.

२ इत्येवं A. B.; इत्ययं शब्दः E.

३ E. adds प्रत्यये परे.

४ समासान्तः A. E.

५ पादशब्दः E.

६ पादः D.

७ पदप्यस्तीति E. F.

८ ऽकारलोपो A.

९ न चेदमन्तात्संयोगात्परो भवति° D. E. (B. orig.); स चेदमसंयोगात्परो न भवति लुप्तावप्यलुप्तवच्च भवति। F.

१० प्रतिदध्नः। प्रतिदध्ना। B.

## ईङ्योर्वा ॥ ५४ ॥

ईङी[१] इत्येतयोः परयोरवमसंयोगात्परस्यानो[२] ऽकारस्य लोपो भवति वा[३]। स चालुप्तवद्भवति। पूर्वस्य वर्णस्य विधौ[४] कर्तव्ये। साम्नी। सामनी। राज्ञि। राजनि॥ ङेः[५] साहचर्याद् राज्ञीति नित्यम्॥ अवमसंयोगादिति किम्। पर्वणी। चर्मणी॥

## आ धातोरघुट्स्वरे ॥ ५५ ॥

धातोराकारस्य लोपो भवति। अघुट्स्वरे[६]। कीलालपः। कीलालपा[७]॥ पुनरघुट्स्वरग्रहणं संबद्धाधिकारनिवृत्त्यर्थम्। तेन शङ्खध्मः। शङ्खध्मा[८]॥

## ईदूतोरियुवौ स्वरे ॥ ५६ ॥

धातोरीदूतोरियुवौ भवतः। विभक्तिस्वरे। यथासंख्यम्[९]। नियौ। नियः। लुवौ। लुवः॥ विभक्तिस्वर इति[१०] किम्। न्यर्थः। ल्वर्थः॥ स्वायंभुवमिति[११] वक्तव्यम्॥

---

१ ईङि D. E.
२ D. E. om. परस्य.
३ E. F. om. वा; A. adds स चेदवम-संयोगात्परो न भवति।
४ पूर्वविधौ E.
५ ङिः D.; om. E.
६ E. adds परे; D. adds स्वरादौ प्रत्यये।
७ कीलालपाः D.
८ पाणिध्मः F.
९ Om. E.
१० विभक्ताविति E.
११ स्वांभुवमिति A.; स्वायंभुव इति F.

सुधीः ॥ ५७ ॥

सुधीशब्द(१) इयं प्राप्नोति विभक्तिस्वरे। सुधियौ। सुधियः॥ सुधीरिति किम्। प्रध्यौ। प्रध्यः॥

भूरवर्षाभूरपुनर्भूः ॥ ५८ ॥

भूरुवं प्राप्नोति विभक्तिस्वरे। अवर्षाभूरपुनर्भूः(२)। मित्रभुवौ। मित्रभुवः। अतिभुवौ। अतिभुवः॥ अवर्षाभूरपुनर्भूरिति किम्। वर्षाभ्वौ। पुनर्भ्वौ॥

अनेकाक्षरयोस्त्वसंयोगाद्यवौ(३) ॥ ५९ ॥

अनेकाक्षरयोर्लिङ्गयोर्यावीदूतौ तयोर्धातोरसंयोगात्परयोर् यवौ(४) भवतः। विभक्तिस्वरे। यथासंख्यम्(५)। ग्रामण्यौ। ग्रामण्यः। यवल्वौ। यवल्वः॥ अनेकाक्षरयोरिति किम्। नियौ। लुवौ। असंयोगादिति किम्(६)। यवक्रियौ। कटप्रुवौ॥ अव्ययकारकाभ्यामेवायं विधिः(७)॥

भूर्धातुवत् ॥ ६० ॥

भूशब्दो धातुवद्भवति विभक्तिस्वरे। भुवौ। भुवः॥ अतिदेशो(८)ऽयम्॥

---

१ सुधीशब्दस्य D.
२ वर्षाभू पुनर्भू वर्जयित्वा। E.
३ °य्वौ D. E.
४ परौ यवौ A.; य्वौ D. E.
५ Om. D. E.
६ धातोरसंयोगाद्° B.; A. om. from नियौ.
७ D. adds परमनियौ। परमलुवौ॥
८ कार्यातिदेशो D.; and orig. E.

स्त्री च ॥ ६१ ॥

स्त्रीशब्दो धातुवद्भवति विभक्तिस्वरे । स्त्रियौ । स्त्रियः ॥

वामृशसोः ॥ ६२ ॥

स्त्रीशब्दोऽमृशसोः परयोर्धातुवद्भवति वा । स्त्रियम् । स्त्रीम् । स्त्रियः । स्त्रीः ॥

भवतो वादेरुत्वं संबुद्धौ ॥ ६३ ॥

भवतोऽवयवस्य वादेरुत्वं भवति वा संबुद्धौ । हे भोः । हे भवन् ॥ संनिपातलक्षणत्वात्संबुद्धेर्लोपो न स्यात् ॥

अव्ययसर्वनाम्नः स्वरादन्त्यात्पूर्वोऽक् कः ॥ ६४ ॥

अव्ययानां सर्वनाम्नां चान्त्यात्स्वरात्पूर्वोऽक्प्रत्ययो भवति वा । कप्रत्ययस्य(१) बहुलम् । उच्चकैः । उच्चैः । नीचकैः । नीचैः । सर्वकः । सर्वः । विश्वकः । विश्वः । युष्मकाभिः । युष्माभिः । अस्मकाभिः । अस्माभिः ॥ विभक्तेश्च पूर्वं दृश्यते । त्वयका । मयका ॥ आख्यातस्य च । पचतकि । पचति(२) भिन्धकि । भिन्धि(२) ॥ कप्रत्ययस्य(३) । यावकः । मणिकः ॥ अज्ञाने(४) कुत्सायां च । अश्वकः ॥ दयायाम् । वत्सकः । एहकि । एहि । दृह नु ते धानाकाः(५) ॥

---

१ कः प्रत्ययस्य F.

२ Om. D. E.

३ कः प्रत्यनस्य F.; E. F. add बहुलं.

४ अज्ञाते D. E.; D. om. च.

५ एहकि पुत्रक दृह नु ते गुडधानाकाः । D. E.

गृहाद्दूरं मा गाः ॥ अल्पे । तैलकम् ॥ ह्रस्वे । वृक्षकः[१] ॥ संज्ञायाम् । देवदत्तकः ॥

## के प्रत्यये स्त्रीकृताकारपरे पूर्वोऽकार इकारम् ॥ ६५ ॥

के प्रत्यये स्त्रीकृताकारपरे पूर्वोऽकार इकारमापद्यते । सर्विका । उष्ट्रिका[२] । पाचिका । पाठिका ॥ क इति किम् । चेतना[३] ॥ प्रत्यय इति किम् । तका ॥ स्त्रीति किम् । पाचकाभ्याम् । कृत इति किम् । पुत्रकाम्या ॥ बहुलाधिकारात् । यका । सका । जीवका । नन्दका । आशिष्यकः[४] ॥

॥ इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये द्वितीयः पादः समाप्तः[५] ॥

---

## युष्मदस्मदोः पदं पदात्षष्ठीचतुर्थीद्वितीयासु वस्नसौ ॥ १ ॥

युष्मदस्मदोः पदं पदात्परं षष्ठीचतुर्थीद्वितीयासु बहुत्वे निष्पन्नं यथासंख्यं वस्नसौ प्राप्नोति वा[६] । पुत्रो युष्माकम् । पुत्रोऽस्माकम् । पुत्रो वः । पुत्रो नः । पुत्रो युष्मभ्यम् । पुत्रोऽस्मभ्यम् ।

---

१ वृक्षो वृक्षकः । E.
२ Om. B.
३ तेचना A.
४ आसिष्यकः F.
५ D. E. om. नाम्नि चतुष्टये.
६ प्राप्नुतः । B.; वस्नसावित्येतौ प्राप्नोति वा । D. E.

पुत्रो वः । पुत्रो नः । पुत्रो युष्मान् । पुत्रोऽस्मान् । पुत्रो वः । पुत्रो नः[१] ॥ युष्मदस्मदोरिति किम् । पुत्रस्तेषाम् ॥ पदादिति किम् । युष्माकम् । अस्माकम् ।

## वाम्नौ द्वित्वे ॥२॥

युष्मदस्मदोः पदं पदात्परं षष्ठीचतुर्थीद्वितीयासु द्वित्वे निष्पन्नं यथासंख्यं वाम्नावित्येतौ प्राप्नोति वा[२]। ग्रामो युवयोः। ग्राम आवयोः । ग्रामो वाम् । ग्रामो नौ[३]। एवं दीयते। पातु ॥ आख्यिति किम् । भद्रौ युवाम् । भद्रावावाम् ॥

## त्वन्मदोरेकत्वे ते मे त्वा मा तु द्वितीयायाम्[४] ॥ ३ ॥

एकत्वे वर्तमानयोर्युष्मदस्मदोस्त्वन्मद्भूतयोः[५] पदं पदात्परं षष्ठीचतुर्थीद्वितीयास्वेकत्वे निष्पन्नं यथासंख्यं ते मे इत्येतौ[६] प्राप्नोति[७] वा । त्वा मा तु द्वितीयायाम् । पुत्रस्तव । पुत्रो मम । पुत्रस्ते । पुत्रो मे । एवं दास्यति[८] । पुत्रस्त्वा । पुत्रो मा पातु ॥

---

१ A. om. from पुत्रो युष्मभ्यम् ।

२ प्राप्नुतः। B; वस्नसावित्येतौ प्राप्नोति वा । D. E.

३ E. adds ग्रामो युवाभ्यां दीयते। ग्राम आवाभ्यां दीयते । ग्रामो वां° । ग्रामो नौ° । ग्रामो युवां पातु । ग्राम आवां° । ग्रामो वां° । ग्रामो नौ° ।

४ A. om. तु.

५ °त्वन्मदीभूतयोः D. E.

६ इत्येतावादेशौ E.; B. D. om. यथासंख्यं.

७ प्राप्नुतः । B.; B. D. om. वा.

८ E. adds पातु । पुत्रस्तुभ्यं दास्यति । पुत्रो मह्यं° । पुत्रस्ते° । पुत्रो मे° । पुत्रस्त्वां पातु । पुत्रो मां° ।; D. adds the last two of these.

## न पादादौ ॥ ४ ॥

पादस्यादौ वर्तमानानां[1] युष्मदस्मदादीनां पदमेतानादेशान्न प्राप्नोति। रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता। स एव नाथो भगवानस्माकं[2] पापनाशनः॥ पादादाविति किम्। पान्तु वो नरसिंहस्येत्यादि[3]॥

## चादियोगे च ॥ ५ ॥

चादिना योग वर्तमानानां युष्मदस्मदादीनां[4] पदमेतानादेशान्न प्राप्नोति। पुत्रो युष्माकं च। पुत्रोऽस्माकं च। एवमादि॥ च। वा। ह। अह। एव[5]॥ गौणयोगे न स्यात्। ग्रामस्य[6] ते स्वम्। नगरं च मे स्वम्॥

## एषां विभक्तावन्तलोपः ॥ ६ ॥

विभक्तौ परतो वर्तमानानामेषामन्तस्य लोपो भवति। युष्मभ्यम्। अस्मभ्यम्। अतित्वान्। अतिमान्। त्वयि। मयि[7]॥ विभक्ताविति किम्। युष्मत्पुत्रः। त्वदीयः[8]॥

---

१ Om. E.

२ भगवान्नाथोऽस्माकं D. E. F.

३ पान्तु वो नरसिंहस्य नखलाङ्गलकोटयः। हिरण्यकसिपोर्वक्षः क्षेत्रासृक्कर्दमारुणाः॥ E. (and marg. D.)

४ योगे [च D.] युष्मदादीनां D. E.

५ एवं F.

६ ग्रामञ्च F.

७ E. F. add अतित्वयि। अतिमयि।; A. has युष्मभ्यम्। अस्मभ्यम्। अतियुष्मभ्यम्। अत्यस्मभ्यम। त्वयि। मयि। अतित्वयि। अतिमयि। युष्मान्। अस्मान्। अतित्वान्। अतिमान्॥

८ युष्मदीयः। F.

## युवावौ द्विवाचिषु ॥ ७ ॥

युष्मदस्मदोर्द्विवाचिषु परतो[१] युवावौ भवतः। यथासंख्यम्। युवाभ्याम्। आवाभ्याम्। अतियुवाभिः। अत्यावाभिः॥ अनयोर्द्विवाचिष्विति किम्। त्वां युष्मानतिक्रान्तौ। अतित्वाम्। अतियुष्माम्॥[२] युवयोः पुत्रः॥ युष्मत्पुत्रः॥ युवयोरयम्[३]। युष्मदीयः। प्रत्ययलोपलक्षणेनान्तलोपात्॥

## अमौ चाम् ॥ ८ ॥

युष्मदस्मदादिभ्यः[४] परोऽम् औ च आम् भवति। त्वाम्। माम्। युवाम्। आवाम्[५]। द्विवाच्यधिकाराद्दासाहचर्य[६] न स्यात्॥

## आम् शस्[७] ॥ ९ ॥

युष्मदस्मदादिभ्यः[४] परः शस आन् भवति। युष्मान्। अस्मान्। अतित्वान्। अतिमान्॥

## त्वमहम् सौ सविभक्त्योः ॥ १० ॥

त्वन्मदोर्युष्मदस्मदोश्च सौ सविभक्त्योस्त्वमहमित्येतौ भवतः।

---

१ प्रत्ययेषु D. F.; E. om. परतो and यथासंख्यम्.

२ D. adds साक्षाद्द्विभक्ताविति किम्।

३ Om. D. E.

४ युष्मदादिभ्यः D. E.

५ A. adds अतित्वाम्। अतिमाम्।०। अतियुवाम्। अत्यावाम्।

६ ०अधिकारत्वात् सा० B.

७ आन्शसः॥ D.

यथासंख्यम् । त्वम् । अहम् । अतित्वम् । अत्यहम् ॥ सविभक्त्यो-रिति किम् । अधित्वत् । अधिमत् । लुक् ॥

यूयम् वयम् जसि ॥ ११ ॥

त्वन्मदोर्युष्मदस्मदोश्च जसि सविभक्त्योर्यूयम् वयमित्येतौ भवतः । यथासंख्यम् । यूयम् । वयम् । अतियूयम् । अतिवयम् ।

तुभ्यम् मह्यम् ङयि ॥ १२ ॥

त्वन्मदोर्युष्मदस्मदोश्च ङयि सविभक्त्योस्तुभ्यम् मह्यमित्येतौ भवतः । यथासंख्यम् । तुभ्यम् । मह्यम् । अतितुभ्यम् । अति-मह्यम् ॥

तव मम ङसि ॥ १३ ॥

त्वन्मदोर्युष्मदस्मदोश्च ङसि सविभक्त्योस्तव मम इत्येतौ भवतः । यथासंख्यम्[१] । तव । मम । अतितव । अतिमम ॥ युवा-वादिषु कृतेषु पश्चादक् । युवकाभ्याम् । आवकाभ्याम् ॥

अत् पञ्चम्यद्वित्वे ॥ १४ ॥

युष्मदस्मदादिभ्यो[२] ऽद्वित्वे वर्तमाना पञ्चम्यद् भवति । त्वत् । मत् । युष्मत् । अस्मत्[३] । अतियुवत् । अत्यावत् ॥ अद्वित्व इति किम् । युवाभ्याम् । आवाभ्याम्[४] ॥

---

१ Om. A.; orig. E.

२ °भ्यः परा A.; युष्मदादिभ्यो D. E.; D. adds परो.

३ D. adds अतित्वत् । अतिमत् ।

४ Om. D.; A. and F. om. from अद्वित्व°

**भ्यसभ्यम् ॥ १५ ॥**

युष्मदस्मदादिभ्यः[१]। परो भ्यस् अभ्यम् भवति। युष्मभ्यम्। अस्मभ्यम्। अतित्वभ्यम्[२]। अत्यस्मभ्यम्[३] ॥ अकारोच्चारणं किम्। धुण्वेत्वं मा भूत् ॥

**सामाकम् ॥ १६ ॥**

आभ्यां[४] परः स्वागमयुक्त[५] आम् आकम्भवति। युष्माकम्। अस्माकम् ॥ सामिति किम्। प्रिययुष्मयाम्। अतित्वयाम्[६] ॥

**एत्वमस्थानिनि ॥ १७ ॥**

स्थानं प्रसङ्गो वा ॥ अस्थानिन्यप्रसङ्गिन्यनादेशिनि[७] स्यादावेषामन्तस्य एत्वं भवति। त्वया। मया। युवयोः। आवयोः। त्वयि। मयि। अतित्वयि। अतिमयि ॥ अस्थानिनीति किम्। युष्मान्। अस्मान् ॥

**आत्वं व्यञ्जनादौ ॥ १८ ॥**

एषामन्तस्यात्वं भवति। अस्थानिनि व्यञ्जनादौ स्यादौ[८]।

---

१ एभ्यः B.; युष्मदादिभ्यः D. E.
२ अतियुष्मभ्यम् A.
३ अतिमह्यम् E. F.
४ एभ्यः F.; युष्मदादिभ्यः D.; युष्मदस्मद्भ्यां E.
५ स्वागमायुक्त A.
६ D. adds प्रियस्मयाम्। अतिमयाम्।
७ ॰अनादेशे B.; ॰अप्रसंगि अनादेशिनि E.; A. om. अस्थानिनि.
८ Om. D.; B. om. अस्थानिनि.

युवाभ्याम् । आवाभ्याम् । अतियुवाभिः[१] । अत्यावाभिः[१] । अतित्वासु । अतिमासु ॥ आदिग्रहणं साद्यात्प्रतिपत्त्यर्थम्[२] । तेन युष्मत्पुत्रः । अस्मत्पुत्रः[३] । अधित्वत् । अधिमत्[४] । लुक् ॥

रैः ॥ १९ ॥

रैशब्द आत्वं प्राप्नोति[५] । व्यञ्जनादौ स्यादौ । राः । राभ्याम् । अतिराभ्यां कुलाभ्याम् ॥ साद्यादिति किम् । अतिरि कुलम्[६] ॥

अष्टनः सर्वासु ॥ २० ॥

अष्टनोऽन्तस्य आत्वं भवति[७] । सर्वासु विभक्तिषु । अष्टाभिः । अष्टाभ्यः । अष्टासु । प्रियाष्टाः । प्रियाष्टौ ॥

औ तस्माज्जस्शसोः ॥ २१ ॥

तस्मादष्टनः कृताकारात्परयोः सर्वयोर्जस्शसोः स्थान और्भवति । अष्टौ[८] । अष्टौ[८] ॥ तस्माद्ग्रहणमात्वस्यानित्यार्थम् । तेन । अष्टभिः । अष्टसु[९] । वा स्यात् ॥

---

१ Om. E. F.
२ साद्याद्विभक्तिप्रपि° D. F.; B. E. F. om. तेन.
३ त्वदीयः । B.; om. E. F.
४ अतित्वत् । अतिमत् । A.
५ रैशब्दस्यात्वं भवति E.
६ Om. D. E.
७ अष्टन आ भवति D. E.
८ अष्टौ तिष्ठन्ति । अष्टौ पश्य । D. E.
९ D. om. तेन and adds अष्टाभिः । अष्टासु ।

अर्वन्नर्वन्तिरसावनञ् ॥ २२ ॥

अर्वन्शब्दोऽर्वन्तिर्भवति । असौ प्रत्यये परे । स चेदनञ् । अर्वन्तौ । अर्वन्तः । अर्वत्सु । आर्वतम् । आर्वत्यम् । अर्वती[1] ॥ असाविति किम् । अर्वा ॥ अनञिति किम् । अनर्वाणौ ॥

सौ च मघवान् मघवा वा ॥ २३ ॥

विभक्तौ सौ च परतो[2] मघवन्शब्दो[3] मघवन्तुर्भवति[4] वा । मघवान् । मघवन्तौ । मघवन्तः । मघवत्सु ॥ तद्धिते स्वरे ये च स्त्रीकारे[5] । माघवतम् । माघवत्यम्[6] । मघवती ॥ पक्षे मघवा । मघवानौ ॥

जरा जरस् स्वरे वा ॥ २४ ॥

जराशब्दो जरस्[7] भवति वा । विभक्तिस्वरे[8] । जरे । जरसौ । जराः । जरसः ॥ गणपाठाच्च । उपजरसमिति नित्यम् ॥

त्रिचतुरोः स्त्रियां तिसृ चतसृ विभक्तौ ॥ २५ ॥

स्त्रियां वर्तमानयोस्त्रिचतुरोः[9] तिसृ चतसृ । इत्येतौ भवतः । विभक्तौ यथासंख्यम् । तिस्रः[10] । चतस्रः[10] । तिसृभिः । चतसृभिः । प्रियतिसृ । प्रियचतसृ कुलं वा ॥

---

१ अर्वती स्त्री D.
२ परे D.; B. om. सौ च.
३ मघवान्शब्दो F.
४ मघवंतिर्भवति E.
५ F. adds च; तद्धिते ये स्वरे स्त्रीकारे च । D.
६ मघवत्यम् A.
७ जरसादेशो A. and corr. B.
८ विभक्तौ स्वरे D. E.
९ A. adds स्थाने.
१० Om. F.; E. om. यथासंख्यं.

तौ रं स्वरे ॥ २६ ॥

तौ तिसृचतसृौ रं प्राप्नुतः । विभक्तिस्वरे[१] । तिस्रः । चतस्रः[२] ॥ बाधकबाधनार्थोऽयं योगः ॥

न नामि दीर्घम् ॥ २७ ॥

तौ तिसृचतसृौ दीर्घं न प्राप्नुतः । सनावामि परे । तिसृणाम् । चतसृणाम् ॥

नृ वा[३] ॥ २८ ॥

नृशब्दो दीर्घं प्राप्नोति वा । सनावामि परे । नृणाम् । नॄणाम् ॥

त्यदादीनाम विभक्तौ ॥ २९ ॥

त्यदादीनामन्तस्य अकारो भवति विभक्तौ । स्यः । त्यौ । सः[४] । तौ[४] । यत्र । तत्र ॥ सर्वनामान्तर्गणो द्विपर्यन्त इह[५] त्यदादिः ॥ विभक्ताविति किम् । त्यदीयः ॥

किम् कः ॥ ३० ॥

किम्शब्दः को भवति विभक्तौ । कः । कौ[६] । कदा ॥ विभक्ताविति किम् । किंवान् ॥

---

१ स्वरे विभक्तौ । D.
२ F. adds तिसृभिः । चतसृभिः ।
३ नॄ वा F.
४ Om. B.; त्ये । सा । ते । D.
५ द्विपर्यन्तमिह B.; द्विःप० F.
६ D. E. add के ।

**दोऽद्वेर्मः ॥ ३१ ॥**

त्यदादीनां दकारस्य मो[१] भवति विभक्तावद्वेः। इमौ। इमकौ ॥ अद्वेरिति किम्। द्वौ ॥

**सौ सः ॥ ३२ ॥**

त्यदादीनां दकारस्य सो[२] भवति सौ विभक्तौ। असौ। असकौ ॥ साक्षात्साविति[३] किम्। असौ पुत्रोऽस्येति। अदःपुत्रः ॥

**तस्य च ॥ ३३ ॥**

त्यदादीनां तकारस्य सो[४] भवति सौ विभक्तौ। स्यः। स्यकः। सः। सकः ॥ साक्षात्साविति[३] किम्। तत्पुत्रः ॥

**इदमियमयम् पुंसि ॥ ३४ ॥**

इदम् इयम् भवति। अयम् च पुंसि। सौ विभक्तौ। इयं स्त्री। अयं पुमान् ॥ इदं कुलमिति तदुक्तप्रतिषेधात् ॥ साक्षात्साविति[५] किम्। इदंपुत्रः ॥

**अद् व्यञ्जनेऽनक् ॥ ३५ ॥**

इदमोऽक्वर्जितो[६]ऽद्भवति व्यञ्जनादौ विभक्तौ। आभ्याम्।

---

१ मकारो A.
२ सकारो A.
३ साक्षादिति D.
४ दकारस्य सकारो A.
५ साक्षादिति० D.; सौ विभक्ताविति A.
६ इदम अक्वर्जितो A. F.; इदमो अक्वर्जितस्य E.

एभिः ॥ अनगिति किम् । इमकैः ॥ साक्षाद्विभक्ताविति[1] किम् । अस्य पुत्रः । इदंपुत्रः ॥

**टौसोरन[2] ॥ ३६ ॥**

इदमोऽग्वर्जितस्य टौसोर्विभक्त्योरनादेशो[3] भवति। अनेन। अनयोः ॥ अनगिति किम् । इमकेन । इमकयोः ॥

**एतस्य चान्वादेशे द्वितीयायां चैन[2] ॥ ३७ ॥**

एतस्येदमश्च टौसोर्विभक्त्योर्द्वितीयायां च कथितस्यैवानुकथनविषय एनादेशो भवति । एतं व्याकरणमध्यापय । अथो एनं वेदमध्यापय ॥ इमं घटमानय । अथो एनं परिवर्तय ॥ एतेन रात्रिरधीता । अथो एनेनाहरप्यधीतम्[4] ॥ एतयोः शोभनं शीलम् । अथो एनयोश्च प्रभूतं स्वमित्यादि योज्यम् ॥

**तस्माद् भिस् भिर् ॥ ३८ ॥**

तस्मादिदमः कृताकारात्परो भिस् भिर्भवति । एभिः ॥ केचित्तस्मादिति किम् । इमैर्गुणैः सप्तर्षयः स्वर्गं गताः[5] ॥

**अदसश्च ॥ ३९ ॥**

अदसोऽग्वर्जितात्[6] परो भिस् भिर्भवति । अमीभिः ॥ अनगिति किम् । अमुकैः ॥ चकार उत्तरत्रानग्निवृत्त्यर्थः ॥

---

१ साक्षादिति D.; साक्षात्साविति A.
२ °अन: and °एन: D. E.
३ टौसोः परयोरनादेशो B.
४ एनेनेनाहर° E.
५ सर्वं गताः B.; इमकैः ॥ A.; इमैः ॥ F. and the above reading in the margin.
६ अदसश्चाग्वर्जितात् D. E.

## सावौ सिलोपश्च ॥ ४० ॥

अदसोऽन्तस्य और्भवति सौ परे । सिलोपश्च । असौ । असकौ ॥(१)

## उत्वं मात् ॥ ४१ ॥

अदसो मात्परस्य वर्णमात्रस्य उत्वं भवति । अमुम् । अमू(२)। अमून् ॥ मादिति किम् । अमुकाभ्याम् ॥

## एद् बहुत्वे त्वी ॥ ४२ ॥

अदसो मात्परस्य(३) बहुत्वे निष्पन्न एत ईर्भवति । अमी । अमीभ्यः(४) ॥ बहुत्व इति किम् । अमू ॥ मादिति किम् । अमुकेभ्यः ॥ तुशब्द उत्तरत्र बहुत्वनिवृत्त्यर्थः ॥

## अपां भे दः ॥ ४३ ॥

अपां विभक्तौ भे दो भवति । अद्भिः ।(५) स्वद्भ्याम् ॥ विभक्ताविति किम् । अब्भारः ॥

## विरामव्यञ्जनादिष्वनडुन्नहिवन्सीनां च ॥ ४४ ॥

विरामे व्यञ्जनादिषु चानड्वाहनह्विवन्सीनां च लिङ्गानामन्तस्य दो(६) भवति । स्वनडुत्(७) अनडुद्भ्याम् । उपानत् । उपा-

१ A. and a later hand in D. add साक्षात्साविति किम् । [असौ पुत्रोऽस्येति किम् । D.] अदःपुत्रः ॥

२ Om. D.

३ मात्परो E. F.

४ अमीभिः । D.; E. has both.

५ D. adds अब्भः ।

६ लिंगानां च दो E.; ॰वन्सि इत्येतेषां लि॰ D.

७ Om. F.; अनडुत् B. and or. A.; D. adds स्वनडुद्भ्याम् ।

नड्भ्याम् । सुविद्वत्[१] । विद्वद्भ्याम् ॥ व्यञ्जनमिह सामान्यम् । अनडुत्ता । उपानत्ता । विद्वत्ता[२] । येनेष्यते । अनडुद्भ्याम् । उपानद्भ्याम्[३] ॥

## स्रसिध्वसोश्च[४] ॥ ४५ ॥

स्रसिध्वसोर्लिङ्गयोरन्तस्य विरामे व्यञ्जनादिषु च दो भवति। उखास्रत् । उखास्रद्भ्याम् । उखास्रत्कल्पः[५] । पर्णध्वत् । पर्णध्वद्भ्याम् । पर्णध्वद्भ्यः ॥

## हशषछान्तेजादीनां डः[६] ॥ ४६ ॥

हशषछान्तानां यजादीनां[७] च लिङ्गानामन्तस्य[८] विरामे व्यञ्जनादिषु च डो भवति। मधुलिट् । मधुलिड्भ्याम् । मधुलिट्पाशः । सुविट् । सुविड्भ्याम् । सुविट्तरः[९] । षट् । षड्भ्याम् । षड्भिः[१०] । षट्त्वम् । शब्दप्राट् । शब्दप्राड्भ्याम् । शब्दप्राट्त्वम् । देवेट् । देवेड्भ्याम् । देवेट्त्वम् । रज्जुसृट् । रज्जुसृड्भ्याम् । रज्जुसृट्त्वम् ॥[११] यज् । सृज् । मृज् । राज् । भ्राज् । व्रश्च् । भ्रस्ज्[१२] । परिव्राज् । एते यजादयः[१३] ॥

---

१ विद्वत् B. F.; D. adds सुविद्भ्याम् ।
२ Om. F.
३ Om. F.; D. E. आनडुह्यम् instead.
४ B. D. E. F. write असि° अत° throughout.
५ उषाश्र° D. E.
६ हशषछान्ते यजादीनां डः B.
७ इजादीनां E.; हशषछान्तेजादीनां D.
८ D. E. om. अन्तस्य; E. adds च.
९ सुविट्चरः F.
१० A. E. F. om. षड्भ्याम्; B. om. षड्भिः
११ एवं नज् E.
१२ भस्ज् । व्रस्च् । E. F.; B. om. व्रश्च.
१३ इत्यादयः ॥ D.

## दादेर्हस्य गः ॥ ४७ ॥

लिङ्गस्य हस्य दादेर्विरामे व्यञ्जनादिषु च गो भवति। गोधुक्। गोधुग्भ्याम्। गोधुक्षु[१] ॥

## चवर्गदृगादीनां च ॥ ४८ ॥

चवर्गान्तस्य दृश इत्येवमादीनां च[२] लिङ्गानामन्तस्य[३] विरामे व्यञ्जनादिषु च गो भवति। वाक्। वाग्भ्याम्[४]। वाक्षु। तृष्णक्। तृष्णग्भ्याम्। तृष्णक्षु। दृक्। दृग्भ्याम्। दृक्षु॥ दृश्[५]। स्पृश्। मृश्। दधृष्[६]। दिश्। उष्णिह्। ऋत्विज्। स्रज्। असृज्[७]। एते[८] दृगादयः[८] ॥

## मुहादीनां वा ॥ ४९ ॥

मुहादीनां लिङ्गानामन्तस्य[३] विरामे व्यञ्जनादिषु च गो भवति वा। मुक्। मुग्भ्याम्। मुक्षु। मुट्। मुड्भ्याम्। मुट्त्सु॥ मुह्। द्रुह्। ष्णुह्। ष्णिह्[९]। नश्। एते[८] मुहादयः[८] ॥

---

१ गोधुत्सु। [दादेरिति किं E.] दामलिट्॥ D. E.

२ चवर्गांतानां° E.; B. D. E. om. च.

३ D. E. om. अन्तस्य.

४ D. adds वाग्भ्यः।

५ एवं दृश्° E.

६ दधृक् D.; दधृश A. B. F. (F. after दिश्); D. om. मृश्; E. om. दिश्।

७ A. om. ऋत्विज्; A. D. E. F. read सृज्। before which D. adds अज.

८ Om. D.

९ स्नुह। स्निह। D.

## हचतुर्थान्तस्य धातोस्तृतीयादेरादिचतुर्थत्वमकृतवत् ॥ ५० ॥

धातोरवयवस्य हचतुर्थान्तस्य तृतीयादेरादिचतुर्थत्वं भवति । विरामे व्यञ्जनादिषु च । तच्चाकृतवत्[1] । निघुट् । निघुड्भ्याम् । निघुट्त्वम् । ज्ञानभुत् । ज्ञानभुद्भ्याम् । ज्ञानभुत्त्वम् ॥ गर्दभयतेः क्विप् । गर्धप्[2] । गर्धब्भ्याम् । गर्धप्त्वम्[3] ॥ धातोरिति किम् । दामलिट् ॥ तृतीयादेरिति किम् । विक्रुत् ॥ अकृतवदिति किम् । गोधुक् ॥

## सजुषाशिषो रः ॥ ५१ ॥

सजुषाशिषोरन्तस्य विरामे व्यञ्जनादिषु च रो भवति । सजूः । सजूर्भ्याम् । सजूःषु[4] । सजूस्ता[5] । आशीः । आशीर्भ्याम् । आशीःषु[6] । आशीस्ता[7] ॥

## इरुरोरीरूरौ ॥ ५२ ॥

इरुरोर्धातोर्विरामे व्यञ्जनादिषु च यथासंख्यमीरूरौ भवतः । गीः । गीर्भ्याम् । गीर्षु[8] । गीस्तरा । धूः । धूर्भ्याम् । धूर्षु[8] । धूस्तरा[9] ॥

---

१ °अकृतवच्चभवति । D.
२ Om. D.; गर्दभयते । गर्द्धप् E.
३ E. adds हचतुर्थान्तस्येति किं । सुगण् ॥
४ सजूर्षु E.
५ सजूस्तरा । D.
६ आशीर्षु E.; आशीर्भ्याम् D.
७ अशीस्तराम् ॥ D.
८ Om. D.; E. om. यथासंख्यं.
९ धूर्धस्तरा ॥ F.

अहः सः ॥ ५३ ॥

अहन् इत्येतस्य[१] विरामे व्यञ्जनादिषु च सो भवति । अहः । अहोभ्याम्[२] । अहस्सु ॥

संयोगान्तस्य लोपः ॥ ५४ ॥

संयोगान्तस्य लोपो भवति विरामे व्यञ्जनादिषु च । विद्वान् । कटचिकीः । पुंभ्याम् । पुंसु[३] ॥

संयोगादेर्धुटः[४] ॥ ५५ ॥

संयोगादेर्धुटो लोपो भवति विरामे व्यञ्जनादिषु च । मस्जेः[५] । साधुमक् । साधुमग्भ्याम् । साधुमक्षु ॥ तक्षेः[५] । साधुतट् । साधुतड्भ्याम् । साधुतट्त्सु ॥ विरामे व्यञ्जनादिष्विति किम् । गोरक्षौ ॥ पुनः संयोगग्रहणमिह पूर्वस्मिंश्चानित्यार्थम् । तेन मांसपिपक् ॥ पूर्वस्मिंश्च रात्सस्यैव लोपः । ऊर्क् । ऊर्ग्भ्याम् ॥

लिङ्गान्तनकारस्य ॥ ५६ ॥

लिङ्गान्तनकारस्य लोपो भवति विरामे व्यञ्जनादिषु च । सखा । राजभ्याम् । राजभिः । राजसु । राजत्वम् ॥ लिङ्गान्तनकारस्येति किम् । अहन्[६] ॥ पुनर्लिङ्गग्रहणमुत्तरत्र सामान्यार्थम् ॥

---

१ अनह इत्य° B.
२ F. adds अहःसु ।
३ पुंषु B.
४ संयोगेर्धुटः ॥ A.
५ मस्जे° तक्षे E.
६ D. E. add वृत्रान् ।

## न संबुद्धौ ॥ ५७ ॥

लिङ्गान्तनकारस्य लोपो न भवति संबुद्धौ । हे राजन्[१]॥ पृथक्करणान्नपुंसकस्य वा । हे साम । हे सामन् ॥

## नसंयोगान्तावलुप्तवच्च पूर्वविधौ ॥ ५८ ॥

नकारसंयोगान्तौ लुप्तावप्यलुप्तवद्भवतः[२] । पूर्वविधौ लिङ्गान्तदीर्घादिके कर्तव्ये। राजभ्याम्। राजभिः। राजसु। विद्वान्। सुकन्भ्याम् ॥

## इसुस्दोषां घोषवति रः[३] ॥ ५९ ॥

इसन्तस्य। उसन्तस्य[४]। दोस्शब्दस्य[५] च घोषवति परे रो भवति। सर्पिर्भ्याम्। धनुर्भ्याम्। दोर्भ्याम् ॥ घोषवतीति किम्। सर्पिःषु। धनुःषु। दोःषु[६] ॥ भे र इति सिद्धे घोषवतीत्युत्तरार्थं च ॥

## धुटां तृतीयः ॥ ६० ॥

धुटां वर्णानां तृतीयो भवति। घोषवति सामान्ये। चोषिद्भ्याम्। चित्रलिग्भिः। मज्जति। लज्जते। भृज्जति[७] ॥

---

१ E. adds हे तक्षन् ।
२ °भवति । B.; °अलुप्तवतः । E.
३ ईषुषदोषां° B.
४ ईशन्तस्य उषन्तस्य B.
५ दोशब्दस्य B.; दोः श° A.; E. om. च.
६ [सर्पिष्षु E.] धनुष्षु दोष्षु । D. E.; सर्पिःसु। धनुःसु। दोःषु। F.
७ वृज्जनि ॥ F.

अघोषे प्रथमः ॥ ६१ ॥

अघोषे परे(१) धुटां वर्णानां प्रथमो भवति। षट्सु। ज्ञानभुत्सु। दृक्छति। गच्छति(२) ॥

वा विरामे ॥ ६२ ॥

विरामे धुटां वर्णानां प्रथमस्तृतीयो भवति(३) वा। विधप्। विधब्। वाक्। वाग् ॥

रेफसोर्विसर्जनीयः ॥ ६३ ॥

रेफसकारयोर्विसर्जनीयो(४) भवति। विरामे शब्दच्छेदे घोषवत्यघोषे च। गीः। धूः। वृक्षः। पयोभ्याम्। पयःसु(५) ॥ वाधिकाराद्विभक्तिव्यञ्जने रेफस्य(६) न स्यात्। गीर्षु। धूर्षु। भवति च सजूःषु। आशीःषु(७) ॥

विरामव्यञ्जनादावुक्तं नपुंसकात्स्यमोर्लोपेऽपि ॥ ६४ ॥

विरामे व्यञ्जनादौ च यदुक्तं नपुंसकलिङ्गात्परयोः स्यमोर्लोपे(८)ऽपि तद्भवति। तस्यैव श्रुतत्वात्। सुवाक्। सुवाग्। सुपथि।

---

१ Om. A. F.

२ च्छति D. E.

३ प्रथमतृतीयो° B.; प्रथमतृतीयौ भवतः। D. E.; E. om. वा.

४ रेफसकारयोः स्थाने वि° E.

५ पयस्सु E.

६ Om. B.; D. adds विसर्जनीयो.

७ आशीष्षु ॥ D.; सजूःसु। आशीःसु ॥ F.

८ E. om. परयोः; नपुंसकात् स्यमो° A. F.

सुविद्दत् । सुपुम् । सुचतुः[1] । सुद्यु[2] ॥ एवम् उखास्रत्[3] । द्वेवेडित्यादयः ॥ अपिग्रहणं व्यभिचारार्थम् । तेनेदमत्वं[4] न स्यात् ॥

॥इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये तृतीयः पादः समाप्तः[5]॥

---

## अव्ययीभावादकारान्ताद्विभक्तीनाममपञ्चम्याः ॥ १ ॥

अव्ययीभावसमासादकारान्ताद्विभक्तीनां[6] स्थाने ऽम् भवति । अपञ्चम्याः । उपकुम्भम्[7] ॥ अव्ययीभावादिति किम् । कष्टश्रितः[8] ॥ विभक्तीनामिति किम् । उपकुम्भता ॥ अपञ्चम्या इति किम् । उपकुम्भात् ॥

## वा तृतीयासप्तम्योः ॥ २ ॥

अव्ययीभावसमासादकारान्तात्परयोस्तृतीयासप्तम्योः स्थाने ऽम् भवति वा[9] । उपकुम्भम् । उपकुम्भेन । उपकुम्भम् । उपकुम्भे ॥

---

१ सुवगुः । D.
२ सुद्युः । B.
३ उखाश्रत् B. D. F.; उषाश्रत् E.
४ °अत्त्वं D.
५ D. E. om. नाम्नि चतुष्टये.
६ °अकारान्तात्परासां वि° D.
७ D. adds उपगङ्गम् ।
८ D. E. F. add अकारान्तादिति किम् । after which उपनदि F.; उपकर्तृ E.; अधिस्त्रि D.
९ A. om. परयोः and वा.

अन्यस्माल्लुक् ॥ ३ ॥

अकारान्ताद्यो ऽन्यो ऽव्ययीभावसमासस्तस्माद्विभक्तीनां[१] लुग्भवति।[२] उपवधु। उपकर्तृ ॥

अव्ययाच्च ॥ ४ ॥

अव्ययमसंख्यम्। अव्ययाच्च[३] विभक्तीनां लुग्भवति। स्वः। प्रातः। च। वा। ह। अह। एवमन्ये ऽपि ॥ पदसंज्ञार्थमिदम् ॥

रूढानां बहुत्वे ऽस्त्रियामपत्यप्रत्ययस्य ॥ ५ ॥

जनपदसमानशब्दानां क्षत्रियाणां रूढसंज्ञा ॥ रूढानां बहुत्वे विहितस्यापत्यप्रत्ययस्यास्त्र्यभिधेयस्य लुग्भवति। पञ्चालस्यापत्यानि पञ्चालाः। एवं विदेहाः। अङ्गाः। वङ्गाः। कलिङ्गाः। मगधाः। सूरमसाः[४]। अणो लुक् ॥ प्रत्यग्रथाः[५]। कलकूटाः। अश्वकाः[६]। इणो लुक् ॥ बहुत्व इति किम्। आङ्गः। आङ्गौ। प्रियवाङ्गा इति समासो ऽत्र बहुत्वे न प्रत्ययः ॥ अस्त्रियामिति किम्। कालिङ्ग्यः ॥ अपत्यप्रत्ययस्येति किम्। पञ्चालानामिमे भृत्याः। पाञ्चालाः ॥

गर्गयस्कविदादीनां च ॥ ६ ॥

गर्गादीनां यस्कादीनां विदादीनां च बहुत्वे विहितस्याप-

---

१ अकारान्ताद्यो ऽव्ययीभावस्तस्मात्परासां वि॰ D.

२ D. E. add उपनदि।

३ D. adds परासां.

४ सूरमसाः F.

५ प्रत्यग्रथाः। A.

६ अश्मकाः। D. E.

त्यप्रत्ययस्यास्त्र्यभिधेयस्य लुग्भवति। गर्गाः। वत्साः। ण्यस्य लुक्॥ यस्काः। लह्याः[1]। अणो लुक्॥ विदाः। उर्वाः। अत्राप्यणो लुक्॥ यस्कादयो नानापत्यप्रत्ययान्ताः। विदादयोऽपि पौत्राद्यणन्ताः[2]। प्रियगर्गः। प्रिययस्कः। प्रियविदः। प्रत्ययोऽत्र बहुत्वे लुक् स्यादेव॥ गार्ग्यकुलम्[3]। गर्गकुलमिति गार्ग्यस्य हि यत्कुलं गर्गस्य[4] गर्गाणामपि तत्कुलमित्यभेदेनोच्यते॥

भृग्वत्र्यङ्गिरस्कुत्सवसिष्ठगोतमेभ्यश्च[5]॥ ७॥

भृग्वादिभ्यो बहुत्वे विहितस्यापत्यप्रत्ययस्यास्त्र्यभिधेयस्य लुग्भवति। अत्रेरेयण्। इतरेभ्य ऋषिभ्योऽण्। भृगवः। अत्रयः। अङ्गिरसः। कुत्साः। वसिष्ठाः[6]। गोतमाः॥ अस्त्रियामिति किम्। भार्गव्यः॥

यतोऽपैति भयमादत्ते वा तदपादानम्॥ ८॥

यस्मादपैति यस्माद्भयं भवति यस्मादादत्ते वा तत्कारकमपादानसंज्ञं भवति। वृक्षात्पर्णं पतति। व्याघ्राद्बिभेति। चौरादुद्विजते[7]। उपाध्यायादधीते। उपाध्यायादागमयति॥ यत

---

१ लज्जाः B. F.; लञ्चाः A.
२ °नन्ताः F.
३ गार्गकुलम् A.; कथं गार्ग्य° D.
४ For गर्गस्य E. reads गर्गस्यापिहि यत्कुलं; D. गर्गस्यापि तत्कुलम्।
५ °अङ्गिरकुत्स° B. F.; °अङ्गिरःकुत्स° A.; °वशिष्ठ° A. B. E. F.
६ वशिष्ठाः। A. B. E.
७ °उद्विजिते F.

इत्यवधिमात्रार्थम्। तेन[१] धावतोऽश्वात्पतितः। तथा[१]। अधर्माज्जुगुप्सते। अधर्माद्विरमति। धर्मात्प्रमाद्यति। अध्ययनात्पराजयते[२]। उपाध्यायादन्तर्धत्ते। शृङ्गाच्छरो जायते। हिमवतो गङ्गा प्रभवति। प्रासादात्प्रेक्षते। आसनात्प्रेक्षते। कुतो भवान्। पाटलिपुत्रात्[३]॥

## ईप्सितं च रक्षार्थानाम्॥ ९॥

रक्षार्थानां धातूनां प्रयोगे यदीप्सितमनीप्सितं च तत्कारकमपादानसंज्ञं भवति। यवेभ्यो गां रक्षति। यवेभ्यो[४] गां निषेधति[५]। शालिभ्यः शुकान्वारयति। अहिभ्य आत्मानं रक्षति। कूपादन्धं वारयत्यपि[६]॥ ईप्सिते कर्मसंज्ञां[७] बाधते॥ अपादानप्रदेशाः। अपादाने पञ्चमीत्येवमादयः॥

## यस्मै दित्सा रोचते धारयते[८] वा तत् संप्रदानम्॥ १०॥

यस्मै दातुमिच्छा यस्मै रोचते यस्मै धारयते वा तत्कारकं संप्रदानसंज्ञं भवति। ब्राह्मणाय गां ददाति। देवदत्ताय रोचते मोदकः। यज्ञदत्ताय[९] स्वदते दधि[१०]। विष्णुमित्राय गां

---

१ Om. E.
२ अध्ययन्नात्° E.
३ °पुत्रादिति॥ A.
४ तिलेभ्यो E.
५ निषेधयति D., and D. E. om. the next example.
६ वारयति। E.; वारयतीत्यपि। D.
७ कर्मसंज्ञा E.
८ राधयते A.
९ देवदत्ताय F.
१० Om. A. B.

धारयते[१]। कथं देवदत्ताय[२] श्लाघते। छात्त्राय ह्नुते[३]। छात्त्राय तिष्ठते कुमारी। छात्त्राय शपते। पुष्पेभ्यः स्पृहयति[४]। छात्त्राय राध्यति। छात्त्रायेक्षते। छात्त्राय प्रतिशृणोति। छात्त्राय शृणोतीति[५] तादर्थ्यचतुर्थ्या सिद्धम्। छात्त्राय क्रुध्यति। मित्त्राय[६] द्रुह्यति। मित्त्रायेर्ष्यति[७] मित्त्रायासूयति॥ यस्मै कुप्यतीति वक्तव्यम्॥ दातुमिच्छेति किम्। राज्ञो दण्डं ददाति[८]॥ संप्रदानप्रदेशाः। संप्रदाने चतुर्थीत्येवमादयः॥

## य आधारस्तदधिकरणम्॥ ११॥

आध्रियन्ते क्रिया यस्मिन्नित्याधारः[९]॥ आधारो यस्तदधिकरणसंज्ञं[१०] भवति। कट आस्ते। तिलेषु तैलम्। दिवि देवाः। तथा गङ्गायां घोषः। अङ्गुल्यग्रे करिशतम्॥ अधिकरणप्रदेशाः। अधिकरणे सप्तमीत्येवमादयः॥

## येन क्रियते तत् करणम्॥ १२॥

कर्त्रा[११] येन क्रियते तत्कारकं करणसंज्ञं भवति। दात्रेण धान्यं लुनाति[१२]। मनसा मेरुं गच्छति। तथा पशुना रुद्रं

---

१ धारयति E.
२ छात्राय B. E.
३ ॰अपह्नुते D. E.
४ स्पृशयति A.
५ छात्रायाशृणोतीति A.
६ छात्राय D.
७ मित्रायेर्ष्यते F.; मित्रायेर्ष्यति E.
८ D. F. add रजकस्य वस्त्रं ददाति॥
९ आध्रियन्ते यस्मिन् क्रिया[स D.] इत्याधारः। D. E.
१० तत्कारकमधि॰ D.; आधारो यत्कारकं तदधि॰ E.
११ येन क्रिया क्रियते॰ E.
१२ दात्रेण लुनाति। परशुना छिनत्ति। D. E.

यजते[१]। प्रकृत्याभिरूपः। प्रायेण याज्ञिकः। गोत्रेण गार्ग्यः। समेन[२] धावति। विषमेण धावति। द्विद्रोणेन धान्यं क्रीणाति। पञ्चकेन पशून्क्रीणाति। शतेन परिक्रीतः। शताय परिक्रीतस्त्वं मासं कर्म करिष्यसीति प्रधानक्रियापेक्षं[३] तादर्थ्यम्॥ करणप्रदेशाः। करणे तृतीयेत्येवमादयः॥

## यत् क्रियते तत् कर्म॥ १३॥

कर्त्रा यत्क्रियते तत्कारकं कर्मसंज्ञं भवति। कटं करोति। ओदनं पचति। आदित्यं पश्यति[४]। तथा। अहिं लङ्घयति। ग्रामं गच्छन्वृक्षमूलान्युपसर्पति। तथा। स्तोकं पचति। गां दोग्धि पयः। पौरवं गां याचते। गामवरुणद्धि व्रजम्। छात्त्रं पन्थानं पृच्छति। पौरवं गां भिक्षते। वृक्षमवचिनोति फलानि। शिष्यं धर्मं ब्रूते। शिष्यं धर्ममनुशास्ति। अजां नयति ग्रामम्। ग्रामं वहति भारम्। हरते कुम्भं भारम्[५]। ग्रामं छात्त्रशतं[६] जयति। गर्गाञ्छतं दण्डयति। ग्राममधिशेते। ग्राममधितिष्ठति। वृक्षमध्यास्ते। धर्ममभिनिविशते[७]। त्रिरात्रमुपवसति[८]। ग्राममनुवसति। पर्वतमधिवसति। आवसथमावसति। अक्षान्दीव्यति। अक्षैर्दीव्यतीति करणविवक्षा। मासं गुडधानाः। क्रोशं

१ यजति E.; जयते। D.
२ सोमेन A.
३ °क्रियापेक्ष्यं A. B. D.
४ E. adds हिमवंतं शृणोति।
५ A. om. this example.
६ छात्रं शतं D.
७ वृक्षमभि° D.
८ °उपवशति। D.

कुटिला नदी। भवतेर्गम्यमानत्वात् ॥ कर्मप्रदेशाः। कर्मणि द्वितीयेत्येवमादयः ॥

**यः करोति स कर्ता ॥ १४ ॥**

यः क्रियां करोति स कर्तृसंज्ञो भवति। छात्त्रेण हन्यते। चैत्रेण कृतम्[1] ॥

**कारयति यः स हेतुश्च ॥ १५ ॥**

तमेव कर्तारं यः कारयति[2] स हेतुसंज्ञो भवति। चकारात्कर्तृसंज्ञकश्च। हारयति। पाचयति ॥ हेतुकर्तृप्रदेशाः। धातोश्च हेतौ [का° ३. २. १०] इत्येवमादयः ॥ क्रियानिमित्तं कारकं लोकतः सिद्धम् ॥

**तेषां परमुभयप्राप्तौ ॥ १६ ॥**

तेषां कारकाणामुभयप्राप्तौ[3] सत्यां यत्परं तद्भवति। ग्रामाय धनं[4] दत्वा तीर्थं गतः। संप्रदानमेव ॥ कांस्यपात्र्यां[5] भुङ्क्ते। अधिकरणमेव ॥ मृदुना धनुषा शरान्क्षिपति। करणमेव ॥ तरुं त्यजति खगः। कर्मैव। तथा गां दोग्धि पयः[6] ॥ त्यजति दण्डं दण्डीति कर्तैव ॥ एवमन्येऽपि[7] ॥

---

१ D. adds कर्तृप्रदेशाः। कर्तरि तृतीयेत्येवमादयः ॥

२ क्रियां कारयति E.

३ तेषां [E. adds षट्] कारकाणां मध्ये उभय° D. E.; D. om. सत्यां.

४ Om. D. E.

५ कांश्यपात्र्यां A. B. E. F.

६ E. om. this example.

७ ऽप्यनुसर्तव्याः। D.

प्रथमा विभक्तिर्लिङ्गार्थवचने ॥ १७ ॥

अव्यतिरिक्तलिङ्गार्थवचने[१] प्रथमा विभक्तिर्भवति। उच्चैः[२]। नीचैः। वृक्षः। कुण्डम्। कुमारी। द्रोणः। खारी। आढकः। हस्तः। वितस्तिः। दीर्घम्। काष्ठम्। घृतम्। पलम्। एकः। द्वौ। बहवः। सर्वेऽप्यमी लिङ्गार्था अन्वयित्वात्[३]। एकमर्थं द्वौ बहून्वा वक्तीत्यन्वर्थसंज्ञया[४]। एकस्मिन्नर्थ एकवचनं द्वयोर्द्विवचनम्। बहुषु बहुवचनम्[५]। संपन्नो यव इति जातावेकवचनम्। संपन्ना यवा इति व्यक्तिभेदेषु बहुवचनम्। वयमिति वाह्याध्यात्मिकेषु भावेषु।[६] यथा। गुरुषु अहमिति पुनरभेदविवक्षायामेकवचनम् ॥

आमन्त्रणे च ॥ १८ ॥

आमन्त्रणे चार्थे प्रथमा विभक्तिर्भवति। हे पुत्र। हा पुत्र। धिक् पुत्रौ। हे पुत्राः। षष्ठ्यपवादोऽयम्[७] ॥

शेषाः कर्मकरणसंप्रदानापादानस्वाम्याद्यधिकरणेषु ॥ १९ ॥

शेषा द्वितीयाद्याः षड्विभक्तयः कर्मादिष्वर्थेषु षट्सु यथा-

---

१ अव्यतिरिक्ति° D. E.
२ उच्चकैः। D.
३ अन्वयत्वात् E.
४ °संज्ञायाम्°। D. E.; °संज्ञिकस्मिन्° B.
५ द्वयोरर्थयोर्द्विवचनम्। बहुष्वर्थेषु बहुवचनम्। D. E. F.; यथा संपन्नो° E.
६ D. E. add बहुवचनम्। E. om. from यथा°
७ E. om. from षष्ठ्य°

संख्यं भवन्ति। कर्मणि। कटं करोति॥(१) करणे। परशुना छिनत्ति॥ संप्रदाने। गुरवे गां ददाति॥ अपादाने। वृकाद्भयम्(२)॥ स्वाम्यादौ। देवदत्तस्य स्वामी। यज्ञदत्तस्य स्वम्। विष्णुमित्रस्य संबन्धः॥ अधिकरणे। कट आस्ते। अधीती व्याकरणे। तथा। साधुर्मातरि। असाधुः पितरीत्येवमादयः(३)॥ निमित्तात्कर्मसंयोगे सप्तमी वाच्या। चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्। केशेषु चमरीं हन्ति सीम्नि पुष्कलको(४) हतः॥

## पर्यपाङ्योगे(५) पञ्चमी॥ २०॥

परि। अप। आङ्। एभिर्योगे लिङ्गात्पञ्चमी भवति॥ इहापपरी(६) वर्जने। आङ् मर्यादाभिविध्योः॥ परि त्रिगर्तेभ्यो वृष्टो देवः। अप पाटलिपुत्राद्वृष्टो देवः। आ पाटलिपुत्राद्वृष्टो देवः॥

## दिगितरर्तेऽन्यैश्च॥ २१॥

दिश्। इतर। ऋते। अन्य। एभिर्योगे लिङ्गात्पञ्चमी भवति। पूर्वो ग्रामात्। उत्तरो ग्रामात्। पूर्वो ग्रीष्माद्वसन्तः। इयमस्याः पूर्वा दिक्। इतरो देवदत्तात्। ऋते देवदत्तात्(७)॥ ऋते

---

१ D. adds ओदनं पचति।
२ ०भयं भवति F.
३ साधुः पितरि। इत्यादयः। E.
४ पुष्पलको A. B.
५ पर्यपायोगे A.
६ ०अपपरि F.
७ A. om. this example.

देवदत्तमिति द्वितीयापीष्टा॥ अन्यो देवदत्तात्। भिन्नो देवदत्तात्॥(१)

### द्वितीयैनेन॥ २२॥

एनप्रत्ययान्तेन योगे लिङ्गाद् द्वितीया भवति। दक्षिणेन ग्रामम्। उत्तरेण हिमवन्तम्। अदूर एनो ऽपञ्चम्याः॥ चकाराधिकाराद् निकषासमयाहाधिगन्तरान्तरेणयुक्ता द्वितीया। निकषा ग्रामम्। समया ग्रामम्। हा देवदत्तम्। धिग्देवदत्तम्। अन्तरा गार्हपत्यमाहवनीयं च वेदिः। अन्तरेण पुरुषकारं(२) न किंचिल्लभ्यते॥

### कर्मप्रवचनीयैश्च॥ २३॥

कर्मप्रवचनीयैर्योगे(३) लिङ्गाद् द्वितीया भवति। वृक्षमभि विद्योतते विद्युत्। वृक्षं वृक्षमभि तिष्ठति। साधुर्देवदत्तो मातरमभि। यदत्र मां परि स्यात्(४)। यदत्र(५) मां प्रति स्यात्। वृक्षमनु विद्योतते विद्युत्। पर्वतमनु वसिता सेना। अन्वर्जुनं योद्धारः। उपार्जुनं योद्धारः॥ लक्षणवीप्सेत्थंभूते ऽभिर्भागे(६) च परिप्रती। अनुरेषु सहार्थे च हीन उपश्च कथ्यते॥ आधिक्यार्थोपशब्दयोगे(७) सप्तमी वाच्या। उप खार्यां(८) द्रोणः॥ स्वाम्यर्था-

---

१ D. E. add पृथग्देवदत्तात्।
२ पुरुषाकारं D. E.; किंचिन्न° E.
३ कर्मप्रवचनीयैश्च एभिर्योगे E.
४ D. om. this example.
५ तदत्र E.
६ भूतेष्वभिर्भागे A. B. F.
७ °शब्दसंयोगे A. F.
८ षार्यां E.

धियोगे च। अधि ब्रह्मदत्तेषु पञ्चालाः। अधि पञ्चालेषु ब्रह्मदत्त इति॥

गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि(१) ॥ २४ ॥

गत्यर्थानां धातूनां चेष्टाक्रियाणां कर्मण्यध्ववर्जिते(२) द्वितीयाचतुर्थ्यौ(१) भवतः। ग्रामं गच्छति। ग्रामाय गच्छति। ग्रामं(३) व्रजति। ग्रामाय(३) व्रजति॥ चेष्टायामिति किम्। मनसा मेरुं(४) गच्छति॥ अनध्वनीति किम्। अध्वानं गच्छति। पन्थानं गच्छति(५)। पन्थानं व्रजति। मुख्योऽत्राध्वा गृह्यते(६)॥

मन्यकर्मणि चानादरेऽप्राणिनि ॥ २५ ॥

मन्यतेः कर्मणि प्राणिवर्जिते(७) द्वितीयाचतुर्थ्यौ(१) भवतः। अनादरे गम्यमाने। न त्वा तृणं मन्ये। न त्वा तृणाय मन्ये। न त्वा बुषं मन्ये। न त्वा बुषाय मन्ये(८)॥ अनादर इति किम्। अश्मानं दृशदं मन्ये(९)॥ प्राणिसंज्ञा(१०) नावादेरिति। न त्वा

---

१ °चतुर्थौ° A. B.

२ °अध्वनि वर्जिते E.

३ नगरं° नगराय D. E.

४ स्वर्गं E.

५ पन्थानमृच्छति E.; A. om. this, B. E. the next example.

६ ऽत्रध्वा° D.; F. adds तेन चन्द्रादुत्प्लुत्य गच्छति।

७ प्राणिगणवर्जिते D. E.

८ बुसं° बुसाय° E.

९ [अस्मानं D.] दृषदं° D. E.; अश्मानं दृषदं मन्ये। मन्ये काष्ठमुदूखलम्। अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति। F.

१० अप्राणिनीति किं। E.; which places the above after शृगालं मन्ये।

नावं मन्ये । न त्वा काकं मन्ये[१] । न त्वान्नं मन्ये । न त्वा शृगालं मन्ये ॥ इह स्यादेव । न त्वा श्वानं मन्ये । न त्वा शुने मन्ये ॥ यदि युष्मदः स्याच्चतुर्थी तदानादरो न गम्यते[२] ॥

## नमःस्वस्तिस्वाहास्वधालंवषड्योगे चतुर्थी ॥ २६ ॥

नमआदिभिर्योगे[३] लिङ्गाच्चतुर्थी भवति । नमो देवेभ्यः । स्वस्ति प्रजाभ्यः । स्वाहाग्नये । स्वधा पितृभ्यः । अलं मल्लो मल्लाय । समर्थो मल्लो मल्लाय । वषडिन्द्राय ॥

## तादर्थ्ये ॥ २७ ॥

सोऽर्थोऽस्येति तस्मा इदमिति वा तदर्थः[४] ॥ तदर्थभावे द्योत्ये[५] लिङ्गाच्चतुर्थी भवति । यूपाय दारु । रन्धनाय स्थाली । श्राद्धाय निगल्हते[६] । युद्धाय सन्नह्यते । पत्ये शेते । तथा मूत्राय संपद्यते यवागूः । मूत्राय संकल्पते[७] । वाताय कपिलिका विद्युत्[८] ॥

## तुमर्थाच्च भाववाचिनः ॥ २८ ॥

तुमा समानार्थभाववाचिनः[९] प्रत्ययान्ताल्लिङ्गाच्चतुर्थी

---

१ D. om. this example.

२ न गम्यत एव । D.; न गम्यत इति । B.

३ Thus F.; नमआदि एभिर्योगे A. B. E.; नमआदिर्योगे D.

४ तदर्थं D. E.; F. om. the first इति; D. om. वा.

५ तदर्थयोगे E.

६ निगलहते F.

७ D. om. from युद्धाय°; मुत्राय संपते यवागूः । A; तथा मुत्रं मूत्राय संपद्यते यवागूः । B.

८ कपिला° E.; D. E. add आतपायातिलोहिनी । पीता वर्षाय विज्ञेया । दुर्भिक्षाय सिता (श्वेता D.) भवेत् ॥

९ तुमा समानार्थाद् [तुमस° D. E.] भाववाचिनः D. E. F.

भवति। भाववाचिनश्चेति वक्ष्यति। पाकाय व्रजति। पक्तये व्रजति॥[१] तुमर्थादिति किम्। पाकस्य। त्यागस्य॥ एधेभ्यो[२] व्रजति। फलेभ्यो व्रजति। तादर्थ्यविवक्षा[३]॥

तृतीया सहयोगे ॥ २९॥

सहार्थेन योगे लिङ्गात्तृतीया भवति। पुत्रेण सहागतः। पुत्रेण सह स्थूलः। पुत्रेण सह गोमान्। पुत्रेण साकम्। पुत्रेण सार्धम्[४]। पुत्रेण समम्। तथा पुत्रेणागतः[५] स्थूलो गोमानिति तृतीयापि षष्ठीवदप्रधानादेव॥

हेत्वर्थे ॥ ३०॥

हेत्वर्थे वर्तमानाल्लिङ्गात्तृतीया भवति। धनेन कुलम्। अन्नेन वसति॥ योग्यतामात्रविवक्षया करणेन सिध्यति[६]॥

कुत्सितेऽङ्गे ॥ ३१॥

कुत्सितेऽङ्गे वर्तमानाल्लिङ्गात्तृतीया भवति। अक्ष्णा काणः। पादेन खञ्जः[७]। पृष्ठेन कुब्जः[८]। अक्षि काणमस्येति प्रधानत्वात्प्रथमैव॥

---

१ D. E. add पचनाय व्रजति।

२ कथमेधेभ्यो D. E.

३ °विवक्षया। D.; तादर्थ्यचतुर्थी सिद्धम्॥ A.

४ A. om. this, E. the next, example.

५ तथा सह पु° E.

६ करणेन न सिध्यतीति वचनं॥ F.

७ षञ्जः। D. E.

८ Om. D.; E. has शिरसा (!) षल्वाटः instead.

## विशेषणे ॥ ३२ ॥

विशेषणे वर्तमानाल्लिङ्गात्तृतीया भवति। जटाभिस्तापसमद्राक्षीत्। शिखया[१] परिव्राजकमपश्यत्॥ विशेषण इति किम्। वृक्षं प्रति विद्योतनम्॥ लक्षणमात्रे न स्यात्। नीलमुत्पलमिति[२]। लिङ्गार्थमात्रे प्रथमैव॥

## कर्तरि च ॥ ३३ ॥

कर्तरि च कारके वर्तमानाल्लिङ्गात्तृतीया भवति। देवदत्तेन कृतम्। चैत्रेण हन्यते[३]॥

## कालभावयोः सप्तमी ॥ ३४ ॥

कालभावयोर्विशेषणभूतयोर्वर्तमानाल्लिङ्गात्सप्तमी[४] भवति। शरदि पुष्यन्ति[५] सप्तच्छदाः। गोषु दुह्यमानास्वागतः[६]। दुग्धास्वागतः॥ कालभावयोरिति किम्। यो जटाभिः स भुङ्क्ते। यो भोक्ता स देवदत्त इति। साहचर्याद्वा प्रसिद्धा क्रियैव[७] हि विशेषणम्[८]। रुदतः प्राव्राजीदिति संबन्धविवक्षापि[९]॥

---

१ शिषया D.; शषया E.
२ नीलोत्पलमिति। A. B. E.
३ यज्ञदत्तेन भुक्तम्॥ D. E.; F. om. this example.
४ °विशेषणयोर्वर्त° D. E.
५ पुष्पन्ति E. F.
६ दुह्यमानासु गतः D. E. F.; D. om. the next example.
७ प्रसिद्धक्रियैव A. E.
८ E. F. add रुदति प्राव्राजीत्।
९ °विवक्षयापि। A.; °विवक्षा। E.

स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः षष्ठी च ॥ ३५ ॥

स्वामिन्। ईश्वर। अधिपति। दायाद। साक्षिन्। प्रतिभू। प्रसूत। एभिर्योगे लिङ्गात्षष्ठी भवति सप्तमी च। गवां स्वामी। गोषु स्वामी। गवामीश्वरः। गोष्वीश्वरः। गवामधिपतिः। गोष्वधिपतिः। गवां दायादः। गोषु दायादः। गवां साक्षी। गोषु साक्षी। गवां प्रतिभूः। गोषु प्रतिभूः। गवां प्रसूतः। गोषु प्रसूतः॥ संबन्धोऽत्र स्फुट इति वचनम्॥

निर्धारणे च ॥ ३६ ॥

निर्धारणे चार्थे वर्तमानाल्लिङ्गात्षष्ठी भवति सप्तमी च। पुरुषाणां क्षत्रियः शूरः। पुरुषेषु क्षत्रियः शूरः। गवां कृष्णा संपन्नक्षीरा। गोषु कृष्णा संपन्नक्षीरा। गच्छतां धावन्तः शीघ्राः। गच्छत्सु धावन्तः शीघ्राः॥

षष्ठी हेतुप्रयोगे ॥ ३७ ॥

हेतोः प्रयोगे वर्तमानाल्लिङ्गात्षष्ठी(१) भवति। अन्नस्य हेतोर्वसति॥ हेत्वर्थे तृतीया प्राप्ते वचनम्(२)॥

स्मृत्यर्थकर्मणि ॥ ३८ ॥

स्मरणार्थानां धातूनां प्रयोगे कर्मणि षष्ठी भवति। मातुः

---

१ हेतुप्रयोगे लिङ्गात्षष्ठी A.　　२ प्राप्नोति वचनम्। D.; प्राप्नोति। E.

स्मरति। पितुरध्येति(१)॥ उत्तरत्र नित्यग्रहणादनित्यमपि प्रकरणेऽस्मिन्। मातरं स्मरति॥ कथं माता स्मर्यते। उक्तार्थत्वात् प्रथमैव(२)। मातुः स्मर्यत इति यदि संबन्धोऽत्र(३) विवक्ष्यते। तथा सर्पिषो दयते। मधुन ईष्टे(४)। सर्पिषो जानीते। मधुनो जानीते। संभ्रान्तिज्ञाने सर्पिषोऽसतः(५) करणत्वाभावात्संबन्ध एव षष्ठी। एवमन्येऽपि॥

## करोतेः प्रतियत्ने॥ ३९॥

सतो गुणान्तराधानं(६) प्रतियत्नः॥ करोतेः कर्मणि(७) प्रतियत्ने गम्यमाने(८) षष्ठी भवति। एधोदकस्योपस्कुरुते। एधोदकमुपस्कुरुते॥

## हिंसार्थानामज्वरेः॥ ४०॥

हिंसार्थानां धातूनां ज्वरिवर्जितानां प्रयोगे(९) कर्मणि षष्ठी भवति। चौरस्य रुजति। दास्या(१०) आमयति। चौरस्योज्जासयति। चौरस्य निहन्ति। चौरस्य प्रहन्ति(११)। चौरस्य प्रणि-

१ मातुराध्येति E.
२ D. E. F. om. प्रथमैव.
३ ऽपि E.; विवचते D. E.
४ इच्छति corr. F.
५ °ज्ञानेन सर्पिषोऽत इति करण°E.
६ °आपादनं E.
७ Om. F.
८ E. adds लिंगात्.
९ Om. E.
१० चौरस्य D.
११ B. E. D. om. this example; F. adds चौरस्य निप्रहन्ति.

हन्ति। चौरस्योन्नाटयति। चौरस्योत्क्राथयति(१)। चौरस्य पिनष्टि॥ अनित्यमपि। चौरं रुजतीत्यादि॥ हिंसार्थानामिति किम्। धानाः पिनष्टि॥ अज्वरेरिति किम्। चौरं ज्वरयति(२)। चौरस्य संतापयतीतीष्यत एव(३)॥

## कर्तृकर्मणोः कृति नित्यम्॥४१॥

कर्तृकर्मणोः कृत्प्रयोगे(४) नित्यं षष्ठी भवति। भवतः शायिका। भवत आसिका(५)॥ कर्मणि च(६)। अपां स्रष्टा। पुरां(७) भेत्ता॥ कृतीति किम्। तद्धितप्रयोगे मा भूत्। कृतपूर्वी कटम्॥

## न निष्ठादिषु॥४२॥

कर्तृकर्मणोर्निष्ठादिषु(८)षष्ठी न भवति। देवदत्तेन कृतम्(९)। ओदनं भुक्तवान्। ओदनं पचन्(१०)। ओदनं पचमानः॥ तत्र(११) निष्ठादयः। क्त। क्तवन्तु। शन्तृङ्। आन(१२)। वन्सु। कि। उदन्त। उकञ्। अव्ययखलर्थतृण्(१३)॥ द्विषः शन्तौ वा वक्तव्यम्। चौरं द्विषन्। चौरस्य द्विषन्।

---

१ °उत्क्राथयति A.

२ D. E. add कर्कटी।

३ संतापयतीत्यर्थः। E.; °तीत्यपि। D.

४ कृति प्रयोगे F.

५ आशिका A. D. F.

६ A. om. कर्मणि च; B. om. च.

७ पुरं A.

८ B. D. add प्रयोगे; E. कृत्प्रयोगेषु.

९ भुक्तम्। D.; E. adds ओदनं भुक्तः

१० D. om. this example.

११ Om. D. E.

१२ आनश् D. E.; B. supplies स.

१३ °तृन् F.; °खलर्थास्तृण D.; °खलर्थाः। तृन्। E.

## षडो णो ने ॥ ४३ ॥

षडो णो भवति । विभक्तौ ने परे । षण्णाम् ॥ विभक्ताविति किम् । षड्नयनम् ॥

## मनोरनुस्वारो धुटि ॥ ४४ ॥

मनोरनन्त्ययोरनुस्वारो भवति धुटि परे । पुंसः । शान्तिः । उञ्छिता । युञ्जौ । स्वाम्पि ॥ अनन्त्ययोरिति किम् । प्रशान्करोति ॥ स्वादि धुटि पदान्तवत्(१) । पुम्भ्याम् । पुंभ्याम् । प्रशान्भ्याम् । सुकन्भ्याम् ॥ धुटीति किम् । गम्यते । हन्यते ॥

## वर्गे वर्गान्तः ॥ ४५ ॥

अनन्त्यो(२) ऽनुस्वारो वर्गे परे वर्गस्यान्तो भवति(३) । शङ्किता । उञ्छिता । वञ्चिता(४) । युञ्जौ । स्वाम्पि ॥ वर्ग इति किम् । आक्रंस्यते ॥

## तवर्गश्चटवर्गयोगे चटवर्गौ ॥ ४६ ॥

तवर्गोऽनन्त्यश्चटवर्गयोगे चटवर्गौ प्राप्नोति(५) । आन्तरतम्यात् । मज्जति । लज्जते(६) । भ्रज्जति(६) । यज्ञः । याच्ञा ।

---

१ पदांतवद्भावात् E.
२ Om. E.
३ तद्वर्गस्यान्तो° F.; D. om. परे; E. adds श्रुतस्यैव ।; F. श्रुतत्वात् तस्यैव ।; D. तस्यैव श्रुतत्वात् ।
४ वङ्किता E.; om. D.; E. F. add नन्दिता ।
५ भवतः E. F.
६ Om. D.; F. adds लज्जति ।

राज्ञः ॥ टवर्गयोगे च । षसाम् । अड्डुति[१] । अट्टति[१] । अट्टते[१] ॥ चटवर्गयोग[२] इति किम् । विश्नः । प्रश्नः ॥ अनन्त्य इति किम् । मधुलिट् तरति ॥

**नामिकरपरः[३] प्रत्ययविकारागमस्थः सिः[४] षं नुविसर्जनीयषान्तरोऽपि ॥ ४७ ॥**

नामिकरेभ्यः परः प्रत्ययविकारागमस्थोऽनन्त्यः सिः[४] षत्वमापद्यते । नुविसर्जनीयषान्तरः[५] । अपिशब्दादनन्तरोऽपि । नामिपरस्तावत् । अग्निषु । वायुषु ॥ कपरः । दिक्षु ॥ रपरः । गीर्षु । धूर्षु ॥ विकारस्थः[६] । एषः ॥ आगमस्थः । सर्वेषाम् ॥ नुविसर्जनीयषान्तरः[७] । सर्पींषि । धनूंषि । सुपीःषु । सुहूःषु[८] ॥ रप्रकृतिरनामिपरोऽपीति रत्वे वा[९] पश्चादीरुरी[१०] । सर्पिष्षु । धनुष्षु[११] ॥ अपिशब्दस्य बहुलार्थत्वात् समासे । अङ्गुलेः सङ्गस्य । अङ्गुलिषङ्गः । तथा भीरोः स्थानस्य । भीरुष्ठानम् । अग्नेः स्तुतः । अग्निष्टुत्[१२] । दीर्घात्सोमस्य । अग्नीषोमौ । ज्योतिरायुर्भ्यां च

---

१ B. F. om. अड्डुति । D. om. अट्टति । A. E. om. अट्टते ।

२ चवर्ग° E.

३ करपरप्र° A. E.

४ सः E.

५ °षांतरोऽपि E.

६ विकारागमस्थः F.

७ °षान्तरोऽपि D. E.

८ F. adds दोःषु ।

९ रत्वे प्राप्ते वा E.; D. F. om. वा.

१० D. adds षान्तरः ।

११ F. adds दोष्षु ।

१२ अग्निष्टुतः । F.

स्तोमस्य। ज्योतिष्टोमः[१]। आयुष्टोमः[२]। अग्निष्टोमः॥ समास इत्येव। ज्योतिः स्तोमं दर्शयतीत्येवमादयः[३]॥

रषृवर्णेभ्यो नो णमनन्त्यः स्वरहयवकवर्गपवर्गान्तरोऽपि॥४८॥

रेफषकारऋवर्णेभ्यः परोऽनन्त्यो नकारो णमापद्यते[४]। स्वरहयवकवर्गपवर्गान्तरोऽपि[५]॥ स्वरान्तरस्तावत्। हरणम्। पुरुषेण। मातृकेण॥ हान्तरः। अर्हेण॥ यान्तरः। आर्येण[६]॥ वान्तरः। पर्वणा॥ कवर्गान्तरः। अर्केण। मूर्खेण॥ पवर्गान्तरः। दर्पेण। रेफेण॥ अनन्तरोऽपि। शीर्णम्। तिसृणाम्[७]॥ स्वरत्वादनुस्वारविसृष्टाभ्यामपि[८]। बृंहणम्। उरःकेण। उरःपेण॥ विसर्जनीयोपचाराद् जिह्वामूलीयोपध्मानीयाभ्यामपि। उरᳵकेण[९]। उर᳷पेण[९]॥ अनन्त्य इति किम्। वृचान्॥ कथम् अग्निर्नयति। यस्यैवानन्त्यो नकारस्तस्यैव रषृवर्णा गृह्यन्ते। श्रुतत्वात्॥ अपिशब्दस्य बहुलार्थत्वात् पूर्वपदस्थेभ्यः संज्ञायाम्। सूर्पणखेत्यादयः[१०]॥

---

१ ज्योतिःष्टोमः etc. A. E.
२ Om. D.
३ दर्शयतीत्यादयः। F.
४ णत्वम॰ A.; णकारम॰ D. E.
५ D. E. F. add अपिशब्दादनन्तरोऽपि।
६ अर्येण F.
७ E. adds चतसृणां
८ ॰विसर्जनीयाभ्यामपि B.
९ Om. B. D.; उर᳷पेण E.; उरᳵकेण। F.; उर᳷पेण। E. F.
१० E. adds सिद्धाः। सूर्पणा॰ B.; सूर्पणखेत्येवमादयः F.; ॰खेत्यादि D.

## स्त्रियामादा(१) ॥ ४९ ॥

स्त्रियां वर्तमानाल्लिङ्गादकारान्ताद् आप्रत्ययो भवति। स्त्रीपुंनपुंसकानि लोकलिङ्गानुशासनगम्यानि(२)। अजा। एडका। चटका। मूषिका(३) ॥

## नदाद्यन्चिवाह्यस्यन्तृसखिनान्तेभ्य ई(४) ॥ ५० ॥

नदादि। अञ्चि(५)। वाह्। उ। इ। अन्सि(६)। अन्त्। ऋ। सखि। नान्तेभ्यः स्त्रियां वर्तमानेभ्य ईप्रत्ययो भवति। नदी। मही। भषी। प्लवी ॥ अञ्चि(७)। प्राची। अतिप्राची ॥ वाह्। प्रष्ठौही ॥ उदन्त। पट्वी ॥ इदन्त। दाची ॥ अन्स्यन्त। विदुषी। अतिविदुषी ॥ अन्तन्त(८)। पचन्ती। अतिपचन्ती। भवती(९)। मघवती ॥ ऋदन्त। कर्त्री। अतिकर्त्री ॥ सखि। सखी ॥ नान्त। दण्डिनी ॥(१०) उतो गुणवचनादखरुसंयोगोपधाद्वा। पटुः। पट्वी(११) ॥ बह्वरित्यपि स्यात् ॥ खरुरियम्। पाण्डुरियमित्यतो न स्यात् ॥ इतश्च क्तिवर्जिताद्वा। धूलिः। धूली ॥ क्तेस्तु न स्यात्। पङ्क्तिः ॥ स्वसा। दुहिता। ननान्दा। याता। माता। तिस्रः। चतस्र इति प्रत्ययेन

---

१ °आदाः। E.
२ °गम्यमानि। A.
३ F. adds अश्वा। D. अश्वका [मूखिका].
४ नदाद्यन्चवा° D.; नदाद्यंचवा° E.
५ अन्च D.; अंच E.
६ अन्स D.; अंसि। अंतु E.
७ अंच्। ° E.; अन्च। अन्ची। प्राची। प्रतीची। उदीची। अतिप्रतीची। D.
८ अन्त् D. E.; अन्त अन्त A.; A. F. om. अतिविदुषी.
९ भगवती E.; D. F. om. अतिपचन्ती।
१० अप्यधिकाराद् उतो° E. F.
११ D. E. add बह्वी।

विना स्त्रीत्वाभिधानात् । पञ्च सप्तेति स्त्रीत्वाभावादेव न भवति ॥ सखीति नित्यार्थम्(१) ॥ नदादिराकृतिगणः(२) ॥

## ईकारे स्त्रीकृते ऽलोप्यः ॥ ५१ ॥

ईकारे स्त्रियां कृते ऽकारो लोप्यो भवति । नदी । मही(३) ॥ स्त्रियामिति किम् । कुण्डे ॥ कृत इति किम् । कुण्डेहा ॥

## स्वरो ह्रस्वो नपुंसके ॥ ५२ ॥

नपुंसके वर्तमानः स्वरान्तो(४) ह्रस्वो भवति । सोमपम् । सेनानि । यवलु । अतिरि । अतिनु कुलम् ॥ स्वरो ह्रस्व इति योगविभागाद्(५) गोरप्रधानस्यान्तस्य स्त्रियामादादीनां चेति ह्रस्वः(६) । चित्रगुः । अतिखट्वः । निष्कौशाम्बिः(७) । अतिकरभोरुः ॥

॥इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये कारकपादः समाप्तः(८)॥

---

१ नित्यार्थप्पाठः । D.; नित्यार्थोयं । E.; नित्यार्थः । N.
२ °गणोऽयं E.
३ E. N. add भषी । स्रवी ।
४ स्वरो D. E.
५ योगविभागात्तेन गो° D.; योगविभागः । तेन गोर° N.
६ च ह्रस्वो भवति । D. N.
७ अतिषट्वः । निःकौशाम्बिः । D.
८ कारकः पादः° A. B. F.; °नाम्नि चतुर्थः पादः समाप्तः ॥ D.; °वृत्तौ कारकप्रकरणं समाप्तं E.; वृत्तौ चतुर्थः कारकपादः । N.

**नाम्नां समासो युक्तार्थः ॥ १ ॥**

वस्तुवाचीनि नामानि ॥ मिलितं(१) युक्तमुच्यते ॥ नाम्नां युक्तार्थः समाससंज्ञो(२) भवति । ततोऽन्यद्वाक्यमिति रूढम् । संज्ञयैव(३) वा विधिरन्वाख्यातः । स पुनरभिधानात् कचिद्विकल्पः कचिन्नित्यः कचिन्न स्यात् । तथा च वक्ष्यति(४) ॥

**तत्स्था लोप्या विभक्तयः ॥ २ ॥**

तत्स्था युक्तार्थमात्रस्था विभक्तयो लोप्या भवन्ति । नीलोत्पलम् । राजपुरुषः । राजता । पुत्रीयति ॥ कचिन्न लुप्यन्ते(५)ऽभिधानात् । कण्ठेकालः । उरसिलोमा । इत्येवमादयः ॥

**प्रकृतिश्च स्वरान्तस्य ॥ ३ ॥**

स्वरान्तस्य लिङ्गस्य युक्तार्थस्यस्य(६) लुप्तासु विभक्तिषु प्रकृतिश्च(७) भवति । सखा प्रियोऽस्येति सखिप्रियः ॥ सखायं प्राप्तः । सखिप्राप्तः ॥ पितरि साधुः । पितृसाधुः ॥ गां गतः । गोगतः ॥ चकारो लोपमपेक्ष्य(८) । देवेन्द्रः । खरोढः । इति सन्धिः स्यादेव(९) ॥

---

१ मीलितं D. E. N.; मितं B.
२ समासो E. N.
३ संज्ञैव D.; स्वसंज्ञयैव E. N.
४ A. om. from तथा°
५ लुप्यंते D. E. N.
६ युक्तार्थमात्रस्थस्य A.; om. D. E. N.
७ D. om. च.
८ लोपमपेचते । D. E. N.; D. adds तेन; E. देवानामिंद्रो ।
९ घरोढः° D.; D. E. N. om. एव ।

## व्यञ्जनान्तस्य यत्सुभोः ॥ ४ ॥

व्यञ्जनान्तस्य लिङ्गस्य युक्तार्थस्य(१) लुप्तासु विभक्तिषु सुभोर्यदुक्तं तद्भवति। सुपि मुख्यं कार्यं नास्तीति(२) सुभोर्युगपदुक्तं स्यात्। विद्वद्गमनम्। दिग्गतः(३)। षडाकृतिः। ज्ञानभुदाश्रयः॥ अतिदेशोऽयम्(४)॥

## पदे तुल्याधिकरणे विज्ञेयः कर्मधारयः ॥ ५ ॥

यत्र समासे द्वे पदे तुल्याधिकरणे भवतः स कर्मधारयो विज्ञेयः। नीलं च तदुत्पलं चेति नीलोत्पलम्॥ क्वचिन्नित्यसमासः। कृष्णसर्पः। लोहितशालिः॥ क्वचिदसमासः। दीर्घस्रारायणः। रामो जामदग्न्यः(५)। व्यासः पाराशर्यः(६)। अर्जुनः कार्तवीर्यः॥ तथैकाधिकरणत्वात्। कृष्टमदीकृतः(७)। छिन्नप्ररूढः। एकपुरुषः। सर्वान्नम्। जरद्धस्ती। पुराणधान्यम्। नवोदकम्। केवलान्नम्॥ तथा(८) पूर्वेषुकामसमी। संज्ञेयम्(९)॥ संख्यापूर्वपदेऽपि। सप्तर्षयः। पञ्चाम्राः॥ तथा याज्ञिककितवः। एवं पापकुलालः। अनकनापितः(१०)॥ क्वचिदुपमान-

---

१ युक्तार्थमात्रस्य A.; युक्तार्थमात्रस्य D. E. N.

२ A. om. इति.

३ द्युगतः E. N.

४ कार्यातिदेशो D.; E. supplies कार्या in the margin.

५ यामदग्न्यः B. D. F.

६ पारासर्यः A. B. D. E. N.

७ कृष्टमतीकृतः E. N.

८ Om. B. D.

९ Om. B.; समीति सं° D. E. N.

१० अणकनापितः E. N.; अणकणापितः D.

भूतं विशेषणं । शस्त्रीव श्यामा । शस्त्रीश्यामा[१] ॥ क्वचिदुपमानभूतं विशेषणं परं स्यात्[२] । पुरुषो व्याघ्र इव । पुरुषव्याघ्रः । एवं पुरुषसिंहः ॥ तथा पूर्वपुरुषः । अपरपुरुषः । प्रथमपुरुषः । चरमपुरुषः । जघन्यपुरुषः । समानपुरुषः[३] । मध्यपुरुषः । मध्यमपुरुषः । वीरपुरुषः ॥ एवमश्रेण्यः श्रेण्यः कृताः । श्रेणीकृताः[४] ॥ तथा कृताकृतम्[५] । भुक्तापभुक्तम्[६] । गतप्रत्यागतम् । यातानुयातम्[७] । अशितानशितम्[८] । क्लिष्टाक्लिशितम्[९] । क्रयाक्रयिका । फलाफलिका । पुटापुटिका । मानोन्मानिका ॥ तथा[१०] सत्पुरुषः । महापुरुषः ॥ परमपुरुषः । उत्तमपुरुषः । पुरुषोत्तम इति विशेषणं वा[११] परं स्यात् । उत्कृष्टपुरुषः ॥ तथा गोवृन्दारकः । गोनागः । अश्वकुञ्जरः ॥ कतरकठः । कतमकठः ॥ किंराजा ॥ इभ्यपोटा[१२] । इभ्ययुवतिः । अग्निस्तोक इति विशेषणं वा[१३] परं स्यात् ॥ एवं दधिकतिपयानि[१४] । गोगृष्टिः । गोधेनुः । गोवशा । गोवेहत् ।

---

१ °विशेषणं पूर्वं स्यात् । शस्त्रीश्यामा । D. E. H.
२ वा परं स्यात् A. E.
३ सामान्यपुरुषः D. E. N.
४ श्रेणिकृताः A.
५ कृतापकृतम् । D.
६ भुक्त्वापभुक्तम् । B.
७ जातानुजातं D.
८ असितानसितं N.; आसितानशितं E.
९ °क्लिपितं D.; क्लिशिताक्लिशितम् । A.; क्लिष्टाक्लिपितं D.; क्लिष्टानुक्लिशितं N.; क्लिष्टमक्लिशितं । क्लिष्टाक्लिशितं । E.
१० Om. D. E. N.
११ Om. B. N.
१२ इभ्यपोता F.
१३ Om. E. N.
१४ E. adds गोगर्भिणी । अजगर्भिणी ।

गोबष्क्रयणी[1]। कठप्रवक्ता। कठश्रोत्रियः। कठाध्यापकः। कठधूर्तः॥ गोप्रकाण्डम्। अश्वमतल्लिका॥ युवखलतिः। युवखलती[2]। युवपलितः। युवपलिता। युववलिनः। युववलिना। युवजरन्[3]। युवजरती॥ भोज्योष्णम्। तुल्यश्वेतः। सदृशश्वेतः। शुक्लकृष्णः। शुक्लशुक्लः॥ कुमारी च सा श्रवणा चेति कुमारश्रवणा[4]। कुमारप्रव्रजितः। कुमारप्रव्रजिता। कुमारपण्डितः। कुमारपण्डिता॥ गोगर्भिणी। अजगर्भिणी॥ मयूर इव व्यंसकः। मयूरव्यंसकः[5]। मयूरस्येव विगतावंसावस्येति विग्रहः[6]। एवं छात्रव्यंसकः॥ कम्बोज इव मुण्डः। कम्बोजमुण्डः। उच्चं च तदवचं चेत्युच्चावचम्। एवमुच्चनीचम्। न किंचन। अकिंचनम्[7]। नास्य वा किंचनास्तीत्यकिंचनम्[8]॥ पूर्वश्चासौ कायश्चेति पूर्वकायः। कायैकदेशे कायः। एवम् अपरकायः। अधरकायः। उत्तरकायः। मध्यकायः। मध्यमकायः। मध्याह्नः[9]॥ अर्धं च तत्पिप्पली चेत्यर्धपिप्पली[10]। पिप्पल्यर्धमिति[11] षष्ठीसमासोऽपि दृश्यते हि[12]। वेद्यर्धं[13] दक्षिणं मेरोः। शरार्धम्। चापार्धम्। चुल्लिकार्ध-

---

१ गोवस्क्रयनी A.; गोवस्क्रयणी B.
२ युवखलिता। D. N. and orig. E.
३ युवजरणः F.; यवजरनः B.
४ °श्रमणा च कुमारश्रमणकुमारश्रमणा। N.
५ Om. A. B.
६ विगतावंशा° B.; °वा विग्रहः A.F.
७ न किंचनं N.; न किंचनमकिंचनं D. E.
८ नास्य वा किंचनमस्ती° D. E. N.
९ मध्याह्नकायः। B; मध्याह्नं E.
१० E. N. thrice पिप्पली.
११ अपि for इति E.
१२ Om. B. D. E.
१३ वेदार्धं° D. E. N; चेद्यर्धंद° A.; चेत्यर्द्धं B.

मिति[१]। असमप्रविभागेऽपि। न हीदमर्धजरतीयं[२] लभ्यमिति॥ एवं द्वितीयभिक्षा। भिक्षाद्वितीयम्[३]। तृतीयभिक्षा। भिक्षातृतीयम्[३]। चतुर्थभिक्षा। भिक्षाचतुर्थम्[३]। तुरीयभिक्षा। भिक्षातुरीयम्[३]। तुर्यभिक्षा। भिक्षातुर्यम्[३]॥ मासजातः[४]। संवत्सरजातः। इति[५] बहुव्रीहिणा सिद्धम्॥ न ब्राह्मणः। अब्राह्मणः[६]॥ कर्मधारयप्रदेशः। कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते [का० २. ५. २०] इत्येवमादयः॥

संख्यापूर्वो द्विगुरिति ज्ञेयः[७] ॥ ६ ॥

कर्मधारय इति संबन्धः। पञ्चसु कपालेषु[८] संस्कृत ओदनः पञ्चकपाल ओदनः[९]। पञ्च गावो धनमस्येति पञ्चगवधनम्[१०]। पञ्चानां पूलानां समाहारः पञ्चपूली। तद्धितार्थोत्तरपदसमाहारेषु संज्ञेयम्॥

तत्पुरुषावुभौ ॥ ७ ॥

उभौ द्विगुकर्मधारयौ तत्पुरुषसंज्ञौ ज्ञेयौ[११]॥ तत्पुरुष-

---

१ खरार्द्ध। आर्यार्द्ध। तूलिकार्द्ध। E. N.; खरार्द्ध। चूडिकार्द्ध। D.

२ ०जरयंती N.

३ भिक्षाद्वितीयः।०। भिक्षातृतीयः etc. A. B. F.

४ D. E. N. add मासो जातोऽस्येति[ऽस्य D.].

५ Om. D. E. N.

६ E. adds इत्यादीनां कर्मधारयः।

७ संख्यापूर्वं० A.

८ पञ्चकपालेषु A.

९ पञ्चकपालोदनः A. B.; संस्कृतं प्रञ्चकपालं हविः। D.

१० ०धनः E. N.; पञ्चगवन्धनम् D.

११ विज्ञेयौ N.; भवतः। महाराजः। M.; ०संज्ञकौ ज्ञेयौ A.; तत्पुरुषसंज्ञियौ B.

प्रदेशाः। नस्य तत्पुरुषे लोप्यः [का° २. ५. २२] इत्यधिकारे[१]॥ कूष्ठ[२] इति कङ्गावो बहुव्रीहौ न स्यात्॥

**विभक्तयो द्वितीयाद्या[३] नाम्ना परपदेन तु। समस्यन्ते समासो हि ज्ञेयस्तत्पुरुषः स च॥ ८॥**

[४]कष्टं श्रितः। कष्टश्रितः। एवं[५] कान्तारातीतः। नरकपतितः। ग्रामगतः। तरङ्गात्यस्तः। सुखप्राप्तः। दुःखापन्नः[६]। ग्रामगमी। ग्रामागामी[७]। ओदनबुभुक्षुः[८]। खट्वारूढो जाल्मः। अहरतिसृता[९] मुहूर्ताः। अहःसंक्रान्ताः। रात्र्यारूढाः। मासप्रमितश्चन्द्रमाः। मुहूर्तसुखम्। सर्वरात्रकल्याणी॥ क्वचिद्वाक्यमेव। ओदनं भुक्तवान्॥

तृतीया। गिरिणा काणः। गिरिकाणः। एवं धान्यार्थः। मासपूर्वः। पितृसदृशः। पितृसमः। मासोनः। मासविकलः। असिकलहः। वाङ्निपुणः। गुडमिश्रः। वाक्श्लक्ष्णः। तथा राजहतः। नखनिर्भिन्नः। काकपेया[१०] नदी। बाष्पच्छेद्यानि तृणानि॥ क्वचिन्न स्यात्। काकेन पातव्या॥ क्वचित्स्यात्। बुषोपेन्ध्यम्[११]।

---

१ इत्येवमादयः॥ E. M.; after which अधिकारे M.
२ कूष्ठो देश D. E. M. N.
३ द्वितीया A.
४ यत्र समास इति संबन्धः॥ D. E. N.; and marg. M.
५ E. M. add कांतारमतीतः।
६ दुःखप्राप्तः M.
७ ग्रामागमी N.; ग्राम आगमी E.
८ ओदनं बुभुक्षुः D. E. M. N.
९ अहरतिश्रिता D. E.; °तिसृता B.
१० कालपेया N.
११ बुसो° D.; बुषोप्यन्ध्यं F.; बुषोप्यन्धं B.

घनघात्यम् । दध्नोपसिक्त ओदनः । दध्योदनः । गुडेन मिश्रा धानाः । गुडधानाः ॥

चतुर्थी । गोभ्यो हितम् । गोहितम् । एवं गोसुखम् । कुवेर-बलिः । गोरक्षितः । यूपाय दारु । यूपदारु(१) । देवदेयं पुष्पम् । ब्राह्मणदेयं धनम् । वरप्रदेया कन्या ॥ क्वचिन्न(२) स्यात् । ब्राह्मणाय दातव्यम् । ब्राह्मणार्थः पूपः(३) । ब्राह्मणार्था प्रपा(४) । ब्राह्मणार्थं पयः । नित्यसमास एव सर्वलिङ्गता च ॥

पञ्चमी । वृकाद्भयम् । वृकभयम् । वृकभीतः । वृकभीतिः । वृकभीः । ग्रामनिर्गतः । सुखापेतः(५) । कल्पनापोढः । चक्रमुक्तः । मञ्चपतितः । तरङ्गापत्रस्तः(६) ॥

षष्ठी । राज्ञः पुरुषः । राजपुरुषः । आत्मषष्ठः । भिक्षाद्वितीयः(७) । वर्तमानसामीप्यम् । चन्दनगन्धः । नदीघोषः । कन्यारूपम् । स्तनस्पर्शः । फलरसः ॥ ब्राह्मणस्य कर्तव्यम्(८) । वृत्तिरपीष्यते । ब्राह्मणस्य कुर्वन् । ब्राह्मणस्य कुर्वाणः । वाक्यमेव । तथा फलानां तृप्तः । छात्रस्योच्चैर्गृहमिति सापेक्षत्वात् । पलाश-

१ D. adds रन्धनाय स्थाली ।
२ क्वचित् E.
३ सूपः E. M.; ०र्थं घनं N.
४ ०र्था यवागूः N.; ०र्थाः सूपाः । E. N.; ०पूपाः D. M.
५ शाखापेतः D. M. N.; शाषापेतः E.
६ E. N. add क्वचिन्न स्यात् । प्रासादात्पतितः । and N. भोजनादपत्रस्तः । अंतिकादागतः । अभ्यासादागतः । विप्रकृष्टादागतः । कृच्छ्रादागतः ॥
७ ०द्वितीयं E. M. N.
८ ब्राह्मणकर्तव्यं । M. N. and marg. E.

शातनम्(१)। मातृस्मरणम् । सुरेश्वरः । राजपूजित इत्यादिषु(२) संबन्धषष्ठ्या समास(३) एव ॥

सप्तमी। अक्षेषु शौण्डः(४)। अक्षशौण्डः । अक्षधूर्तः । अक्षकितवः । वनेऽन्तर्वसति । वनान्तर्वसति । तथा काम्पिल्लसिद्धः(५) । छाया-शुष्कः । कुम्भीपक्वः(६) । चारकबन्धः । तीर्थध्वाङ्क्षः(७) । तीर्थ-काकः । तथा पूर्वाह्णगेयं(८) साम । मासदेयमृणम् । पूर्वाह्णकृ-तम्(८) । अपराह्णकृतम्(८) । पूर्वरात्रकृतम् । अपररात्रकृतम् । एवमन्येऽपि ॥

परपदेनेति किम् । गतो ग्रामम् । कथं प्राप्तो जीविकाम् । प्राप्त-जीविकः(९)। एवम्(१०) आपन्नजीविकः(९)॥ अत्यादयः क्रान्ताद्यर्थे द्वितीयया । अतिक्रान्तः खट्वाम् । अतिखट्वः ॥ अवादयः क्रुष्टा-द्यर्थे(११) तृतीयया । अवक्रुष्टं(११) कोकिलया । अवकोकिलं वनं । एवम्(१०) अवमयूरम् ॥ पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । परिग्ला-नोऽध्ययनाय । पर्यध्ययनः ॥ निरादयो गताद्यर्थे पञ्चम्या(१२)। निर्गतः कौशाम्ब्याः(१३) । निष्कौशाम्बिः(१४) ॥ सत्यम् । कृते

---

१ ॰शातनः E. M. N.; पालाप्रसा-तनं D.

२ M. adds एवं.

३ ॰षष्ठीसमास B. E.; षष्ठ्याःस॰ A.

४ सौंडः N.

५ कांपिल्यसिद्धः M. N.; कांपिल्ये सिद्धः D. E. [कांपिल्यसिद्धः marg. E.]

६ कुम्भीपाकः F.

७ तीर्थध्माङ्क्षः A. B. F.

८ पूर्वाह्न॰ अपराह्न॰ MSS.

९ ॰जीवकः M.

१० Om. D. E. M. N.

११ क्रुष्टा॰ । अवक्रुष्टं E. M. N.

१२ पंचम्याः E. M.

१३ कौसाम्ब्याः B.

१४ निःकौ॰ D.



समासे पूर्वनिपातोऽभिधानात् । यथा[1] दन्तानां राजा । राजदन्त इति[2] । कुब्राह्मण इत्यादीनां कर्मधारयः ॥

**स्यातां यदि पदे द्वे तु यदि वा स्युर्बहून्यपि । तान्यन्यस्य पदस्यार्थे बहुव्रीहिः ॥ ९ ॥**

यत्र समास इति संबन्धः । आरूढो वानरोऽयं[3] स आरूढवानरो वृक्षः । कृतः प्रणामो येन स कृतप्रणामो जनः[4] । एवं[5] दत्तभोजनोऽतिथिः । उच्छन्नजनपदो[6] देशः । चित्रगुर्देवदत्तः । बहूदका नदी ॥ बहुपदेऽपि । मत्तबहुमातङ्गं वनम् । तथा उपगता दश एषाम्[7] । उपदशाः । एवम् आपन्नदशाः[8] । आसन्नदशाः[9] ॥ अदूरदशाः । अधिकदशाः । ते[10] पुनर्नवैकादश वा ॥ त्रिर्दश[11] परिमाणमेषाम् । त्रिदशाः । दशशब्दः संख्याने वर्तते । परिमाणशब्दसान्निध्यात् ॥ यथा पञ्च परिमाणमेषाम् । पञ्चकाः शकुनयः ॥ द्वौ वा त्रयो वा परिमाणमेषाम् । द्वित्राः ॥ भिन्नाधिकरणेऽपि । उरसिलोमा । कण्ठेकालः । उच्चैर्मुखः ॥ अन्यपदार्थे प्रथमान्तेऽपि । सह पुत्रे-

---

१ तथा D.; om. M.
२ E. adds तथा; D. M. N. यथा.
३ ऽयं वृक्षं D. E. N.
४ Om. E. M. N.
५ दत्तं भोजनं यस्मै अतिथये स E. M.
६ उच्छिन्न° E. N.; उत्सन्न° M.
७ येषां ते D. E. M. N.
८ Om. D. E. M. N.
९ Om. A. B.
१० तेन B. and corr. F.
११ त्रिदश B. F. M. N.

णागतः। सपुत्रकः[१]। सह लोम्ना वर्तते। सलोमकः। विद्यमानलोमक इत्यर्थः। एवं सपक्षकः। सकण्टकः[२]॥ सहैव[३] दशभिः पुत्रैर्भारं वहति गर्दभी। इत्यनभिधानात्[४]॥ केशेषु च केशेषु च गृहीत्वा युद्धं[५] वृत्तम्। केशाकेशि। दण्डैश्च दण्डैश्च प्रहृत्य[६] युद्धं वृत्तम्[७]। दण्डादण्डि॥ बहुव्रीहिप्रदेशाः। बहुव्रीहौ [का° २. १. ३५] इत्येवमादयः॥

## विदिक् तथा॥ १०॥

तथा विदिगभिधेयो[८] बहुव्रीहिर्ज्ञेयः[९]। अर्थाद्दिग्वाचकयोः[१०] शब्दयोः समासे सति[११]। दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा दिक्॥

## द्वन्द्वः समुच्चयो नाम्नोर्बहूनां वापि यो भवेत्॥ ११॥

यत्र समासे द्वयोर्नाम्नोर्बहूनां वापि नाम्नां यः[१२] समुच्चयः स द्वन्द्वो भवेत्[१३]। देवदत्तयज्ञदत्तौ। धवखदिरपलाशाः।

---

१ सपुत्रः। D. E. M. N.
२ M. adds शेषाद्वा बहुव्रीहौ कः।
३ सह A. B. D. F.; E. M. N. and marg. D. give the first half śloka: एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम्।
४ इत्यभि° B. E. and corr. D.
५ बद्धं M.
६ प्रहृत्य E.
७ M. omits दण्डैश्च°, and adds मुष्टामुष्टि।
८ °भिधेये A.
९ °विज्ञेयः D.; °हिसंज्ञो ज्ञेयः E. M.
१० तथा दिग्वाचयोः B.
११ समासेति D.
१२ A. B. om. नाम्नां; D. M. om. यः
१३ A. adds देवदत्तस्य यज्ञदत्तस्य.

वाग्दृषदम् । पीठच्छत्त्रोपानहम्[१] ॥ इतरेतरयोगः समाहारस्य समुच्चयस्यैव भेद इति[२] ॥

अल्पस्वरतरं तत्र पूर्वम् ॥ १२ ॥

तत्र द्वन्द्वे समासे यदल्पस्वरतरं[३] तत्पूर्वं निपतति । प्लक्षन्यग्रोधम्[४] । धवाश्वकर्णं ॥ तरग्रहणं द्विपदनियमार्थम् । तेन शङ्खदुन्दुभिवीणाः ॥ व्यभिचरति च । उदूखलमुषले[५] । तण्डुलकिण्वे । चित्ररथबाह्लीकौ । इत्येवमादयः ॥

यच्चार्चितं द्वयोः ॥ १३ ॥

तत्र द्वन्द्वे समासे द्वयोर्यदर्चितं[६] तत्पूर्वं निपतति । देवदैत्यौ । वासुदेवार्जुनौ ॥ व्यभिचरति च । नरनारायणौ । उमामहेश्वरौ । काकमयूरौ ॥

पूर्वं वाच्यं भवेद्यस्य सोऽव्ययीभाव इष्यते ॥ १४ ॥

समासस्येति संबन्धः । कारके स्त्रीष्वधिकृत्य कथा प्रवृत्ता[७] । अधिस्त्रि[८] ॥ समीपे । उपकुम्भम्[९] ॥ ऋद्धौ । सुमद्रम्[१०] ॥

---

१ पीठच्छत्त्रो° D.

२ समाहारः द्वंद्वसमुच्चयस्यैव भेदः ॥ E.; D. E. F. om. इति.

३ द्वयोर्यद° A.

४ °निग्रोधं M.

५ °मुशले E. M. N.; उदूषलमुदूषले । तण्डुलकीण्डे । D.

६ D. E. M. om. द्वयोर्; द्वयोः पदयोर्मध्ये यद° N.

७ °कथाः प्रवृत्ताः D.

८ अधिस्त्री । B.

९ उपकुंभे N.; M. adds कुंभस्य समीपं.

१० सुमुद्रं M.; समुद्रं B. D. N.

अभावे । निर्मक्षिकम् ॥ तथा गवदिकानामृद्धेर्विगमः । दुर्गवदिकम्[1] ॥ शीतानामतिक्रमः । अतिशीतम्[2] । अतितैसृकम् । तैसृकाणामाच्छादनानां न संप्रत्युपभोगकालः[3] ॥ शब्दप्रादुर्भावेऽपि । इतिपाणिनि[4] । तत्पाणिनि[5] ॥ पश्चादर्थे[6] । अनुरथम् ॥ यथार्थे । अनुरूपम् । रूपस्य योग्यत्वम्[7] । अर्थमर्थं प्रति । प्रत्यर्थम् । यथाशक्ति । अनुज्येष्ठम् । शक्त्यनतिक्रमेण ज्येष्ठानुक्रमेणेत्यर्थः[8] ॥ सादृश्ये । किख्याः[9] सदृशम् । सकिखि ॥ साकल्ये । सतृणमभ्यवहरति ।[10] साग्न्यधीते । एवमन्येऽपि ॥ अव्ययीभावप्रदेशाः । अव्ययीभावादकारान्ताद्विभक्तीनाममपञ्चम्याः [का° २. ४. १] इत्येवमादयः ॥

## स नपुंसकलिङ्गं स्यात् ॥ १५ ॥

सोऽव्ययीभावसमासो[11] नपुंसकलिङ्गं स्यात् । तथा[12] चो-

---

१ ? गवदिक्क°; गवधिकानाम्° दुर्गवधिकम् A. B.; गब्दिकानाम्° दुर्गब्दिकं E. M. N.; गुदीकानाम्° दुर्गुदिकं D.; F. as above.

२ सीतानाम्° अतिसीतं E. M.; तथा शीतानामतिक्रान्तः° । D.

३ संपत्त्युप° A.; the passage is much corrupted in D.

४ अतिपाणिनि E.; F. M. N. om. अपि.

५ N. adds शब्दो लोपव्यवहारे वर्तते ।

६ रथस्य पश्चात् E. M.

७ D. N. and marg. E. add वीप्सायाम् ।

८ शक्तेरनति° E. N.; शक्तेरनुक्रमेण ज्येष्ठस्यानतिक्रमेण° M.; N. adds यौगपद्ये । सचक्रं धेहि । युगपच्चक्राणि धेहीत्यर्थः ।

९ किख्या E. F. N.; किचा [सकिचि] M.

१० D. N. add समाप्तौ ।

११ ऽव्ययीभावो D. M. N.

१२ D. E. M. N. om. तथा च.

दाहृतमुदाह्रियते च । समत्वं भूमेः । समंभूमि । समंपदाति । तथा सुषमम् । विषमम् । निःषमम् । दुःषमम् । अपरत्वम्[१] । शोभनत्वं[२] समस्येत्यादि वाक्यम् ॥ तथा प्रमृगम् । प्ररथम् । प्रदक्षिणम् ॥ अव्ययपूर्वपदत्वादलिङ्गतैव प्राप्नोति वचनम्[३] ॥

द्वन्द्वैकत्वम् ॥ १६ ॥

द्वन्द्वस्यैकत्वं नपुंसकलिङ्गं स्यात् । प्रत्यष्ठात्कठकालापम् । उदगात्कठकौथुमम्[४] । अर्काश्वमेधम् । पदकक्रमकम् । आराशस्त्रि । गङ्गाशोणम् । कुरुकुरुक्षेत्रम् । मथुरापाटलिपुत्रम् । अहिनकुलम् । तक्षायस्कारम् । पाणिपादम् । मार्दङ्गिकपाणविकम् । हस्त्यश्वम् । यूकालिक्षम्[५] । बदरामलकम् । प्लक्षन्यग्रोधम् । धवाश्वकर्णम्[६] । कुशकाशम् । तिलमाषम् । रुरुपृषतम्[७] । हंसचक्रवाकम् । दधिघृतम् । सुखदुःखम् ॥

अनुवादे चरणानां स्थेणद्यतनीप्रयोगविषयाणाम्[८]

अनपुंसकलिङ्गानां यजुःक्रतूनां च निकटपाठानाम् ।

अप्राणिजातिविसदृशलिङ्गनदीदेशनगराणाम्

शाश्वतिकवैरिणाम् अथ कारूणां प्राणितूर्यकाङ्गानाम् ॥१॥

---

१ Om. A. F.; अपसमं B.; अवरसमं D. E. M. N.

२ शोभनस्य A.

३ प्राप्ता ॥ E. M. N.

४ °कालापकं । उदंकात्क° D.

५ यूकालिख्यं F.; युकालिख्यं A.; यूकालिक्यं B.

६ Om. E. F. M. N.

७ तिलमासं रुरुप्रसृतं A. B.

८ स्थेनोरद्यत° D.; °प्रयोगे B. D.

सेनाङ्गानां च बहुत्वे भवति चुद्रजन्तुकफलानाम्
वृक्षतृणधान्यमृगशकुनिविशेषाणां[1] विभाषैव।
व्यञ्जनविशेषकाणां[2] साद्रव्याणां विरोधिनां च सम-
ता तेषां च समाहारो दधिपयसां[3] खलु भवेदन्यः ॥ २ ॥

एकत्वमिति किम्। हस्त्यश्वौ। दधिघृताः[4] ॥

**तथा द्विगोः ॥ १७ ॥**

तथा[5] द्विगोरप्येकत्वं नपुंसकलिङ्गं स्यात्। पञ्चगवम्। चतुष्पथम्। शोभनमिति विशेषणात्[6] ॥ एकत्वमिति किम्। पञ्चकपाल ओदनः ॥ अपात्रादिरदन्तो[7]ऽयं स्यादन्तो वा द्विगुस्तथा। अनन्तस्य समाहारो नदादिषु निगद्यते[8] ॥

**पुंवद्भाषितपुंस्कानूङ्पूरण्यादिषु स्त्रियां तुल्याधिकरणे ॥ १८ ॥**

स्त्रियां वर्तमानो भाषितपुंस्कोऽनूङ्[9] पुंवद्भवति। स्त्रियां वर्तमाने तुल्याधिकरणे पूरण्यादिवर्जिते[10] पदे परतः। शोभनभार्यः। दीर्घजङ्घः ॥ अर्थात्पूर्वस्य परस्य च स्त्रियामिति विशेष-

---

१ °विशेषकाणां A. B. E. F. M. N.
२ विशेषाणां D.; B. D. F. add च; A. om. from विभाषा.
३ दधिघृतपयसां D.; दधिकतिपयसां A.
४ °घृते N.; °घृतौ। A. B.
५ Om. F.
६ विशेषणत्वात् D. N.
७ अपत्रादि° A.
८ M. N. add पंचपूली.
९ °पुंस्कानूङ् all MSS. except F.; °पुंस्कानूङ्शब्दः E.
१० पूरण्यादिगणव° E. M. N.

णात् । ग्रामणि कुलं दृष्टिरस्येति ग्रामणिदृष्टिः । कल्याणी प्रधानमेषाम्[१] । कल्याणीप्रधानाः[२] ॥ भाषितपुंस्कोऽर्थ इति किम् । द्रोणीभार्यः ॥ अनूङिति किम् । ब्रह्मबन्धूभार्यः ॥ अपूरण्यादिष्विति किम् । कल्याणीपञ्चमा रात्रयः ॥ मुख्यपूरणीग्रहणात् । कल्याणपञ्चमीकः पक्षः ॥ आदिग्रहणात् । कल्याणीप्रियः ॥ प्रिया । मनोज्ञा[३] । सुभगा । दुर्भगा । भक्तिः । सचिवा[४] । स्वा[५] । कान्ता[६] । समा । वाल्या[७] । दुहिता । वामना[८] ॥

## संज्ञापूरणीकोपधास्तु न ॥ १९ ॥

इह पुंवद्भावं वर्तते । संज्ञापूरणीकोपधास्तु पुंवद्रूपा न भवन्ति । दत्ताभार्यः । गुप्ताभार्यः । पञ्चमीभार्यः । पञ्चमीयते । पञ्चमीमानिनी । पाचिकाभार्यः । मद्रिकाभार्यः[९] ॥ कथं पाकभार्यः । भेकभार्यः । शुष्कभार्य[१०] इत्यभिधानात् ॥ वृद्धिनिमित्तस्यारक्तविकारस्य न च तद्धितस्यापीदन्तस्य स्वाङ्गस्य न त्वमानिनि । तथा जातेः ॥

---

१ उत्तरपदेनेति किं। कल्याणं प्र० N.
२ E. adds कुटंबिनः ।
३ मनोन्या E. N.; M. N. add कल्याणी ।
४ शचिवा F.; सविता E. M.
५ Om. A. E.; स्वसा N.
६ कांता चांता स्वकांता । E.; याता । स्वकांता । M.; कांता चांता यांता मांता क्षमा N.
७ बाला । D.; वल्वी M.
८ N. adds चपला ॥
९ Om. A. B. D.
१० M. adds पाकभेकी शुष्कानां पुंवच्च.

कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते ॥ २० ॥

भाषितपुंस्कानूङ्प्रतिषेधबाधकोऽयम् । कठी च सा[1] भार्येति[2] कठभार्या । एवं दत्तभार्या[3] । पञ्चमभार्या[4] । पाचकभार्या[5] ॥ भाषितपुंस्क इति[6] किम् । खट्वावृन्दारिका[7] ॥ अनूङिति किम् । ब्रह्मबन्धूदारिका ॥

आकारो महतः कार्यस्तुल्याधिकरणे पदे ॥ २१ ॥

महादेवः । महावक्रः । अन्तरङ्गत्वान्नलोपे सत्याकारः । व्यन्तस्य न भवति । महद्भूतश्चन्द्रमाः ॥ योगविभागात् । महत्याघासः । महाघासः । एवं महाकरः । महाविशिष्टः[8] ॥

नञ्स्तत्पुरुषे लोप्यः ॥ २२ ॥

नञ्स्य संबन्धिनि तत्पुरुषे[9] नञ्स्य संबन्धी नकारो लोप्यो भवति । द्विनकारो[10] वा पाठः ॥ न सवर्णः । असवर्णः । न विद्यते घोषो ध्वनिर्येषां तेऽघोषाः । ब्राह्मणस्याभावः । अब्राह्मणम् ॥ तत्पुरुष इहोपलक्षणम् ॥

---

१ चासौ N.

२ भार्या चेति F.

३ दत्तभार्यः E.; A. adds गुप्तभार्या, E. गुप्तभार्यः

४ पंचमभार्यः E.

५ पाचिकभार्या M.; पाचिकभार्यः। मद्रिकभार्यः। E.; om. F.

६ भाषितपुंस्कमिति E.; °पुंस्को ऽर्थमिति M.

७ °वृन्दारका। B. N.

८ महावशिष्टः M.; महावसिष्ठः N.

९ संबन्धितत्पुरुषे A.; E. F. add समासे.

१० द्विनकारको D. E. M.

स्वरेऽक्षरविपर्ययः ॥ २३ ॥

नस्य तत्पुरुषे[1] स्वरेऽक्षरविपर्ययो[2] भवति ।[3] अनजः । अनजम्[4] । अनजकः[5] ॥

कोः कत् ॥ २४ ॥

कुशब्दस्य तत्पुरुषे[6] कद्भवति । कुत्सितोऽश्वः । कदश्वः । एवं कदुष्ट्रः ॥ तत्पुरुष इति किम् । कूष्ट्रो देशः ॥

का त्वीषदर्थेऽक्षे ॥ २५ ॥

कुशब्दस्य तत्पुरुष ईषदर्थे वर्तमानस्य कादेशो भवति । अक्षशब्दे च परतः[7] । ईषल्लवणम्[8] । काल्लवणम् । काम्लम् । काक्षेण वीक्षते ॥ ईषदर्थे स्वरे तु परत्वात्कादेश एव[9] ॥

पुरुषे तु विभाषया ॥ २६ ॥

कुशब्दस्य तत्पुरुषे पुरुषशब्दे च[10] परे विभाषया कादेशो भवति । कापुरुषः । कुपुरुषः । इयमप्राप्ते विभाषैव[11] ॥ ईषदुष्णम् । कोष्णं कवोष्णं कदुष्णमिति वक्तव्यम् ॥

---

१ E. adds समासे; नस्य संबन्धिनि॰ B.; ॰संबन्धितत्पु॰ A.
२ ऽक्षरस्य वि॰ F.; D. om. अक्षर.
३ B. adds न अजः ।
४ Om. B.; अनीश्वरः D.
५ M. adds न विद्यतेऽजा यस्मिन्.
६ F. N. add स्वरे; M. स्वरे परे; E. समासे.
७ परे । D.; om. E. M. N.
८ Om. B. D.
९ ईषदर्थेपुस्वरे॰ B.; ईषदर्थे स्वरपरत्वात्॰ D.; ईषदर्थस्वरे॰ M.; E. om. तु.
१० तु E. M. N.; M. om. परे.
११ ॰प्राप्तविभाषैव D.; M. om. एव.

याकारौ स्त्रीकृतौ ह्रस्वौ क्वचित् ॥ २७ ॥

ईश्च आकारश्च याकारौ। याकारौ स्त्रीकृतौ ह्रस्वौ भवतः समासे क्वचिल्लक्ष्यानुरोधात्(१)। रेवतिमित्रः। रोहिणिमित्रः। भरणिमित्रः॥ इष्टकचितम्। इषीकतूलम्(२)। मालभारिणी(३) कन्या। एवमन्येऽपि(४)॥

ह्रस्वस्य दीर्घता ॥ २८ ॥

ह्रस्वस्य दीर्घता भवति समासे क्वचिल्लक्ष्यानुरोधात्(५)। दात्राकर्णः। द्विविधाकर्णः। द्विगुणाकर्णः। द्व्यङ्गुलाकर्णः। चिकस्यैव कर्णे दीर्घः॥ क्वचिन्न स्यात्। पिष्टकर्णः। अष्टकर्णः॥ नहिवृतिवृषिव्यधिरुचिसहितनिषु(६) क्विबन्तेषु प्रादिकारकाणामेव दीर्घः। उपानत्। उपावृत्। प्रावृट्। मर्माविध्। नीरुक्। ऋतीषट्। परीतत्। एवमन्येऽपि॥

अनव्ययविसृष्टस्तु सकारं कपवर्गयोः ॥ २९ ॥

अनव्ययविसृष्टस्तु कपवर्गयोः परयोः(७) सकारमापद्यते। समासे(८) क्वचिल्लक्ष्यानुरोधात्(९)। अयस्पात्रम्(१०)। अयस्कल्पम्(११)।

---

१ °लक्ष्या° A. B. F. N.; लक्ष्यानिरोधात् M.

२ ईषिकतूलं A. F.; इष्टीकतूलं N.

३ मालधारिणी E.

४ ऽप्यवगन्तव्याः॥ D.

५ °लक्ष्या° A. B. F. M. N. [*cf.* Pâṇ. i. 1. 57. Schol.]

६ नहिवृतिवृधिवृषि° D.; M. (and orig. E.) om. वृषि।

७ Om. D.

८ Om. B. F. M. N.

९ क्वचित्। M. N.; °लक्ष्या° A. B. F.

१० अयस्पात्रः A. D.

११ अयस्कल्पः A.; प्रल्पम् D.

अयस्काम्यति । अयस्कम् । पाशकल्पकाम्यकेषु दृश्यते ॥[1] रप्रकृतेः काम्ये न भवति । गीःकाम्यति । धूःकाम्यति ॥ अयस्कारः । अयस्कामः । अयस्कंसः । अयस्कुम्भः ॥

कृञ्कामिकंसकुम्भेषु[2] समासे ऽयमतः[3] परः ।
अनुत्तरे[4] कुशाकर्णीभास्करादिषु लक्षतः[5] ॥

नञा निर्दिष्टमनित्यम् । नमस्कर्तुम् । पुरस्कर्तुमित्यादयः ॥

॥ इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये समासपादः समाप्तः[6]॥

---

वाणपत्ये ॥ १ ॥

षष्ठ्यन्तान्नाम्नो ऽपत्ये ऽभिधेये ऽण्प्रत्ययो भवति वा । उपगोरपत्यम् । औपगवः ।[7] पाण्डवः । आश्वपतः । शैवः । प्रौष्ठः ॥ अपत्यसामान्यविवक्षायामाद्यप्रकृतेरेव[8] । पौत्रादेस्तु प्रशस्त एवापत्ये[9] स्त्रीवर्जिते ऽणादयो ऽभिधीयन्ते । वाग्रहणाद् उपगोरपत्यम् । उपग्वपत्यं च स्यात् ॥

---

१ न दृश्यते । M.; °रप्रकृतिः E.
२ कृकामिकंसि° E. M. N. [°कान्सि D.]; कृञकाम° F.
३ समासेष्वयमतः D.
४ A. B. F. add च.
५ लक्षतः MSS.
६ समासः पादः° A. B. F. and com. B. om. नाम्नि; °वृत्तौ समासः समाप्तः D. N.; वृत्तौ समासप्रकरणं समाप्तं E. T.
७ A. B. add एवं; D. adds पण्डोरपत्यं° अश्वपतेरपत्यं ।
८ अपत्य इति सामान्य° A. B.
९ पौत्रादेस्त° A.; प्रशस्तेवा° B.

यञ् गर्गादेः ॥ २ ॥

गर्गादेर्गणादपत्येऽभिधेये यञ्प्रत्ययो[१] भवति। गर्गस्यापत्यम्। गार्ग्यः। एवं वात्स्यः॥ गोत्रादिभूतादेव पौत्रादावेवापत्ये[२]ऽभिधानात्[३]। अन्यत्र गार्गिः॥ अनन्तरोऽपि। रामो जामदग्न्यः[४]। व्यासः पाराशर्यः[५]। अर्जुनः कार्तवीर्यः[६]॥ जामदग्नः[४]। पाराशर[५] इति च[७]॥ गर्गादिराकृतिगणोऽयम्[८]॥

कुञ्जादेरायनण् स्मृतः ॥ ३ ॥

कुञ्जादेर्गणाद्गोत्रादिभूतात्पौत्रादावेवापत्येऽभिधेय[९] आयनण्प्रत्ययो[१०] भवति। अस्य स्मृतस्तदन्ताञ्ञ्यादेरबहुत्वेऽस्त्रियाम्। तदेतत्[११] स्मृतग्रहणस्येष्टविषयत्वात्। कौञ्जायन्यः। कौञ्जायन्यौ। ब्राध्नायन्यः। ब्राध्नायन्यौ॥ स्त्रियां तु कौञ्जायनी॥ बहुत्वे तु[१२] कौञ्जायनाः॥ नडादेस्तु। नाडायनः। चारायणः। मौञ्जायनः॥ कुञ्जो नाम कश्चित्। तस्यापत्यं

---

१ ण्यो F. N.

२ °भूतात्पौत्रा° M. N.; °भूतादेवापत्ये A.

३ ऽभिधेये F.; ऽभिधानं M. N.

४ यामद° B. D. and corr. A.

५ पारासर्यः and पारासर A. D. F. M. N.

६ D. N. add इत्यपि दृश्यते.

७ इति च दृश्यते M.; D. om. च.

८ °आकृतिगणः। F.

९ Om. M.; स्त्रीवतेऽभिधेये N.

१० F. N. om. प्रत्ययो.

११ तदेतत्कथं स्मृत° F. M. N.

१२ च N.; om. M.

कौञ्जिः । प्रथमापत्यं च कौञ्जिः[1] ॥ कुञ्जादिराकृतिगणो ऽयम्[2] ॥

**स्त्र्यत्र्यादेरेयण् ॥ ४ ॥**

स्त्रियां विहितत्वात्स्त्री । स्त्रियामादादिभ्यो ऽत्र्यादेश्चापत्ये ऽभिधेय[3] एयण्[4] भवति । वैनतेयः[5] । सौपर्णेयः । कामण्डलेयः । यौवतेयः ॥ आत्रेयः । शौचेयः ॥ आदिग्रहणात् । शौभ्रेयः । वैष्टपुरेयः[6] ॥ अत्रिरयमप्रत्ययेदन्तद्विस्वरोपलक्षणम्[7] । तेन मरीचेरपत्यं मारीचः[8] । दाक्षेरपत्यं दाक्षायणः[9] ॥ अत्र्यादिराकृतिगणः[10] ॥

**इणतः[11] ॥ ५ ॥**

अकारान्तान्नाम्नो ऽपत्ये ऽभिधेय इण्[12] भवति । दक्षस्यापत्यं दाक्षिः । एवं प्लाक्षिः । अस्यापत्यमिः ॥ अत इति[13] किम् । कैलालपः ॥ [14] शतसर्वकाकजङ्घकृष्टद्धराजपुरुषमाथुर-

---

१ कुञ्जस्य प्रथ° O.; D. N. om. from प्रथमा°

२ °गणः ॥ B. D. F.

३ Om. D.

४ एयणप्रत्ययो A.; एप्र° M.

५ वैणतेयः A. B. D.

६ वैष्णपुरेयः B.

७ °प्रत्ययद्विस्वरो° B.

८ मारीचिः M.

९ दक्षेरपत्यं° A.; M. corr. दक्षस्यापत्यं दाक्षायणः । In D. one leaf (fol. 90) is missing, comprising from दाक्षायणः to कृत्तिकासु in Sûtra 7.

१० Om. M.

११ इनतः B.

१२ इन् B.; इणप्रत्ययो F. and corr. A.

१३ अकारान्तादिति B.

१४ एकशत° M.; एकसितसर्व° N.

कारकेभ्यः(१) संख्यादिभ्यो न भवत्यनभिधानात्(२) ॥ कथं प्रदीयतां दाशरथाय मैथिलीति(३) तस्येदमित्यण्(४) ॥

बाह्वादेश्च विधीयते ॥ ६ ॥

बाह्वादेर्गणादपत्येऽभिधेय इञ्(५) भवति(६)। बाहविः। औपबाहविः। बैन्दविः(७)। औपबिन्दविः(७)॥ गोत्रादिभूतादेवेष्यते(८)। बाहुर्नाम(९) कश्चित् तस्यापत्यं बाहवः॥ बाह्वादिराकृतिगणोऽयम्॥

रागान्नक्षत्रयोगाच्च समूहात्सास्य(१०) देवता।
तद् वेत्त्यधीते(११) तस्येदमेवमादेरण् इष्यते ॥ ७ ॥

रागयोगाद्रागः। कौसुम्भम्(१२)। हारिद्रम्। कुसुम्भेन(१३) हरिद्रया वा(११) रक्तमित्यर्थः। कथं काषायौ(१४) गर्दभस्य कर्णौ। हारिद्रौ कुक्कुटस्य पादाविति(१५) तद्गुणाध्यारोपात्॥ नक्षत्रस्य

---

१ °पुरुषगोमाथुर° M.; °कारक एभ्यः N.

२ °अभिधानात् B. N.; संख्यादिभ्योऽनभिधानात् M.

३ त्यज स्वकोपं कुलकीर्त्तिनाशनं
भज स्वधर्मं कुलकीर्त्तिवर्द्धनं।
प्रसीद जीवेम सबान्धवा वयं
प्रदीयतां दाशरथाय मैथिली॥
F. M. N.

४ इत्यन् B.; N. om. from तस्य°

५ इन् B.; इञ्प्रत्ययो A.

६ विधीयते N.; M. N. add अणोऽपवादः।

७ बैंदविः। N.

८ N. om. एव; °एव स्यात् M.

९ बहुर्नाम N.

१० रागान्नक्षत्रयोगात्समूहा° A. B. F.

११ A. B. F. add वा.

१२ कौसुम्भं A.

१३ कुसुम्भेन A.

१४ काखायौ N.

१५ M. om. इति; तद्गुणस्याध्या° N.

योगः[१]। इन्दुनैव। तत्संबन्धात्कालो ऽभिधीयते[२]। अण्विधिस्तु श्रुतादेव नक्षत्रशब्दात्। पौषमहः। पौषी रात्रिः[३]। पुष्येण चन्द्रयुक्तेन युक्ता[४] रात्रिरित्यर्थः। कृत्तिकासु[५] विशाखासु[६] मघासु भरणीषु[७] चेति नक्षत्रशब्दैरेवाभेदोपचारात्। यद्यपि कालाभिधानं तथाप्यण् नास्ति विकल्पनात्॥ धर्मिणो ह्यभिन्नः समूहः। वायसम्। काकम्। भैक्षम्। यौवतम्॥ शिवो देवतास्येति शैवः। एवमैन्द्रं हविः। ऐन्द्रो मन्त्रः॥ छन्दो वेत्त्यधीते वा। छान्दसः। एवं वैयाकरणः॥ मृगस्येदम्। मार्गं मांसम्। एवं शौकरम्॥ एवमादिर्यस्येति शब्दार्थयोः संबन्धेन गणो गृह्यते। चक्षुषा[८] गृह्यते[८]। चाक्षुषं रूपम्। एवं श्रावणः शब्दः॥ दृशदि[९] पिष्टाः। दार्शदाः[१०] सक्तवः॥ उदूखले[११] क्षुण्णाः। औदूखला मुद्गाः॥ अश्वैरुह्यते। आश्वो रथः॥ चतुर्भिरुह्यते। चातुरं शकटम्॥ चतुर्दश्यां दृश्यते। रक्षः चातुर्दशम्[१२]॥ तत्रभवस्तत्र जातस्ततो वागत[१३] इत्यादिविग्रहः कार्यः।[१४] आकृतिगणो ऽयम्॥

---

१ Om. M.
२ विधीयते M.
३ N. adds तैषमहः तैषी रात्रिः
४ युक्ता वा B.
५ कृत्तिका A.; कृतिकास्तु; see also page 118, note 9.
६ विशाषासु D. M.
७ मघाद्राभरणीषु A.
८ Om. D.
९ दृषदि D. M. N.
१० दार्षदाः D. N.; शक्तवः MSS.
११ उदूखलेन A. D.
१२ चातुर्दिशं.
१३ M. N. om. तत्रभवः; D. om. ततो वागतः; °तत्र आगतः N.; तत्रजातस्तत आगत M.
१४ एवमादिराकृति° D.

तेन दीव्यति संसृष्टं तरतीकण् चरत्यपि।
पण्याच्छिल्पान्नियोगाच्च क्रीतादेरायुधादपि ॥ ८ ॥

तेन दीव्यति। तेन संसृष्टम्। तेन तरति। तेन चरत्यपि। अभेदोपचारवृत्तेः[१]। पण्याच्छिल्पान्नियोगाच्च यथासंबन्धं[२] क्रीतादेरायुधादप्यभेदोपचारवृत्तेरिकण्प्रत्ययो भवति। अक्षैर्दीव्यति। आक्षिकः॥ दध्ना संसृष्टम्। दाधिकम्[३]। एवं मारीचिकम्॥ गोपुच्छेन तरति। गौपुच्छिकः। एवं[४] काण्डप्लविको नद्याः। [४]आश्वमेधिको ब्रह्महत्यायाः॥ शकटेन चरति। शाकटिकः। एवं घण्टिकः[५]। शृङ्गवेरेण चरति। शार्ङ्गवेरिकः[६]॥ ताम्बूलपण्ययोगात् ताम्बूलिकः। मृदङ्गशिल्पयोगाद् मार्दङ्गिकः। एवं पाणविकः॥ द्वारनियोगाद् दौवारिकः। एवं शौल्कशालिकः॥ द्विशूर्पेण क्रीतः।[७] द्विशौर्पिकः[८]। एवं साहस्रिकः[९]॥ कार्षापणमर्हति। कार्षापणिकः॥ तोमरायुधयोगात् तौमरिकः। एवं चाक्रिकः[१०]॥ क्रीतादेरप्यभेदमपेक्ष्य[११] पञ्चमी क्रियाविर्भावस्य[१२] स्पष्टार्थः। कुद्दालेन खनति। कौद्दालिकः॥

---

१ D. N. om. from अभेद°; in M. a leaf is wanting here comprising from अपि to Sûtra 10.

२ संबंधक्रीता° N.

३ N. adds भांडं।

४ D. adds काण्डप्लवेन तरति। and अश्वमेधेन तरति।

५ घाण्टिकः B. F. N. (see com. of Tril.); om. D. (M.); N. adds घंटया चरति.

६ शृङ्गवेरिकः N.

७ D. adds क्वचिदुत्तरपदस्य वृद्धिः।

८ द्विसूर्पेण क्रीतः। द्विसूर्पिकः। N.

९ B. D. om. from एवं.

१० चक्रायुधयोगाच्चाक्रिकः। N.

११ क्षता° A.; क्षित° D.; N. om. अपि.

१२ N. om. च.

ओजःसहोऽम्भसा वर्तते। ओजसिकः शूरः। साहसिकश्चौरः। आम्भसिको मत्स्य इत्यादि॥

नावस्तार्ये विषाद्वध्ये तुलया संमितेऽपि च।
तत्र साधौ यः॥ ९॥

नावस्तृतीयान्तात् तार्येऽर्थे। विषात्तृतीयान्ताद् वध्येऽर्थे[1]। तुलयेति तृतीयान्तात् संमितेऽर्थे[2]। तत्रेति सप्तम्यन्तात् साधावर्थे यप्रत्ययो[3] भवति। नावा तार्यं नाव्यम्[4]। विषेण वध्यो[5] विष्यः। तुलया संमितं तुल्यम्। कर्मणि साधुः कर्मण्यः[6]॥ अपि चेति वचनाद् गिरिणा तुल्यो हस्ती[7] गिरितुल्यः॥ तुल्यः[8] सदृश इत्यन्ये। कुशलो योग्यो हितश्च साधुरुच्यते[9]॥

ईयस्तु हिते॥ १०॥

हितेऽर्थे ईयप्रत्ययो[10] भवति। वत्सेभ्यो हितो[11] वत्सीयो गोधुक्। एवम् अश्वीयः॥ योगविभागात्स्वराणामादावाद्वृद्धिमतः शेषेऽर्थे ईयः स्यात्। शालायां भवो जातो वा शालीयः। ऐति-

---

१ Om. D.
२ F. N. add अपि च।
३ यः प्र० F. N.
४ नाव्यं जलं D.
५ D. adds हस्ती.
६ N. om. from कर्मणि.
७ Om. D.
८ हस्तितुल्यः D.
९ See p. 121, note 1.
१० ईयः प्रत्ययो D.; ईयो A. B.; ईयस्तु N.
११ M. adds देशी.

कायनस्येमे[1] छात्राः । ऐतिकायनीयाः[1] । एवम् औपगवीयाः । एवमन्येऽपि ॥

यदुगवादितः ॥ ११ ॥

उवर्णान्ताद्गवादिभ्यश्च[2] हितेऽर्थे यत्प्रत्ययो[3] भवति । कृकवाकुभ्यो हितं पयः कृकवाकव्यम् । वधूभ्यो हितो देशो वधव्यः[4] । गोभ्यो हितं वनं गव्यम् । एवं हविष्यास्तण्डुलाः ॥ सुगव्यम् । अतिगव्यमिति तदन्तविधिरिष्टः ॥ गो । हविस् । अष्टका[5] । बर्हिस् । मेधा । स्रुच[6] इत्यादयोऽप्यनुसर्तव्याः ॥ विकृतिवाचिनः[7] शब्दात्प्रकृतावभिधेयायां यथोक्तं[8] हितेऽर्थे प्रत्ययो[9] मन्तव्यः । अङ्गारीयाणि काष्ठानि । पिचव्यः[10] कार्पासः[11] ॥

उपमाने वतिः ॥ १२ ॥

उपमितिरुपमानम् । उपमानेऽर्थे[12] वतिप्रत्ययो भवति[13] । राजेव वर्तते । राजवत् ॥ ब्राह्मणस्येव वृत्तिरस्येति[14]

---

१ ऐतकाय° M.; एतिकाय° N.
२ °गवादिश्च A.
३ यद् F. M. N.
४ मधुभ्यो .... मधव्यः । A.
५ इष्टिका M.; इष्टका N.
६ श्रुच A. F. M. N.; सुच D.; N. adds सर्पिस् after मेधा ।
७ विकृतवाचिनः A.; M. N. om. शब्दात्.
८ Om. M.
९ ईयः प्रत्ययो N.; इयो D.
१० विपच्यः N.
११ कर्पासः D. M. N.; D. adds एवमन्येऽपि ।
१२ Om. N.
१३ वतिर्भवति । F.
१४ वृत्तमस्य D. M. N.

ब्राह्मणवत् ॥ मथुरायामिव पाटलिपुत्रे प्रासादः[1]। मथुरावत् ॥ राज्ञेव व्यवहृतमनेन। राजवत् ॥ देवमिव[2] भवन्तं पश्यामि। देववत्[2] ॥ पर्वतादिवाखनादवरोहति। पर्वतवत् ॥ ब्राह्मणायेव देवदत्ताय धनं[3] ददाति। ब्राह्मणवत् ॥ क्वचापि तदर्हमिति परैरेष्टव्यमेव ॥ गुणसाम्येऽपि[4]। देवदत्त इव स्थूलो[5] देवदत्तवत् ॥ गुणहीनादपि। अन्धवत्। जडवत्[6] ॥ द्रव्यसाम्येऽपि। देवदत्त इव गोमान्[7]। देवदत्तवत्। सद्भावात्[8] क्रियासाम्यमस्तीति सर्वत्र भवितव्यमेव[9] ॥

**तत्वौ भावे ॥ १३ ॥**

शब्दस्य प्रवृत्तिनिमित्तं भावः। भावेऽभिधेये[10] तत्वौ भवतः। शुक्लस्य पटस्य भावः। शुक्लता। शुक्लत्वमिति शुक्लगुणस्य भावः। शुक्लस्य गुणस्य भावः ॥ शुक्लता। शुक्लत्वमिति[11] शुक्लगुणजातिः ॥ गोता। गोत्वमिति गोजातिः। एवं पाचकत्वम्। दण्डित्वम्। विषाणित्वम्। राजपुरुषत्वमिति क्रियादिसंबन्धित्वम्[12] ॥ देवदत्तत्वम्। चन्द्रत्वम्। सूर्यत्वमित्यवस्थाभेदात् ॥

---

१ प्रासादा म॰ M. N.
२ देवदत्त for देव N.
३ Om. F. M. N.
४ एवमन्येऽपि M.; om. N.
५ स्थूलेव D.; A. M. add गोमान्.
६ M. N. add मूकवत्.
७ देवदत्तगोमान् N.; M. om. from देवदत्त॰
८ Om. A.
९ वक्तव्यं। N.; D. M. om. एव।
१० D. adds लिङ्गात्.
११ B. D. M. om. शुक्लगुणस्य भावः; A. M. om. शुक्लस्य गुणस्य भावः; F. M. om. शुक्लता; M. om. शुक्लत्वमिति।; N. om. इति.
१२ ॰संबन्धित्वात्। D. N.

आकाशत्वमिति प्रदेशभेदात् । अभावत्वमिति संबन्धिभेदात्[१] । नानेत्यस्य[२] भावो नानात्वम्[३] ॥

## यण् च प्रकीर्तितः ॥ १४ ॥

भावेऽभिधेये यण् च प्रकीर्तितः । चकारात् तत्वौ च[४] । जडस्य भावो जाड्यम् । जडता । जडत्वम् ॥ ब्राह्मणस्य[५] भावो[५] ब्राह्मण्यम् । ब्राह्मणता । ब्राह्मणत्वम् ॥ एवं माणव्यम्[६] । वाडव्यम् ॥ प्रकीर्तितग्रहणं लक्ष्यानुरोधार्थम्[७] । तेन गुणवचनब्राह्मणादिभ्यो ऽन्येभ्यो[८] ऽपि क्रियायामपि दृश्यते । जडस्य कर्म जाड्यम् । ब्राह्मणस्य कर्म ब्राह्मण्यम् ॥

## तदस्यास्तीति मन्त्वन्त्वीन् ॥ १५ ॥

तदिति प्रथमान्तात् । अस्यास्तीत्यस्मिन्नर्थे मन्तु । वन्तु । विन् । इन् । इत्येते प्रत्यया भवन्ति । गावो विद्यन्तेऽस्येति गोमान् । एवम् आयुष्मान् । लक्ष्मीवान् । किंवान्[९] । विद्युत्वान् । पयस्वान् । भास्वान्[१०] । कर्मवान् । वृक्षवान् । मालावान् । तेजस्वी । पयस्वी । दण्डी । मायी । मायावी ॥ इतिशब्दो[११] विवक्षार्थः ॥

---

१ संबन्धभेदात् M.
२ नानेहास्य० F.; नानेत्येतस्य M. N.
३ नानात्वमिति A. F.
४ ०तत्वौ भवतः B. D. M.
५ Om. F. M. N.
६ मानव्यं A. B. F.
७ लक्षानु० A. B. F.; लक्षानिरो० N.
८ Om. F.; गुणवचनादिभ्यो ब्रा० A.
९ Om. M.
१० Om. D. M. N.; A. B. om. the next word.
११ ०शब्दोऽत्र A. F.

भूमनिन्दाप्रशंसासु(१) नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां मन्वादयो भवन्त्यमी ॥ १ ॥
तथा मोपधमान्ताच्च(२) धुडन्तादशिडन्ततः(३) ।
अवर्णोपधतश्चापि वन्तुरवर्णतस्तथा ॥ २ ॥
मायाशीर्षात्स्वरूपाच्च(४) व्रीह्येरर्थात्स्वरूपतः ।
यथा व्रीहीति शालीति इन्ननेकस्वरादतः ॥ ३ ॥
मायामेधास्रजो(५) विन् स्यादाधिकारादिभाषया ।
विहिताः सर्व एवैते शेषेभ्यो मन्तुरिष्यते ॥ ४ ॥
द्वन्द्वनिन्दितरोगेभ्यः प्राणिस्थेभ्य इनेव हि ।
कटकवलयी(६) कुष्ठी स्यात्काकतालुकी यथा ॥ ५ ॥
स्यात्स्वाङ्गात्तु(७) यथाप्राप्तं स्तनकेशवती यथा ।
कः स्वार्थे नित्यमेवैषां वातोऽस्यास्तीति वातकी ॥ ६ ॥
अतीसारव्यपोहृक् स्यात् पिशाचकी तथा स्मृतः ।
कश्मलसोन्मत्तत्वे(८) पिशाचशब्दोऽभिधीयते ॥ ७ ॥
वयसि गम्यमाने च पूरणान्तादिनेव हि ।
पञ्च दिनानि मासा वा(९) पञ्चमी बालको यथा ॥ ८ ॥

---

१ भूमिनिन्दा° B. D. N.
२ °मान्ताश्च F.
३ शिडन्तरः । B.
४ °शीर्षास्व° M. N.
५ मायामेधा° D. M.
६ °कुवलयी N. and orig. M.
७ स्वाङ्गाच्च D. M. N.
८ कसाल° N.
९ सामाश्च N.

सुखादिभ्य इन्नेव स्याद् बाह्वरुभ्यां बलादपि[१]।
सुखी दुःखी अलीकी च करुणी कृपणी हली।
तृप्री[२] कृच्छ्री प्रतीपी च सोढ्यास्यस्त्रीत्युदाहृतम्[३] ॥ ९ ॥
बाहुवल्यूरुबली च सर्वादेर्नित्यमिंस्तथा।
विज्ञेयं सर्ववीजीति सर्वकेशीत्युदाहृतम्[४] ॥ १० ॥
स्याद्धर्मशीलवर्णान्तादिन्नेवेति विवक्षया।
ब्रह्मधर्मी सुशीली च ब्रह्मवर्णीत्युदाहृतम् ॥ ११ ॥
जातौ तु हस्तदन्ताभ्यां कराच्चैव[५] इन्नेव हि।
हस्ती दन्ती करी ज्ञेयो वर्णादिन्ब्रह्मचारिणि ॥ १२ ॥
स्युर्ब्रह्मचरणाद्धेतोर्वर्णिनो ब्राह्मणास्त्रयः।
ब्रह्मचर्यं विनापि स्युः संभवाद्ब्राह्मणा इति ॥ १३ ॥
पुष्करोत्पलपद्मेभ्यो नडबिसतमालतः[६]।
कपित्थकुमुदाभ्यां च मृणालात्कर्दमात्ययः-[७] ॥ १४ ॥
शालूककरीषेभ्यश्च हिरण्याद्रूढदेशके।
विवक्षायामिन्नेवेति यथा पुष्करिणीति च ॥ १५ ॥
मन्नन्तमान्तशब्देभ्यः संज्ञायामिन्नेवेष्यते[८]।
अप्राप्तिनियमार्थं च दामिनी सोमिनी यथा ॥ १६ ॥

---

१ N. om. from बाह्व°
२ तृपी A.
३ सोस्यास्त्री° D.; सोढ्यस्यास्त्री° F.; सोढ्यस्यस्त्री M.; सो‾स्त्यास्त्रीत्यु° N.
४ N. om. this and the preceding half-śloka.
५ कराच्चैव F.
६ नलविष° D.; लडविष° F.; नडविश° M.; ·नडविंश° N.
७ कर्दमाच्चतः ॥ D.
८ °इति वेष्यते N.; इनितीष्यते। D.; इनिवेच्छते M.

इन्विषय इको वाच्यः प्रागुक्तान्नियमार्थतः[1] ।
स्वार्थे कः स्यान्न वाच्योऽयं दण्डेव दण्डिको यथा ॥ १७ ॥
संज्ञायाम्के ऽष्टकावीणानेवलावडवाग्निखा- ।
बलाकाभ्यः पताकाया इन्विभाषा विधीयते ॥ १८ ॥
वा कर्मचर्मवर्मभ्यस्तूलोत्साहवलोद्दाम-[2] ।
मूलदलकुलायायामारोह[3]प्रयामउपयाम-[4] ॥ १९ ॥
व्यायामावरोहाणाम्[5] ॥
इनन्तानां सदैतेषां[6] स्वार्थे को नेष्यते बुधैः ॥ २० ॥
एवमन्येऽपि[7] ॥

## संख्यायाः पूरणे डमौ ॥ १६ ॥

संख्यायाः पूरणेऽर्थे डमौ भवतः । व्यवस्थितवाधिकारादासंख्यादेर्नान्तायाश्च[8] मो भवति । शेषाच्च[9] डः । एकादशानां पूरणः । एकादशः । एकादशी । एवं पञ्चमः । पञ्चमी ॥ संख्यायाः पूरण इति किम् । एकादशानां पञ्चानां वोष्ट्रिकाणां पूरणो घटः ॥

## द्वेस्तीयः ॥ १७ ॥

द्वेः पूरणेऽर्थे तीयो[10] भवति । द्वयोः पूरणः । द्वितीयः ॥

---

१ प्रागुक्तो नि॰ D.; प्रागुक्ता नि॰ M.
२ वर्मभ्यः मूलोत्साह॰ corr. F.; स्थूलोत्साह॰ M. N.; ॰वलोद्गमे B.
३ ॰यामावरोह A. O.; ॰कुलायामामवरोह F.; कुलायामावरोहाणामिनन्तानां॰ B.
४ प्रयाम॰ F.O.; प्रयामोप॰ D.M.; प्रयामोपायामव्ययाम॰ A.
५ ॰वरोहणां M. N.; ॰वरोहाणाम्॰ D.
६ सदैवैषां D. M. N.
७ N. om. from एवम॰
८ D. om. च; असंख्यादेर्नान्ताश्च M.; असंख्यादिः संख्याया मो N.
९ शेषाच F.; शेषायाश्च D. M. N.
१० तीयः प्रत्ययः F.

त्रेस्तृ च ॥ १८ ॥

त्रेः पूरणेऽर्थे तीयो[१] भवति । त्रादेशश्च[२] । त्रयाणां पूरणः । तृतीयः ॥

अन्तस्थो डे षोः[३] ॥ १९ ॥

रषोरन्तस् थो भवति । डे परे । चतुर्णां पूरणः । चतुर्थः । एवं षष्ठः ॥ आगमत्वाद्विसर्गो[४] डत्वं च[५] न स्यात् ॥

कतिपयात्कतेः ॥ २० ॥

कतिपयात्कतेश्च पूरणेऽर्थे थो भवति । कतिपयथः । कतिथः ॥

विंशत्यादेस्तमट् ॥ २१ ॥

विंशत्यादेः पूरणेऽर्थे तमड् भवति । विंशतेः पूरणः । विंशतितमः । विंशतितमी । त्रिंशत्तमः । त्रिंशत्तमी ॥ उत्तरत्र नित्यग्रहणाद्विकल्पो लभ्यते । विंशः । त्रिंशः ॥

नित्यं शतादेः ॥ २२ ॥

शतादेः पूरणेऽर्थे नित्यं तमड् भवति । एकशततमः । एकसहस्रतमः[६] । एककोटितमः ॥

---

१ तीयः प्रत्ययो F.; तृतीयो D.
२ त्र्यादेशश्च B.; तृचादेशश्च M.
३ डे रषोः ॥ A.
४ आगमादि° M.
५ डलत्वं च A.; लं च B.
६ M. N. add एकलक्षतमः ।

**षष्ठ्याद्यतत्परात् ॥ २३ ॥**

तस्याः परस्तत्परः । संख्यायाः पर[1] इत्यर्थः । षष्ठ्यादेरसंख्यापरान्नित्यं तमड् भवति पूरणे[2]ऽर्थे[2] । षष्टितमः । सप्ततितमः । अशीतितमः । नवतितमः ॥ अतत्परादिति किम् । एकषष्टः । एकसप्ततः[3] ॥

**विभक्तिसंज्ञा विज्ञेया वक्ष्यन्तेऽतः परं तु ये ।**
**अद्यादेः सर्वनाम्नस्ते बहोश्चैव पराः स्मृताः ॥ २४ ॥**

अतत्वात्सर्वनामकार्यं प्रत्येव[4] विभक्तिसंज्ञा । तेन यदा[5] । कदेति घोषवति न दीर्घः ॥ बहुशब्दोऽत्र संख्यावचनः सर्वनामसाहचर्यात् ॥

**तन्नेदमिः ॥ २५ ॥**

तेषु विभक्तिसंज्ञकेष्विदमिकारो[6] भवति । इतः । इह । इदानीम् । अधुना ॥

**रथोरेतेत् ॥ २६ ॥**

रथोः परत[7] इदम् एत । इत् । इत्येतौ प्राप्नोति[8] यथासंख्यम् । एतर्हि । इत्थम् ॥

---

१ M. om. from संख्यायाः
२ Om. A. F. M. N.
३ एकषष्टितमः M. N.; om. D.
४ प्रत्येकं N.; प्रति M.
५ तदा M. N.
६ °संज्ञिष्विद° D. F.; °संज्ञिकेष्विद° M.; संज्ञकेषु तकारादिषु इद° A.
७ पर A.
८ भवतः F.

**तेषु त्वेतदकारताम् ॥ २७ ॥**

तेषु तकारादिष्वेतदकारतां[१] प्राप्नोति । अतः । अत्र ॥ तकारादिष्विति किम् । एतथा[२] ॥

**पञ्चम्यास्तस् ॥ २८ ॥**

सर्वनाम्नोऽद्व्यादेर्बहोश्चैव[३] पञ्चम्यन्तात् तस्प्रत्ययो भवति वा[४] । सर्वस्मात् सर्वतः । तस्मात् ततः । बहुभ्यो बहुतः ॥ अद्व्यादेरिति किम् । द्वाभ्यां भवतः ॥ उगवादितः प्रयोगतश्चेति ज्ञापकादसर्वनाम्नो[५]ऽप्यवधिमात्रे तस् वक्तव्यः । ग्रामात् । ग्रामतः ॥ हागुरुहोरवधौ न भवति[६] । युष्मद्धीयते । सार्थाद्धीनः । पर्वतादवरोहति ॥

**त्र सप्तम्याः ॥ २९ ॥**

सर्वनाम्नो[७]ऽद्व्यादेर्[८] बहोश्चैव[९] सप्तम्यन्तात् त्रप्रत्ययो भवति वा । सर्वस्मिन् सर्वत्र[१०] । बहुषु बहुत्र ॥ अद्व्यादेरिति किम् । द्वयोः । त्वयि । मयि ॥ आद्यादिभ्यस्[११] तस् वक्तव्यः ।

---

१ तेषु तकारादिषु विभक्तिसंज्ञकेषु एतद्० F.; ०विभक्तिसंज्ञेषु एतदकार० D.; तेषु विभक्तिसंज्ञिकेषु एतदकारतां M.

२ M. adds अकारवचने तथा॥

३ F. M. om. from सर्वनाम्नो; D. N. om. बहोश्चैव.

४ तस् भवति बहोश्च वा N.

५ ज्ञापयति । असर्व० D. M. N.

६ स्यात् A. B.

७ A. adds लिङ्गादकारान्ताद्; om. M.

८ द्वादिवर्जितात् N.; om. M.

९ च F.; M. N. om. from बहो०

१० F. adds तस्मिन् । तत्र ।; O. यत्र । तत्र ।

११ D. adds सप्तम्यन्तेभ्यस्.

आदौ। आदितः। मध्ये। मध्यतः। अन्ते। अन्ततः। पृष्ठे। पृष्ठतः। मुखे(१)। मुखतः(१)। पार्श्वे। पार्श्वतः॥ आकृतिगणोऽयम्॥

इदमो हः॥ ३०॥

इदमः सप्तम्यन्ताद् हो भवति वा(२)। अस्मिन्। इह(३)॥

किमः॥ ३१॥

किमः सप्तम्यन्ताद् हो भवति वा(४)। कस्मिन्। कुह॥ छन्दस्येवेत्यन्ये(५)॥

अत् क च॥ ३२॥

किमः सप्तम्यन्तादद् भवति। कादेशश्च(६)। कस्मिन्। क्व॥

तहोः कुः॥ ३३॥

तकारहकारयोः(७) परयोः(८) किं(९) कुर्भवति। कुतः। कुह॥

काले किंसर्वयदेकान्येभ्य एव दा॥ ३४॥

एभ्यः काले वर्तमानेभ्यः सप्तम्यन्तेभ्यो दाप्रत्ययो भवति(१०)।

---

१ Om. B. M.; F. adds अग्रे। अग्रतः।
२ Om. B. D. F. N.
३ M. adds चस्यापवादोऽयम्।
४ Om. D. F. M. N.
५ ०इत्येके F.; ०इत्येवमादयः D.; छांदसावित्येके M.
६ कचादेशश्च M. N.
७ तहोः B.
८ Om. A. M.
९ किमः D. F. N.
१० भवति वा A.

कस्मिन्काले। कदा। एवं सर्वदा। यदा। एकदा। अन्यदा॥ काल इति किम्। सर्वत्र देशे॥

इदमो र्ह्यधुना दानीम्॥ ३५॥

काले वर्तमानादिदमः सप्तम्यन्ताद् र्हि। अधुना। दानीम्। इत्येते प्रत्यया भवन्ति। अस्मिन्काले। एतर्हि। अधुना। इदानीम्॥

दादानीमौ तदः स्मृतौ॥ ३६॥

काले वर्तमानात्तदः सप्तम्यन्ताद् दादानीमौ प्रत्ययौ[1] स्मृतौ। तस्मिन्काले[2]। तदा। तदानीम्॥

सद्यआद्या निपात्यन्ते॥ ३७॥

[3]समानेऽहनि। सद्यः। समानस्य सभावो द्यस्च[4] परविधिः॥ परस्मिन्नहनि परेद्यवि[5]। परादेरेद्यवि[6]॥ अस्मिन्नहनि। अद्य। इदमोऽश्भावो द्य च परविधिः[7]॥ परुत्। परारि। पूर्वपूर्वतरयोः पर उदारी च॥ अस्मिन्संवत्सरे। ऐषमः। इदमः समसिण्[8]॥ पूर्वस्मिन्नहनि। पूर्वेद्युः। पूर्वादेरेद्युस्। एवमपरेद्युः[9]।

---

१ Om. A. N.

२ Om. D. M. N.; A. om. काले।

३ D. M. N. add सद्य [सद्यस् N.; अद्यस् M.] आद्याः शब्दाः काले ऽभिधेये निपात्यन्ते।

४ द्यस् च A. B.

५ परेद्यविः A. B. M.; °विस् N.; D. om. from परस्मि°

६ °द्यविः A. B.; परादेर्द्यवसि M.; om. D. N.

७ द्यश्च° N.; D. om. from अस्मिन्°

८ सिन् A. B. D.

९ परेद्युः A.; पूर्वान्यान्यतरापराधरोत्तरेभ्य एद्युस्। अपरेद्युः। M.

अधरेद्युः। उत्तरेद्युः। अन्येद्युः। अन्यतरेद्युः। इतरेद्युः। उभयेद्युः। उभयाद् द्युस्च[1] ॥ किमन्ययत्तद्भ्यो[2] ऽनद्यतनवृत्तिभ्यो[3] र्हिर्वा। कस्मिन्काले[4]। कर्हि। कदा। अन्यर्हि। अन्यदा। यर्हि। यदा। तर्हि। तदा[5]। अद्यतनेऽपि[6] ॥ एवं पुरस्तादादयो ऽप्यनुसर्तव्याः[7] ॥

## प्रकारवचने तु था ॥ ३८ ॥

सर्वनाम्नोऽद्व्यादेः प्रकारवचने तु थाप्रत्ययो भवति। सामान्यस्य भेदकः प्रकारः। सर्वेण प्रकारेण। सर्वथा। एवं यथा। तथा ॥ वाक्यार्थवशेन[8] सर्वविभक्तिभ्यो ज्ञेयः ॥ था इति बहुवचनं[9] वा। तेन संख्यायाः प्रकारे धा। एकधा। द्विधा। त्रिधा। चतुर्धा। पञ्चधा। सप्तधा[10] ॥ द्वित्रिभ्यां धमुण् एधा[11] च। द्वैधम्। द्वेधा। त्रैधम्। त्रेधा ॥ एकाद्ध्यमुण्[12] वा। ऐकध्यम्[13]। एकधा ॥

## इदम्किम्भ्यां थमुः कार्यः ॥ ३९ ॥

इदम्किम्भ्यां प्रकारवचने थमुः कार्यः। अनेन प्रकारेण। इत्थम् ॥ केन प्रकारेण। कथम् ॥

---

१ द्यस् च A. B.
२ ॰यत्तदेतद्भ्यो D. M.
३ Om. A.; ॰र्हि वा M.
४ Om. D. F. M. N.
५ M. adds एतर्हि। एतदा।
६ A. adds तर्हि; D. om. from अद्य॰
७ A. N. om. अपि; पुरस्तादयस्त्वनु॰ B. D.; पुरस्तादित्यादयो॰ M. N.
८ ॰अर्थविशेषेन N.
९ बहुवचनात्तं D. M. N.
१० बहुधा D. N. and marg. M.
११ धमणेधा N.
१२ एकाद्ध्यमण् N.; एकाद्ध्मुण् A.
१३ ऐकद्यम्। A.; B. adds एकेन प्रकारेण.

आख्याताच्च तमादयः ॥ ४० ॥

नाम्न आख्याताच्च तमादयः प्रत्यया(१) निपात्यन्ते(२)। आख्यातं क्रियाप्रधानम्। आढ्यतरः। आढ्यतमः। प्रकृष्ट आढ्य उच्यते निपातनस्येष्टविषयत्वात्(३)। तथा(४) पचतितराम्। पचतितमाम्। किन्तराम्। किन्तमाम्। पूर्वाह्णेतराम्। पूर्वाह्णेतमाम्(५)। उच्चैस्तराम्। उच्चैस्तमाम्॥ आख्यातकिमेकारान्ताव्ययेभ्यः क्रियागुणप्रकर्षवृत्तिभ्य एव तराम् तमाम्॥

तथा गुणादिष्ठेयन्सौ(६) वा॥ पटिष्ठः। पटीयान्। पटुतरः। पटुतमः॥

प्रकर्षे रूपः(७)॥ प्रकृष्टं पचति। पचतिरूपम्। प्रकृष्टो वैयाकरणः वैयाकरणरूपः॥

ईषदसमाप्तौ(८) कल्पदेश्यदेशीयाः॥ पटुकल्पः। पटुदेश्यः। पटुदेशीयः। पचतिकल्पम्। पचतिदेश्यम्। पचतिदेशीयम्॥

कुत्सितवृत्तेर्नाम्न एव पाशः॥ कुत्सितो वैयाकरणः। वैयाकरणपाशः॥

भूतपूर्ववृत्तेश्चरट्॥ भूतपूर्व आढ्यः। आढ्यचरः। आढ्यचरी॥ षष्ठ्यन्ताद्भूतपूर्वेऽभिधेये(९) रूप्यश्च॥ देवदत्तस्य भूतपूर्वो गौः। देवदत्तरूप्यः(१०)। देवदत्तचरः(११)॥

---

१ प्रत्ययान्ता A.
२ भवन्ति M.
३ निपातनात्। D. F. M. N.
४ Om. M. N.; A. adds आख्याताच्च.
५ पूर्वेतमाम्। D.
६ °यंसौ F. M. N.; °यन्सु A. B.
७ तथा प्रकृष्टे रूपश्च॥ D. F. N.; om. M.
८ ईषदपरिसमाप्तौ D. M. N.
९ °भूपाभिधेये A.; °भूतेऽभिधेये B. D.
१० देवदत्तस्य रूप्यः M.
११ A. B. add देवदत्तचरी.

बह्वल्पार्थात्कारकाच्छस् वा मङ्गले गम्यमाने ॥ बहु देहि । बहुशो देहि । एवं प्रभूतं[१] देहि[१] । प्रभूतशो देहि ।[२] अल्पशो देहि ।[२] स्तोकशो देहि ॥

संख्यैकार्थाभ्यां वीप्सायाम् ॥ द्वौ द्वौ देहि । द्विशो देहि । एवं[३] कार्षापणशो देहि । कुडवशः । पादशः ॥

कतिगणवन्तूनां संख्यावत् ॥ कतिशः । गणशः । तावच्छः ॥

वारस्य संख्यायाः कृत्वस् ॥ पञ्च वारान् भुङ्क्ते । पञ्चकृत्वः । कतिकृत्वः । गणकृत्वः । तावत्कृत्वः । शतं वारान् भुङ्क्ते । शतं[४] वाराणां वा भुङ्क्ते । शतकृत्वः ॥

बहोरविप्रकर्षे[५] धा च ॥ बहून् वारान् भुङ्क्ते । बहुधा दिवसस्य[६] । बहुकृत्वः ॥

द्वित्रिचतुर्भ्यः सुच्[७] ॥ द्वौ वारौ भुङ्क्ते । द्विर्भुङ्क्ते । त्रिर्भुङ्क्ते । चतुर्भुङ्क्ते ॥

प्रस्तुतवृत्तेर्मयट् ॥ अन्नं प्रस्तुतम् । अन्नमयम् । एवं यवागूमयो ॥

प्रकृतेर्विकारेऽवयवे वाभक्ष्याच्छादनयोः[८] ॥ अश्ममयम् । भस्ममयम् । सुवर्णमयम् ॥ भक्ष्याच्छादनयोस्तु[९] । मौद्गः सूपः । कार्पासमाच्छादनम् । मयटाऽण् न बाध्यते ॥

एकस्वरान्नित्यम्[१०] ॥ वाङ्मयम् । त्वङ्मयम्[११] । मृन्मयम् ॥

---

१ Om. A. F.

२ D. N. add अल्पं देहि । स्तोकं देहि ।

३ B. D. add कार्षापणं देहि.

४ Om. A.

५ बहोरपि प्रकर्षे A. and orig. B.

६ Om. F.

७ °संख्यावारे सुच । D. M. N.

८ वाऽभक्ष्याच्छाद° A. D. M.; D. adds अश्मनो विकारः ।

९ भक्ष्या° A. M.; तु न भवति । D.

१० °नित्यं मयट् M.; नित्यमयट् N.

११ त्वन्मयं A. B.

अभूततद्भावे कृभ्वस्तिषु विकाराच्च्विः ॥ अशुक्लं शुक्लं करोति । शुक्लीकरोति ॥ अशुक्लः शुक्लोभवति । शुक्लीभवति । शुक्लीस्यात् ॥

अरुर्मनश्चक्षुश्चेतोरहोरजोभ्यः ॥ कृतसलोपेभ्य एवायं विधिः । निपातनस्येष्टविषयत्वात् । अनरुररुः करोति । अरूकरोतीत्यादि[1]॥

अभिव्याप्तौ संपद्यतौ च सातिर्वा ॥ वर्षासु लवणमुदकं संपद्यते । उदकसात्संपद्यते । उदकसात्करोति[2] । उदकसाद्भवति । उदकसात्स्यात्[3] ॥

स्वाम्यर्थादायत्ते[4] ॥ राजायत्तं करोति । राजसात्करोति । राजसाद्भवति । राजसात्स्यात् । राजसात्संपद्यते ॥

देये त्रा च ॥ देवाय देयं करोति । देवत्रा करोति । देवत्रा भवति । देवत्रा स्यात् । देवत्रा संपद्यते[5] । एवमन्येऽपि ॥

अव्यक्तानुकरणादनेकस्वरादनितौ डाच् ॥ पटत्पटत्करोति[6] । पटपटाकरोति । पटपटाभवति । पटपटासंपद्यते । पटपटास्यात् ॥

द्वितीयतृतीयशम्बबीजेभ्यः[7] कृषिविषये[8] करोतौ ॥ द्वितीयाकरोति । तृतीयाकरोति । शम्बाकरोति[7] । बीजाकरोति[9] ॥

---

१ °इत्येवमादयः ॥ D.; M. N. add some more examples.

२ वर्षासु लवणमुदकसात्संपद्यते° । D. N.; वर्षासु लवणं अनुदकमुदकं करोति । उदकसात्करोति । M.

३ D. adds पक्षे उदकीकरोतीत्यादि.

४ °आयत्ते च ॥ D.; °आयते । M.

५ D. adds देवसात्करोति ।

६ Om. D. M. N.; अपटत्पटत्° B. F.

७ संब° (संव) MSS. except M.

८ °विषयेभ्यः D.

९ A. adds क्षेत्रं.

संख्यादेर्गुणात् ॥ द्विगुणाकरोति । त्रिगुणाकरोति क्षेत्रम् ॥

समयाद् यापनायाम् ॥ समयाकरोति ॥

सपत्त्रनिष्पत्त्राभ्यामतिव्यथने[1] ॥ सपत्त्राकरोति । निष्पत्त्राकरोति मृगम् ॥

निष्कुलान्निष्कोषणे ॥ निष्कुलाकरोति दाडिमम् ॥

प्रियसुखाभ्यामानुकूल्ये ॥ प्रियाकरोति । सुखाकरोति ॥

दुःखात्प्रातिकूल्ये ॥ दुःखाकरोति ॥

शूलात्पाके ॥ शूले[2] पचति मांसम् । शूलाकरोति ॥

सत्यादशपथे ॥ सत्याकरोति वणिग्भाण्डम्[3] ॥

मद्रभद्राभ्यां वपने ॥ मद्राकरोति । भद्राकरोति[4] ॥

## समासान्तगतानां वा राजादीनामदन्तता ॥ ४१ ॥

समासान्तगतानां वा राजादीनामदन्तता निपात्यते[5] । अत्प्रत्ययो वाऽदन्तो वा[6] येषामिति विग्रहः । अवयवावयवो[7]ऽपि समासस्यावयवः । तेनोपराजम् । अध्यात्मम् । अव्ययीभावाद्[8] विभक्तीनामम्[9] ॥ द्विपुरी । त्रिपुरी । द्विगोर्नदादि-

---

१ °अतिव्यञ्जने ॥ D.
२ शूलेन A.
३ वणिक् भ° B.
४ F. adds तमादिराकृतिगणोऽयं।
५ °अदन्ता निपात्यन्ते B. D.
६ Om. A.; अत्प्रत्ययो ऽन्तो वा D. M.; °वांतो N.
७ अवयवो M.; अवयवा अवयवो N.
८ D. N. add अकारान्ताद्.
९ अव्ययीभावादित्यम् F.

त्वादी(१) ॥ सक्थिनी । द्वन्द्वनिन्दितरोगेभ्य इतीन्(२) । एवमन्येऽपि ॥

प्रणम्य रुद्रस्य हरेर्भवान्या
वाण्या गणेशस्य च पादपद्मम् ।
तनोति रत्नेश्वरचक्रवर्ती
राजादिवृत्तिं पठतां हिताय ॥

राजन् अहन् सखि ॥ १ ॥ प्रागुक्तो विधिस्तत्पुरुष एव वक्ष्यति । एते तत्पुरुषे राजादयो भवन्ति । राजादित्वाददन्तता स्यादित्यर्थः । महाराजः । परमाहः । द्व्यहः । विबुधसखः ॥ तत्पुरुष इति किम् । शोभनराजा मगधः । दीर्घाहो निदाघः । वायुसखा राजा ॥

गोरतद्धिताभिधेये ॥ २ ॥ तद्धिताभिधेयं वर्जयित्वा तत्पुरुषे गौ राजादिर्भवति । राजगवः । परमगवः ॥ अतद्धिताभिधेय इति किम् । पञ्चगुः । अन्यत्र चित्रगुः ॥

उरःप्रधानार्थम् ॥ ३ ॥ प्रधानार्थ उरःशब्दो राजादिर्भवति । अश्वोरसम् । हस्त्युरसम् । अश्वानां हस्तिनां च प्रधानमित्यर्थः ॥ प्रधानार्थमिति किम् । अश्वोरः । अश्वानां वक्ष इत्यर्थः ॥

अनस् अश्मन् अयस् सरस् जातिसंज्ञयोः ॥ ४ ॥ जातौ संज्ञायां च एते चत्वारो राजादयो भवन्ति । उपगतमनः । उपानसम् । जातिः ॥ महानसम् । संज्ञा ॥ अमृताश्मः । जातिः ॥ क्ष्माश्मः । संज्ञा ॥ पिण्डायसम् । जातिः ॥ लोहितायसम् । संज्ञा ॥ मण्डूकसरसम् । जातिः ॥ जलसरसम् । संज्ञा ॥ अनयोरिति किम् । बृहदन इत्यादि ॥

ग्रामकौटाभ्यां तक्षन्(३) ॥ ५ ॥ आभ्यां तक्षा राजादिर्भवति । ग्रामतक्षः । कौटतक्षः ॥ आभ्यामिति किम् । राजतक्षा ॥

---

१ °त्वादीप्रत्ययः N.
२ °रोगेभ्य इन् । D. M. N.
३ ग्रामकूटाभ्यां F. M. N.; तक्षण् D.

अतेः श्वन् ॥ ६ ॥ अतिपूर्वः श्वा राजादिर्भवति । अतिश्वो वराहः । वेगवानित्यर्थः ॥ अतिश्वः सेवकः । सुस्वामिभक्त इत्यर्थः ॥ अतिश्वी सेवा । निकृष्टेत्यर्थः ॥

उपमानादप्राणिनि ॥ ७ ॥ अप्राणिविषय उपमानं यः । स राजादिर्भवति । आकर्षः श्वेव । आकर्षश्वः ॥ फलकः श्वेव । फलकश्वः ॥ अप्राणिनीति किम् । व्याघ्रः श्वेव । व्याघ्रश्वः ॥

मृगपूर्वोत्तरेभ्यश्च सक्थि[1] ॥ ८ ॥ एभ्य उपमानाच्च सक्थि राजादि भवति । मृगसक्थम् । पूर्वसक्थम् । उत्तरसक्थम् । फलकसक्थम् ॥

अतद्धितार्थे द्विगोर्नौः ॥ ९ ॥ तद्धितार्थं वर्जयित्वोत्तरपदे समाहारे च द्विगोः संबन्धिनी नौ राजादिर्भवति । द्विनावं धनम् । पञ्चनावं धनम् ॥ अतद्धितार्थ इति किम् । पञ्चनौः ॥ द्विगोरिति किम् । परमनौः ॥

अर्धाच्च ॥ १० ॥ अर्धशब्दाच्च परान्नौ राजादिर्भवति । अर्धनावम् ॥ लिङ्गस्य लोकाश्रयत्वान्नपुंसकत्वमेव ॥

वा खारी ॥ ११ ॥ अर्धात्परा । अतद्धितार्थे द्विगोः खारी राजादिर्भवति वा । अर्धखारम् । अर्धखारी । अभिधानबलान्न स्त्रीत्वम् ॥ द्विखारधनम् । द्विखारी । अतद्धितार्थे द्विगोः स्त्रीप्रत्ययस्य निवृत्तिर्नास्ति व्यावृत्तिः । पञ्चभिः खारीभिः क्रीतः । पञ्चखारः ॥

द्वित्रिभ्यामञ्जलिः ॥ १२ ॥ आभ्यां परोऽञ्जलिशब्दो राजादिर्भवति वा । द्व्यञ्जलम् । द्व्यञ्जलि । त्र्यञ्जलम् । त्र्यञ्जलि । द्व्यञ्जलप्रियः[2] । द्व्यञ्जलिप्रियः । त्र्यञ्जलप्रियः । त्र्यञ्जलिप्रियः[2] ॥ उत्तरपदेऽतद्धितार्थे नेच्छन्त्यन्ये ॥ अतद्धितार्थे द्विगोरिति किम् । द्व्यञ्जलिः । त्र्यञ्जलिः ॥

जनपदाद् ब्रह्मन् ॥ १३ ॥ जनपदवाचकाच्छब्दात्परो ब्रह्मन् राजादिर्भवति । अवन्तिषु ब्रह्मा । अवन्तिब्रह्मः ॥ वा न वर्तते परत्र वाग्रहणात् ॥

---

१ सक्थि वा । D. २ द्व्यञ्जलः प्रियः । द्व्यञ्जलिः प्रियः । etc. MS.

कुमहद्भ्यां वा ॥ १४ ॥ आभ्यां ब्रह्मन् राजादिर्भवति वा । कुत्सितो ब्रह्मा । कुब्रह्मः । कुब्रह्मा । महाब्रह्मः । महाब्रह्मा ॥ आभ्यामिति किम् । परमब्रह्मा ॥

उक्तेषु(१) स्त्रीत्वसंभवे नदादौ द्रष्टव्याः ॥ १५ ॥ एतेऽत्प्रत्ययान्ताः स्त्रियां वर्तन्ते चेत्तदा नदादौ द्रष्टव्याः । ईप्रत्ययान्ता भवन्तीत्यर्थः । यथा राजानमतिक्रान्ता । अतिराजी । इत्यादि ॥ संभव इति किम् । अर्धनावम् । अर्धखारम् ॥

संख्याव्ययाद्यङ्गुलिः(२) ॥ १६ ॥ संख्याव्ययावादी यस्येति विग्रहः । संख्याव्ययाद्यङ्गुलिशब्दो राजादिर्भवति । द्वयोरङ्गुल्योः समाहारः । द्व्यङ्गुलम् ॥ द्वे अङ्गुली प्रमाणमस्य । द्व्यङ्गुलं दारु ॥ तद्धिताभिधेये द्विगुरयम् । तेन तमादिविहिताः प्रमाणे द्वयसट्दघ्नट्मात्रट्प्रत्यया न भवन्त्युक्तार्थत्वात् । यथा अङ्गुलिः प्रमाणमस्य । अङ्गुलिद्वयसम् । अङ्गुलिदघ्नम् । अङ्गुलिमात्रम्(३) ॥ अव्ययादि । निरङ्गुलम् ॥

अहःसर्वैकदेशसंख्यातपुण्यवर्षादीर्घादिश्च(४) रात्रिः ॥ १७ ॥ एतेभ्यः संख्याव्ययादिभ्यश्च रात्रिशब्दो राजादिर्भवति । अहोरात्रः । सर्वरात्रः ॥ पूर्वरात्रः । अपररात्रः । एकदेशे वर्तमानस्य पूर्वादिशब्दस्यैकदेशित्वात्कर्मधारयः । अन्यत्र पूर्वरात्रिः । अतिक्रान्ता रात्रिरित्यर्थः ॥ संख्यातरात्रः । पुण्यरात्रः । वर्षारात्रः । दीर्घरात्रः ॥ संख्याव्ययादिश्च । द्विरात्रम् । त्रिरात्रम् ॥ एभ्योऽह्नोऽति नलोपो न दृश्यते । पूर्वाह्ण इत्यादि ॥ संख्याताह्ना । संख्याताह्नः । संख्याताहः ॥ समाहारद्विगौ नलोपः । द्व्यहः । त्र्यहः ॥

प्रागुक्तो विधिस्तत्पुरुष एव ॥ १८ ॥ राजन्नहन् सखीत्यादियों

१ Om. D. M. N.

२ संख्याव्ययाभ्यामङ्गुलिः D. and corr. F.; ०व्ययाभ्यां द्व्यङ्गुलिः B.

३ Trill. adds. काष्ठम् ॥

४ दीर्घादिभ्यश्च D.

विधिः स तत्पुरुष एव राजादिर्भवतीति वेदितव्यः। तेन बहुव्रीह्यादौ न भवतीत्यर्थः। इन्द्रः सखा यस्य। इन्द्रसखा॥ उपसखि। राजाहसखायः। इत्यादि॥

पथ्यप्पुरः॥ १९॥ एते समासमान्ते राजादयो भवन्ति। स्थूलश्चासौ पन्थाश्चेति स्थूलपथः॥ विमला आपो यत्र। विमलापं सरः। ललाटं पूरिव। ललाटपुरम्॥

धुरनक्षस्य॥ २०॥ अक्षसंबन्धिनीं धुरं वर्जयित्वा धुर्शब्दो राजादिर्भवति। राजधुरा(१)। महाधुरा॥ अनक्षस्येति किम्। अक्षधूः। दृढधूरक्षः॥

ऋच्॥ २१॥ समासमात्र ऋक्शब्दो राजादिर्भवति। अर्धर्चः। सप्तर्चः॥

नञ्बह्वादिश्च माणवकचरणयोः(२)॥ २२॥ चकारः समुच्चयमात्रे। नञ्बह्वादिश्च ऋक्शब्दो(३) राजादिर्भवति। माणवकचरणयोः। अनृचो माणवकः। बह्वृचश्चरणः॥ अनयोरिति किम्। अनृक्कं साम। बह्वृक्कं सूक्तम्। शेषाद्वेति कप्रत्ययः॥

प्रत्यन्ववेभ्यः(४) सामलोमनी॥ २३॥ प्रति। अनु। अव। एभ्यः सामलोमनी राजादी भवतः। प्रतिसामम्। प्रतिलोमम्॥ अनुसामम्। अनुलोमम्॥ अवसामम्। अवलोमम्॥ प्रतिगतं साम इत्यादिवाक्यम्॥

अचक्षुरक्षि॥ २४॥ अचक्षुर्विषये वर्तमानम् अक्षि राजादि भवति। लवणमक्षीव। लवणाक्षः। गवाक्षः॥ अचक्षुरिति किम्। ब्राह्मणाक्षि॥

---

१ MS. orig. राजधुरः; corr. into राजधुरं Triloch. as above.

२ माणवचरणयोः F. and orig. M.

३ Om. MS.

४ अभ्यन्व° M.

ब्रह्महस्तिराजपल्येभ्यो(1) वर्चस् ॥ २५ ॥ एभ्यो वर्चो राजादि भवति । वर्चो दीप्तिः ॥ ब्रह्मणो वर्चः ब्रह्मवर्चसम् हस्तिवर्चसम् । राजवर्चसम् । पल्यवर्चसम् ॥ एभ्य इति किम् । देववर्चः ॥

अन्धसमवेभ्यस्तमस् ॥ २६ ॥ एभ्यस्तमो राजादि भवति । अन्धं करोतीति । अन्धम् ॥ अन्धं च तमश्चेति । अन्धतमसम् ॥ सन्ततं तमः । सन्तमसम् ॥ अवक्षीणं तमः । अवतमसम् ॥ एभ्य इति किम् । महातमः ॥

श्वसोऽवसीयस् ॥ २७ ॥ श्वस इत्यस्मात्परम् अवसीयो राजादि भवति । शोभनमवसीयः । श्वोऽवसीयसं कल्याणमिति ॥

निसश्च(2) श्रेयस् ॥ २८ ॥ चकारः श्वसोऽनुकर्षणार्थः । निसः श्वसश्च परं श्रेयो राजादि भवति । निःश्रेयसम् । श्वःश्रेयसम् । कल्याणमित्यर्थः ॥

अन्ववतप्तेभ्यो(3) रहस् ॥ २९ ॥ एभ्यो रहो राजादि भवति । अनुरहसम् । अवरहसम् । तप्तरहसम् ॥

प्रतेरुरस् आधारश्चेत् ॥ ३० ॥ यद्याधारः स्यात् तदा प्रतेः पर उरसशब्दो राजादिर्भवति । उरसि वर्तते । प्रत्युरसम् । उरसीत्यर्थः ॥ आधार इति किम् । प्रत्युरः ॥

अनुगवमायामवति ॥ ३१ ॥ आयामो दैर्घ्यम् ॥ अनुगवम् अत्प्रत्ययान्तं निपात्यते दैर्घ्यं चेत् । गवामनुयातं शकटम् । अनुगवम् ॥ आयामवतीति किम् । गवां पश्चात् । अनुगु । पश्चादर्थेऽव्ययीभावः ॥

उपसर्गादध्वन् ॥ ३२ ॥ प्रादेः परोऽध्वनशब्दो राजादिर्भवति । प्रगतोऽध्वानम् । प्राध्वो रथः । अत्यध्वं शकटम् ॥ उपसर्गग्रहणं सुखार्थं प्रादेरिति सिद्धत्वात् ॥

---

१ ॰पल्पेभ्यो A.; ॰पापेभ्यो D.; ॰पल्लेभ्यो N. and om. ब्रह्महस्ति.

२ निश्च N.; निरश्च M.

३ ॰तलेभ्यो M.

उदकपाण्डुकृष्णेभ्यो(१) भूमिः ॥ ३३ ॥ एभ्यो भूमी राजादिर्भवति। उदीची भूमिर्यत्र। उदग्भूमः। एवं पाण्डुभूमः। कृष्टभूमो देशः॥

संख्याया नदीगोदावर्यौ च ॥ ३४ ॥ एकादयः संख्या। अस्याः परा नदी गोदावरी भूमिश्च राजादयो भवन्ति। पञ्चनदम्। पञ्चगोदावरम्। नदीवाचकानां समाहार अव्ययीभावो दृश्यते। द्वे भूमी यस्य। द्विभूमः प्रासादः॥

उक्तेषु स्त्रीत्वसंभवे स्त्रियामादा ॥ ३५ ॥ उक्तेषु पन्थ्यपपुर इत्यादिष्वत्प्रत्ययान्तेषु स्त्रीत्वसंभवे सति स्त्रियामादा भवतीत्यर्थः। स्थूलः पन्था यस्याः सा स्थूलपथा नगरी॥ स्त्रीत्वसंभव इति किम्। ललाटे पुरम्॥

समाहारद्वन्द्वश्चवर्गदषहान्तः(२) ॥ ३६ ॥ समाहारद्वन्द्वसमासस्थाश्चवर्गान्तदान्तषान्तहान्ता राजादयो भवन्ति। वाक्त्वचम्। श्रीस्रजम्॥ दकारान्त। समिद्दृषदम्॥ षान्त। वाग्द्विषम्॥ हान्त। पीठच्छात्त्रोपानहम्॥ समाहारद्वन्द्वस्थादिति किम। रक्तत्वचौ॥

इतोऽव्ययीभावः ॥ ३७ ॥ इतः परो बहुव्रीहिः प्राप्यो विधिः स राजादयो वक्ष्यन्ते। तेऽव्ययीभावसमासे भवन्तीत्यधिक्रियते॥

शरद्विपाश्अयस्चेतस्मनस्उपानह्विदः संज्ञायाम्(३) ॥ ३८ ॥ एतेऽव्ययीभावसमासान्ताः संज्ञायां राजादयो भवन्ति। शरदः समीपम् उपशरदम्। उपविपाशम्। उपायसम्। उपचेतसम्। उपमनसम्। उपोपानहम्। उपविदम्॥

हिमवन्त् दिधा(४) ॥ ३९ ॥ एतौ राजादी भवतः। उपहिमवतम्। उपद्दिधम्॥

---

१ °कृष्टेभ्यो A.
२ ०द्वन्द्वचवर्गदषहान्ताः A.
३ °उपानह्विद्न्स॥ N.; °उपानह- द्विचिविद् ॥ D.; उपानह सह M.; [विपास् M. N.].
४ D. om. दिधा.

अनड्वाह् विश् चत्वार् यद् तद् ॥ ४० ॥ अव्ययीभावसमासे एते राजादयो भवन्ति। उपानडुहम्। उपविशम्। उपचतुरम्। उपयदम्। उपतदम्॥

जरा जरस् ॥ ४१ ॥ जराशब्दो राजादिर्भवति निर्दिष्टस्य जराशब्दस्य जरसादेशश्च। उपजरसम्॥

प्रतिसमनुभ्योऽक्षि ॥ ४२ ॥ एभ्योऽक्षिशब्दो राजादिर्भवति। प्रत्यक्षम्। समक्षम्। अन्वक्षम्॥

उपश्वन्(१) ॥ ४३ ॥ उपादेव श्वन्शब्दो राजादिर्भवति। नान्यस्मादिति। उपशुनम्॥ नियमः किम्। अधिश्व॥

सहरजस्(२) ॥ ४४ ॥ सहात्परो रजस्शब्दो राजादिर्भवति। सरजसमभ्यवहरति। साकल्येऽव्ययीभावः॥

अन्नन्तः(३) ॥ ४५ ॥ अन्नन्तशब्दो राजादिर्भवति। अध्यात्मम्। उपराजम्॥

नपुंसकं(४) वा ॥ ४६ ॥ नपुंसकलिङ्गमनन्तं राजादि भवति वा। उपचर्मम्। उपचर्म॥

धुडन्तः ॥ ४७ ॥ नपुंसकमिति न वर्तते। अधिकारस्येष्टविषयत्वात्। धुडन्तशब्दो राजादिर्भवति वा। उपसमिधम्। उपसमित्। उपदृशदम्। उपदृशत्॥

गिरि नदी पौर्णमासी आग्रहायणी ॥ ४८ ॥ एते चत्वारो राजादयो भवन्ति वा। उपगिरम्। उपगिरि। उपनदम्। उपनदि। उपपौर्णमासम्। उपपौर्णमासि। उपाग्रहायणम्। उपाग्रहायणि।

---

१ उपाक्श्वन् M. N.; उपानत् श्वन् D.
२ °रजसम् D.
३ अनन्तं M. N.; om. D.
४ अनपुं° D.

इतो बहुव्रीहिः ॥ ४८ ॥ इतः परं य अदन्ता वच्यन्ते ते बहुव्रीहौ समासे भवन्तीत्यर्थः ॥

सक्थ्यक्षिणी स्वाङ्गे[१] ॥ ५० ॥ एतौ स्वाङ्गे वर्तमानौ राजादी भवतः। दीर्घं सक्थ्यस्य। दीर्घसक्थः। एवं विशालाक्षः॥ स्वाङ्ग इति किम्। दीर्घसक्थिः। स्थूलाक्षिरिक्षुः। अप्राणिस्थत्वादस्वाङ्गता ॥

दार्वण्यङ्गुलिः ॥ ५१ ॥ दारुणि वर्तमानोऽङ्गुल्यन्तो बहुव्रीहौ राजादिर्भवति। द्वे अङ्गुली यस्य। द्व्यङ्गुलं दारु ॥

द्वित्रिभ्यां मूर्धन् ॥ ५२ ॥ आभ्यां मूर्धन्शब्दो बहुव्रीहौ राजादिर्भवति। द्वौ मूर्धानौ यस्य स द्विमूर्धः। एवं त्रिमूर्धः ॥

उक्तेषु स्त्रीत्वसंभवे[२] नदादित्वादी ॥ ५३ ॥ उक्तेषु सक्थ्यक्षिणी स्वाङ्ग इत्यादिषु य अदन्तास्तेभ्यो नदादित्वाद् ईप्रत्ययो भवतीत्यर्थः। दीर्घसक्थी। विशालाक्षीत्यादि ॥

पूरणीप्रमाण्यौ ॥ ५४ ॥ पूरणप्रत्ययान्ता स्त्री पूरणी। पूरणीप्रमाणीशब्दौ राजादी भवतः। सा चेद्बहुव्रीहिस्तस्यामेव पूरण्यामन्यपदार्थत्वे न वर्तते ॥ तदेतन्मुख्यपूरणीग्रहणात्। कल्याणीपञ्चमा रात्रयः ॥ मुख्यपूरणीति किम्। कल्याणपञ्चमीकः पक्षः। स्त्रीप्रमाणाः कुटुम्बिनः। प्रमाणशब्देनैव सिद्धे कप्रत्ययबाधनार्थो[३]ऽयम्। यथा कल्याणपञ्चमीकः पक्षः ॥

अन्तर्बहिर्भ्यां लोमन् ॥ ५५ ॥ आभ्यां लोमन्शब्दो राजादिर्भवति। अन्तर्लोमः। बहिर्लोमः ॥

---

१ N. om. from स्वाङ्गे to पूरणी in 54.

२ स्त्रियां B. D. M.

३ कप्रत्ययो बाधनार्थो MS.

नक्षत्रान्नेतृ ॥ ५६ ॥ नक्षत्रमश्विन्यादि । नक्षत्रवाचकाच्छब्दात्परो नेतृशब्दो राजादिर्भवति । मृगनेत्रा रात्रिः । पुष्यनेत्रा ॥ नक्षत्रादिति किम् । देवदत्तनेत्रकः ॥

नञ्सुव्युपत्रिभ्यश्चत्वारः[1] ॥ ५७ ॥ एभ्यश्चत्वारशब्दो राजादिर्भवति । अचतुरः । सुचतुरः । विचतुरः । उपचतुरः । त्रिचतुरः ॥ एभ्य इति किम् । पञ्चचत्वारः ॥

संज्ञायां नाभिः ॥ ५८ ॥ बहुव्रीहौ नाभी राजादिर्भवति । संज्ञायां गम्यमानायाम् । पद्मनाभः । वज्रनाभः ॥ संज्ञायामिति किम् । पद्मनाभिः ।

नञ्सुदुर्भ्यः सक्थि वा ॥ ५९ ॥ एभ्यः सक्थि राजादि भवति वा । असक्थः । असक्थिः । सुसक्थः । सुसक्थिः । दुःसक्थः । दुःसक्थिः ॥

॥ इति रत्नेश्वरचक्रवर्तिविरचितराजादिवृत्तिः समाप्ता ॥

राजादिराकृतिगणोऽयम् ॥

डानुबन्धेऽन्त्यस्वरादेर्लोपः ॥ ४२ ॥

डानुबन्धे प्रत्यये परेऽन्त्यस्वरादेरवयवस्य लोपो भवति । चत्वारिंशतः पूरणः । चत्वारिंशः । एवं पञ्चाशः । सरसिजम् । जलजम् । सप्तमीपञ्चम्यन्ते जनेर्डः ॥

---

१ °सुदुर्व्युप° M.; नञ्व्युत्प° D.; °चत्वार् M. N.

## तेर्विंशतेरपि ॥ ४३ ॥

डानुबन्धे प्रत्यये परे विंशतेरपि तेर्लोपो भवति । विंशतेः पूरणः । विंशः ॥

## इवर्णावर्णयोर्लोपः स्वरे प्रत्यये ये च ॥ ४४ ॥

इवर्णावर्णयोर्लोपो भवति । तद्धिते स्वरे(१) ये च प्रत्यये परतः(२) । आत्रेयः । द्रौणेयः । दाक्षिः । प्लाक्षिः(३) । गाङ्गेयः । गार्ग्यः । तुल्यः(४) ॥ पुनर्लोपग्रहणादव्ययानामन्त्यस्वरादेर्लोपो लक्ष्यतः(५) । सायंप्रातर्भवः । सायंप्रातिकः ।(६) पौनःपुनिकः । बाह्यमित्यादयः ॥

## नस्तु क्वचित् ॥ ४५ ॥

नकारस्य लोपो भवति(७) क्वचिल्लक्ष्यानुरोधात्(८) । तद्धिते स्वरे परे(९) । औडुलोमिः(१०) । आग्निशर्मिः(११) । द्वे अहनी(१२) समाहृते । द्व्यहः । त्र्यहः ॥(१३)

---

१ तद्धितस्वरे A.; D. om. ये च; N. om. from तद्धिते to ०अन्त्यस्वरादेर्लोपो.

२ परे F. M.

३ Om. F. M.

४ Om. A.

५ लक्षितः F.; लक्ष्यतः A. B. M.

६ M. adds पुनःपुनर्भवः ।

७ F. adds समासे.

८ ०लक्ष्या० A. B. F. N.

९ तद्धितस्वरे A.; D. F. M. N. om. from तद्धिते.

१० औडुलोमिः (औडु०?) A. B. F.; औडु० D.

११ अग्निशर्मिः A. B.

१२ अह्नी M. N.

१३ N. adds क्वचिद्ग्रहणादुपधालोपः । आह्निकं.

उवर्णस्त्वोत्वमापाद्यः ॥ ४६ ॥

उवर्णस्त्वोत्वमापादनीयः । तद्धिते स्वरे ये च प्रत्यये परतः[1] ॥ औपगवः । बाभ्रव्यः[2] ॥

एयेऽकद्र्वास्तु लुप्यते ॥ ४७ ॥

उवर्णस्तु लुप्यते । एये प्रत्यये[3] परे । न तु कद्रूशब्दस्य । कामण्डलेयः । माद्रबाहेयः[4] ॥ अकद्र्वा इति किम् ॥ काद्रवेया नागाः ॥

कार्यावावावादेशावोकारौकारयोरपि ॥ ४८ ॥

ओकारौकारयोः स्थानेऽवावावादेशौ कार्यौ । तद्धिते स्वरे ये च प्रत्यये परे । औपगवः । गव्यम् । नाव्यम् ॥

वृद्धिरादौ सणे ॥ ४९ ॥

स्वराणां मध्ये[5] आदौ स्वरस्य वृद्धिर्भवति । सणकारानुबन्धे तद्धिते प्रत्यये परे[6] । शैवः । औपगवः । कार्पणम् ॥ कथं वासिष्ठः[7] । आदावित्याकारप्रश्लेषात् ॥ क्वचिदधिकारादुत्तरपदस्यापि लक्ष्यतः[8] । अवयवादृतूनाम्[9] । पूर्ववार्षिकम् । अप-

---

१ परे । D. F. M.; N. om. from च.
२ काद्रव्यः । B.; D. adds भार्गव्यः । N. adds कौशिके पत्ये ब्रव्यः । वधव्यः ॥
३ Om. A. D.
४ माद्रवहियः । D.
५ Om. D. M. N.
६ परतः B. D.; om. M.; D. M. om. प्रत्यये.
७ वाशिष्ठः A. F. N.; वयशस्तु । B.
८ लक्षतः A. B. F.; लक्षितः N.; वृद्धिर्लक्षतः M.
९ Om. M.

र्हैमन्तम्। वर्षैकदेशे हेमन्तैकदेशे वर्षाहेमन्तौ(१) ॥ सुसर्वार्धेभ्यो जनपदस्य च। सुपाञ्चालिकः(२)। सर्वपाञ्चालिकः(२)। अर्धपाञ्चालिकः(२) ॥ क्वचिदुभयपदस्यापि(३)। सौभाग्यम्। सौहार्दम्। सक्तुप्रधानाः(४) सिन्धवः। तत्रभवः साक्तुसैन्धवः(५)। एवमन्येऽप्यनुसर्तव्याः(६) ॥

## न य्वोः पदाद्योर्वृद्धिरागमः ॥ ५० ॥

इह प्रतिषेधो विधिश्च गम्यते। आदिशब्दः समीपवचनः(७)। पदस्याद्योर्यकारवकारयोः समीपे वृद्धिर्न भवति। तयोश्चादौ वृद्धिरागमो भवति। सणकारानुबन्धे(८) तद्धिते(९)। स्थानेऽन्तरतम इति न्यायाद्(१०) यकारस्यैकारो वकारस्यौकारः ॥ व्यसने भवः। वैयसनः(११)। व्युदयस्यापत्यम्। वैयुदयः(१२)। स्वश्वस्यापत्यम्। सौवश्विः। व्याकरणं वेत्त्यधीते वा वैयाकरणः(१३) ॥ य्वोः समीप इति किम्। दाध्यश्विः। माध्वश्विः। तन्निमित्तो वृद्धिरा-

---

१ °हैमंतौ M. N.
२ °पाञ्चालकः D. F.
३ M. adds वृद्धिः; N. वृद्धिर्लक्षिता; F. om. क्वचिद्.
४ शक्तु° B. D. F.; सक्तुः प्र° A.
५ शाक्तु° B. F.; चक्तु° D.
६ एवमन्येऽपि। F.
७ सामीप्य° N.
८ षण° F.
९ A. adds प्रत्यये परे; B. प्रत्यये परतः।
१० Om. D. M. N.; ऽन्तरतम्यात्। F.
११ भवं। वैयसनं। M. N.
१२ व्युदासस्यापत्यम्। वैयुदसः। B.; व्युदयस्यायं। ° M. N.; व्युदस्यायम्। वयुदस्यः D.
१३ व्याकरणमधीते। वै° N.; om. M.

गमो न स्यात्(१) ॥ पुनर्वृद्धिग्रहणं वर्धनाद्वृद्धिरिति(२) ज्ञापनार्थम्(३) ॥ क्वचिदधिकाराद्(४) द्वारादीनां चापदाद्योरपि वृद्धिप्रतिषेधो(५) वृद्धिरागमस्य(६)। द्वारे नियुक्तो(७) दौवारिकः(८) ॥ द्वार(९)। द्वारपाल(१०)। स्वर। व्यल्कस। स्वस्ति। स्वर्(११)। स्वर्गमन। स्फ्यकृत(१२)। स्वादुमृदु(१३)। श्वन्। स्व(१४)। एवमन्ये ऽप्यनुसर्तव्याः ॥

॥इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये तद्धितपादः समाप्तः(१५)॥

---

१ तन्निमित्तौ° N.; °गमो ऽपि न स्यात् D. M. N.
२ वर्द्धना वृ° B. D. and corr. F.
३ व्युत्पत्त्यर्थं N.
४ क्वचिदपीत्यधिकाराद् M. N.
५ A. om. अपि; चापदाद्योरपि° D.; चापदाद्योरपि य्वोर्वृद्धि° M. N.
६ A. F. add स्यात्.
७ द्वारनियोगाद् D.; om. A. F.
८ द्वौवारिकः A. D. and orig. F.; द्वौवारपालिकः B.
९ Om. A. D.
१० द्वारपालकः D.
११ F. om. from व्यल्कस.
१२ स्फ्युद्यत् N.; स्फ़कृतः M.; om. D.
१३ स्वादु। F.
१४ श्व A.; स्वन स्वग्राम N.; श्वनसु। B.
१५ तद्धितः पादः° MSS. except M.; M. N. om. नाम्नि चतुष्टये; D. om. चतुष्टये; °तद्धितप्रकरणं समाप्तं। M.

॥ अथाख्यातम् ॥

## अथ परस्मैपदानि ॥ १ ॥

अथानन्तराणि त्यादीनि स्यामहिपर्यन्तानि परस्मैपदसंज्ञकानि भवन्ति। नव पराण्यात्मन इत्युक्तिबाधया पूर्वाणि नवैव(१) वचनानि सर्वासां विभक्तीनामिति ॥ अर्थस्य विभञ्जनाद्विभक्तय इति। ति तस् अन्ति। सि थस् थ। मि वस् मस्। एवं सर्वत्र। परस्मैपदप्रदेशाः। शेषात्(२) कर्तरि परस्मैपदम् [का० ३. २. ४७] इत्येवमादयः ॥

## नव पराण्यात्मने ॥ २ ॥

अथ पराणि(३) नव नव वचनान्यात्मनेपदसंज्ञकानि(४) भवन्ति। पदानीति गम्यते ॥ ते आते अन्ते। से आथे ध्वे। ए वहे महे। एवं सर्वत्र ॥ आत्मनेपदप्रदेशाः। आत्मनेपदानि भावकर्मणोः [का० ३. २. ४०] इत्येवमादयः ॥

## त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ ३ ॥

परस्मैपदानामात्मनेपदानां च त्रीणि त्रीणि वचनानि प्रथममध्यमोत्तमसंज्ञकानि भवन्ति यथासंख्यम्। ति। तस्। अन्ति।

---

१ नव नव B.
२ शेषाः A.
३ अथानन्तराणि पराणि A.
४ °संज्ञानि A.

इति प्रथमः ॥ सि । थस् । थ । इति मध्यमः ॥ मि । वस् । मस् । इत्युत्तमः ॥ ते । आते । अन्ते । इति प्रथमः ॥ से । आथे । ध्वे । इति मध्यमः ॥ ए । वहे । महे । इत्युत्तमः । एवं सर्वत्र ॥ संज्ञाप्रदेशाः । नाम्नि प्रयुज्यमानेऽपि प्रथमः । युष्मदि मध्यमः । अस्मद्युत्तमः [का० ३. १. ५-७] इत्येवमादयः ॥

## युगपद्वचने परः पुरुषाणाम् ॥ ४ ॥

युगपदेककालार्थः । युगपद्वचन एकक्रियाकालाभिधाने पुरुषाणां मध्ये यः परः स भवति । स च त्वं चाहं च पचामः । स च त्वं चाहं चापाक्ष्म । स च त्वं चाहं च पक्ष्यामः ॥ वचनमतन्त्रम् । स च त्वं च पचथः । त्वं चाहं च पचावः ॥ युगपद्वचन इति किम् । स पचति । त्वं पक्ष्यसि । अहमपाक्षमिति भिन्नकालोक्तौ वयमपाक्ष्मेति मा भूत्(१) ॥ वचनग्रहणं युगपद्विषये मा भूत् । स पचति । त्वं पचसि । अहं पचामीत्येवं प्राप्नोति ॥ अप्रवृत्तौ पर्याये वा प्राप्ते परिभाषेयम् ॥

## नाम्नि प्रयुज्यमानेऽपि प्रथमः ॥ ५ ॥

नाम्नि प्रयुज्यमानेऽप्रयुज्यमानेऽपि प्रथमः पुरुषो भवति । स पचति । तौ पचतः । ते पचन्ति । स पचते । तौ पचेते । ते पचन्ते । एवं पच्यते घटः । पच्येते घटौ । पच्यन्ते घटाः ॥ अप्रयुज्यमानेऽपि । पचति । पचतः । पचन्ति । एवं सर्वत्र ॥ प्रयुज्यमानग्रहणं

---

१ B. om. from स च त्वं चाहं च पक्ष्यामः ।

किम् । धातुना युक्ते यथा स्यात् । तेन देवदत्तेन हन्यसे त्वम् । मध्यम एव युष्मद्योगात् ॥

युष्मदि मध्यमः ॥ ६ ॥

युष्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽपि मध्यमः पुरुषो भवति। त्वं पचसि। युवां पचथः। यूयं पचथ ॥ अप्रयुज्यमानेऽपि। पचसि। पचथः। पचथ। एवं सर्वत्र ॥ प्रयुज्यमानग्रहणं किम्। त्वया पच्यत ओदनः ॥

अस्मद्युत्तमः ॥ ७ ॥

अस्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽप्युत्तमः पुरुषो भवति। अहं पचामि। आवां पचावः। वयं पचामः ॥ अप्रयुज्यमानेऽपि। पचामि। पचावः। पचामः। एवं[१] सर्वत्र[१] ॥

अत्वं त्वं संपद्यते। अनहमहं संपद्यते। त्वद्भवति। मद्भवतीति भवितव्यमेव। युष्मदस्मदोर्गौणत्वात्। त्वन्मदौ तु शब्दमात्राश्रयत्वात्[२] ॥ एहि मन्ये रथेन यास्यसि ॥ यातस्ते पितेति। स्वविषय एव[३] मध्यमोत्तमौ ॥

अदाब्दाधौ दा ॥ ८ ॥

दाप्दैपौ वर्जयित्वा दाधावित्येतौ[४] दासंज्ञकौ[५] भवतः।

---

१ Om. B.
२ शब्दमाश्रयत्वात् B.
३ Om. A.
४ दा धा इत्येतौ F.
५ °संज्ञौ B.

दीयते। धीयते। ॥ अदाविति किम्। दायन्ते व्रीहयः। निदायन्ते भाजनानि। पकारोऽयं गणे प्रतिषेधार्थ एव निर्दिश्यते ॥

## क्रियाभावो धातुः ॥ ९ ॥

यः शब्दः क्रियां भावयति प्रतिपादयति स धातुसंज्ञो भवति। भवति। अस्ति। जुहोति। दीव्यति। सुनोति। तुदति। रुणद्धि। तनोति। क्रीणाति। चोरयति[1] ॥ क्रियत इति क्रिया साध्यमुच्यते। सा च पूर्वापरीभूतावयवैव ॥ कथं तर्हि। अस्ति। नश्यति। श्वेतते प्रासादः। संयुज्यते। समवैति। सत्ता नित्यता। अभावो नाशः। श्वेतसंयोगावपि गुणौ। समवायोऽप्यर्थान्तरम्। सत्यमिह हि साधनायत्तोदयं[2] सर्वम् अतस्तदधीनतया सिद्धमपि क्रियात्वेनावभासते[3]। क्रियाकारकव्यवहृतेर्बुद्ध्यवस्थानिबन्धनात्। तथा गतिवदनेकदेशे विध्यवयवे[4]ऽपि। अङ्कुरो जायत इति जन्म चाभूत्। प्रादुर्भाव एवेति। अथवा जायते विशेषेणोपलभ्यते। अतोऽङ्कुरस्य कर्तृत्वम्। तथा चोक्तम्।

यावत् सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥

धातुप्रदेशाः। धातोश्च हेतौ [का० ३. २. १०] इत्येवमादयः ॥

## काले ॥ १० ॥

काल इति सप्तम्यन्तमनुवृत्तम्। काल इत्यधिकृतं वेदित-

---

१ B. adds चिन्तयति।
२ साधनात्तो० A.
३ ०अवभाषते MSS.
४ विदि अवयवे F.

व्यम् । तेन साधने वर्तमानेऽतीते भविष्यति च न स्यात् । ग्रामं गतो गमिष्यति चायं देवदत्तः । रामो वनमगच्छत् । बलिरिन्द्रो भविष्यति ॥ वर्तमानादिभिः किम् । धातोर्विशेषणं द्रव्यस्य वेति संदेहेऽयमधिकारः । नित्यो व्यापी संप्रतिभूतभविष्यत्क्रियायोगादाकाशकल्प एको द्रव्यस्थो भिद्यते कालः ॥

**संप्रति वर्तमाना ॥ ११ ॥**

संप्रतिकाले वर्तमाना विभक्तिर्भवति । पचति । यजते ॥ स्वसंज्ञयैव कालो विशिष्यते ॥ संप्रतीति किम् । तस्थुः । स्थास्यन्ति गिरयः ॥

**स्मेनातीते ॥ १२ ॥**

स्मशब्देन[१] योगेऽतीते काले वर्तमाना विभक्तिर्भवति । दहति स्म त्रिपुरं हरः । इति स्म जनः कथयति ॥ अतीतविषयाणां बाधकोऽयम् ॥

**परोक्षा ॥ १३ ॥**

अतीते काले परोक्षा विभक्तिर्भवति । जघान कंसं किल वासुदेवः । कटं चक्रे देवदत्तः ॥

**भूतकरणवत्यश्च ॥ १४ ॥**

भूतकालः करणं तद्विद्यते यासामिति । पारिशेष्याद् ह्यस्-

१ स्मेन A.; स्मेन शब्देन B.

न्यद्यतनीक्रियातिपत्तय एव रूढाः। एता भूतकरणवत्यस्तिस्रो विभक्तयोऽतीते काले भवन्ति। अकरोत्। अकार्षीत्। अकरिष्यत्॥

**भविष्यति भविष्यन्त्याशीःश्वस्तन्यः॥ १५॥**

भविष्यति काले भविष्यन्त्याशीःश्वस्तन्यस्तिस्रो विभक्तयो भवन्ति। कटं करिष्यति। स्रक्कं वध्यात्। ओदनं भोक्ता॥

**तासां स्वसंज्ञाभिः कालविशेषः॥ १६॥**

तासां वर्तमानादीनां स्वसंज्ञाभिः कालस्य विशेषो ज्ञेयः। तेन वर्तमाने काले वर्तमाना। वर्तत इति वर्तमानः। प्रारब्धोऽपरिसमाप्तिः॥ मांसं न खादति। इह कुमाराः क्रीडन्ति। तिष्ठन्ति पर्वताः। कदागतोऽसि। एष आगच्छामि। कदागमिष्यसि। एष गच्छामि॥

परोक्षेऽतीते काले परोक्षेति। अक्षाणां परं परोक्षम्। इन्द्रियाणामविषय इत्यर्थः॥ कथं सुप्तोऽहं किं विललाप। मत्तोऽहं किं विचचार। चित्तस्य विक्षेपात्॥ नाहं कलिङ्गं जगाम। इति गमनदोषभयात्प्रत्यक्षमप्यपह्नुते॥ परोक्षे लोकविज्ञाते प्रयोक्तुर्दर्शनयोग्यत्वात्परोक्षस्याविवक्षायां ह्यस्तन्यपि। अयजत्। इयाज। सतोऽपि चाविवक्षा। यथानुदरा कन्येति॥

ह्यस्तनेऽतीते काले ह्यस्तनी। ह्योभवः कालो ह्यस्तनः। अद्य ह्यो वाभुञ्ज्महीति व्यामिश्रे संनिधानादद्यतनी॥

अद्यतनेऽतीते मात्रे[1] ऽद्यतनी। अद्यभावोऽद्यतनः। आ न्याय्यादुत्थानादा न्याय्याच्च संवेशनादहः। उभयतोऽर्धरात्रं[2] वा लोकतः सिद्धम्॥ कथम् अमुत्रावात्सं सकलां रात्रिं जागरितः। रात्रेरप्रभातत्वादद्यतनमिव[3] कालं मन्यते। यो मुहूर्तमपि सुप्तः सोऽनद्यतनं[4] जानन् अमुत्रावसमित्याह॥ अगमाम घोषान्। अपाम पय इति ह्यस्तनस्याविवक्षैव। ह्योऽगमाम घोषानिति पदार्थह्यस्तने ह्यस्तनी न वाक्यार्थ इति मतम्॥

क्रियातिपत्तावतीते काले क्रियातिपत्तिरिति। एधांश्चेदलप्स्यत। ओदनमपक्ष्यत्। भविष्यति क्रियातिपतने भविष्यन्त्येव॥

भविष्यति[5] काले[5] भविष्यन्ती[5]। भविष्यत्कालस्य भविष्यद्विशेषणात्। अद्य श्वो वा गमिष्यतीति श्वस्तनीमपि बाधते॥

आशीर्युक्ते भविष्यति काल आशीः। अनागतस्येष्टार्थस्य लाभेनाविष्करणमाशीः। अर्थाद्भविष्यद्विषयैव। यदस्या भविष्यद्विधानं[6] तत् सुखप्रतिपत्त्यर्थम्॥

श्वोभवः कालः श्वस्तनः। स चार्थाद्भविष्यन्। यदस्या भविष्यद्विधानं[6] तत्सामान्यप्रतिपत्त्यर्थम्[7]। श्वो गमिष्यति। मासेन गमिष्यतीति पदसंस्कारात्॥ अन्वर्थसंज्ञायाः[8] प्रायोवृत्तित्वात् शङ्करः[9] स्यादिति। परिभाषेयम्॥

---

१ काले B.
२ उभयतोरर्धरात्रं F.
३ रात्रेरभावत्वाद्० B.; ०प्रभातत्वाद्० A.
४ ऽद्यतनं B.
५ Om. B.
६ यदस्याद्भवि० B.
७ सामान्यभविष्यत्प्रतिपत्त्यर्थं B.; सामान्यसुखप्रति० F.
८ ०संज्ञया A.
९ सङ्करः F.

**प्रयोगतश्च ॥ १७ ॥**

प्रयुज्यत इति प्रयोगः । प्रयोगादवधेः कालस्य विशेषो ज्ञेयः । अर्थात्पदान्तरसंबन्धे । यावद्भुङ्क्ते ततो व्रजति । भविष्यन्ता गम्यते । भविष्यन्तीविवक्षायां तु यावच्छब्दस्याप्रयोग एव ॥ अधीष्व माणवक पुरा विद्योतते विद्युत् । क्षिप्रं कुरु कटं पुरा गच्छसि ग्रामम् । वर्तमानसामीप्यस्य(१) तद्ग्रहणेन ग्रहणम्(२) । पुराशब्दाद्भविष्यदवगमे सति तदा तस्य वर्तमानता वा(३) ॥ कदाकर्हियोगे वर्तमानाभविष्यन्तीश्वस्तन्यः । कदा भुङ्क्ते । कदा भोक्ष्यते । कदा भोक्ता । कर्हि भुङ्क्ते । कर्हि भोक्ष्यते । कर्हि भोक्ता ॥ (४)भविष्यति परोक्षादयोऽपि । कदा बुभुजे । कदा भुक्तः । कदा भुक्तवान् ॥ तथा किमो विभक्तिडतरडतमान्तस्य प्रयोगे लिप्सायां गम्यमानायाम्(५) । भविष्यति(६) भविष्यति सामान्ये । को भवतां भिक्षां ददाति दास्यति दाता वा । कतरो भवतां(७) कतमो भवतां भिक्षां ददाति दास्यति दाता वा ॥ भूतविहिता अपि दृश्यन्ते । को भवतां(८) पाटलिपुत्रमगच्छत् । अगमदिति वा ॥ तथा लिप्स्यमानात्(९) सिद्धावपि । यो भवतां भिक्षां ददाति दास्यति दाता वा स स्वर्गलोकं याति यास्यति याता वा । यो भवतां भिक्षामदात् स स्वर्गलोकमगमदिति(१०) । एवमन्येऽप्यनुसर्तव्याः ॥

---

१ वर्तमाने सा° A.
२ ग्रहणात् F.
३ Om. A. B.
४ एवं भ° F.
५ Om. B.
६ Om. F.
७ भवतः A.
८ B. adds भिक्षां ददाति.
९ लिप्स्यमाना B.
१० °इति वा B.

## पञ्चम्यनुमतौ ॥ १८ ॥

कर्तुमिच्छतोऽनुज्ञानुमतिः । सा च वर्तमानभविष्यद्विषयैव[1] । अनुमतौ वर्तमानाद्धातोः पञ्चमी भवति । एवं कुरु । कटं कुरु । तृष्णां छिन्धि । भज क्षमाम् । कुरु दयाम् ॥

## समर्थनाशिषोश्च ॥ १९ ॥

परैरशक्यस्य वस्तुनोऽध्यवसायः समर्थना । इष्टार्थस्याशंसनमाशीः । समर्थनाशिषोश्च वर्तमानाद्धातोः पञ्चमी भवति । पर्वतमप्युत्पाटयानि ॥ समुद्रमपि शोषयाणि[2] । कश्चिदाह । समुद्रः शोषयितुमशक्यः । स आह । समुद्रमपि शोषयाणीति समर्थयति मतमस्य ॥ आशिषि च । जीवतु भवान् । नन्दतु भवान् । अपि शिरसा पर्वतं भिन्द्यात् । अपि सिञ्चेन्मूलसहस्रमिति विधौ सप्तमी । अपिशब्दोऽत्र संभावने[3] प्रयोगतश्चेति सिद्धम् ॥ नन्विष्टाशंसनमपि प्रार्थनमेव । सत्यम् । आशीर्विभक्त्या बाधिता पञ्चमी यथा स्यादिति वचनम् ॥

## विध्यादिषु सप्तमी च ॥ २० ॥

विध्यादिषु वर्तमानाद्धातोः सप्तमी भवति पञ्चमी च[4] । विधिरज्ञातज्ञापनमेव । कटं कुर्यात् । कटं करोतु भवान् ॥ यत्र प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणम्[5] । इह भुञ्जीत । इह भुङ्क्तां

---

१ वर्तमानाभ° A.
२ शोषयानीति B.
३ F. adds वर्तते.
४ च भवति F.
५ प्रत्ययवाय° A.

भवान् ॥ यत्र प्रत्याख्याने कामचारस्तदामन्त्रणम् । इहासीत । इहास्तां भवान् ॥ सत्कारपूर्वको व्यापारोऽध्येषणम् । माणवकमध्यापयेद् अध्यापयतु[१] भवान् ॥ निरूपणा संप्रश्नः । किं नु खलु भो व्याकरणमधीयीय[२] । उत च्छन्दोऽधीयीय[२] । किं नु खलु भो व्याकरणमध्ययै[३] । उत च्छन्दोऽध्ययै[३] ॥ याञ्चा प्रार्थना । लभेय भिक्षाम् । देहि मे भिक्षाम् ॥ प्रैष्यप्राप्तकालयोरपि सप्तमी पञ्चमी[४] स्यादेवेति मतम् । प्रेषितस्त्वं ग्रामं गच्छेः । ग्रामं गच्छ । प्राप्तस्ते कालः कटकरणे । कटं कुर्यात्　कटं करोतु भवान् ॥ कथं विदध्यात् । निमन्त्रयेत् । आमन्त्रयेत् । अधीच्छेत् । संपृच्छेत् । प्रार्थयेत् । कृत्यरूपेषु विध्यादिषु तयोर्विधानात् । यदा तु प्रकृत्यर्थस्य न कर्तव्यता तदा विदधातीत्यादयः सिद्धाः ॥

## क्रियासमभिहारे[५] सर्वकालेषु मध्यमैकवचनं पञ्चम्याः ॥ २१ ॥

क्रियायाः समभिहारः[५] पौनःपुन्यं भृशार्थो वा । क्रियासमभिहारे[५] वर्तमानाद्धातोः सर्वक्रियाकालेषु मध्यमैकवचनं भवति पञ्चम्याः । लुनीहि लुनीहि । इत्येवायं लुनाति । लुनीतः । लुनन्ति । लुनासि । लुनीथः । लुनीथ । लुनामि । लुनीवः । लुनीमः । अलुनात् । लविष्यति ॥ अधीष्वाधीष्व । इत्येवायम-

---

१ Om. A.
२ °अधीय । A.
३ °अध्यै । A.
४ सप्तम्यपि B.
५ °समविहारे etc. A.

धीते । अध्यैत(१) । अध्येष्यते ॥ सर्वक्रियाकालेष्विति वचनात्संख्याविशेषो(२) न गम्यत इत्यनुप्रयोगः । प्रत्यासत्तेस्तेनैव धातुना कारकेणेति सुखार्थमेवेदम् । अन्यथा । एवमसौ त्वरावान् यदन्यानपि प्रेरयन् क्रियां करोतीति विवक्षया(३) सिध्यति ॥ तथा । लुनीत लुनीत । इत्येवायं यूयं लुनीथ(४) । अधीध्वमधीध्वमित्येवायं यूयमधीध्वे ॥ तथा भ्राष्ट्रमट । मठमट । खदूरमट । स्थान्यपिधानमट । इत्येवायमटतीत्यादयो विवक्षाः(५) ॥

## मायोगेऽद्यतनी ॥ २२ ॥

माशब्देन योगे(६) धातोरद्यतनी भवति । मा कार्षीत् । मा भवान्याक्षीत् ॥ कथं मा भवतु । तस्य पापं मा करिष्यतीति निरनुबन्धग्रहणात् ॥ ङानुबन्धमायोगे(७) न स्यादिति केचित् ॥ वर्तमानभविष्यद्विषयाणां बाधकोऽयम् ॥

## मास्मयोगे ह्यस्तनी च ॥ २३ ॥

मास्मशब्देन योगे(८) धातोर्ह्यस्तनी भवति । चकारादद्यतनी च । मा स्म करोत् । मा स्म कार्षीत् ॥ व्यस्तेऽपीच्छन्ति केचित् । स्म करोन्मा ॥ पृथग्योगात् केवलमायोगे न स्यात् ॥

---

१ अध्यैत । A. F.
२ संख्यादिर्विशेषो B.
३ विवक्षा B.
४ लुनीथ लुनीथ A.
५ विवक्षा A. B.; धानमट अटतीत्यादयो विवक्षाः ॥ F.
६ माशब्दयोगे A.
७ °ग्रहणे° A.; °नानुबन्ध° B.
८ F. adds वर्तमानाद्.

**वर्तमाना ॥ २४ ॥**

ति तस् अन्ति । सि थस् थ । मि वस् मस् ॥ ते आते अन्ते । से आथे ध्वे । ए वहे महे ॥ इमानि वचनानि वर्तमानासंज्ञकानि भवन्ति ॥ वर्तमानाप्रदेशाः । संप्रति वर्तमाना [का° ३. १. ११] इत्येवमादयः ॥

**सप्तमी ॥ २५ ॥**

यात् याताम् युस् । यास् यातम् यात । याम् याव याम ॥ ईत ईयाताम् ईरन् । ईथास् ईयाथाम् ईध्वम् । ईय ईवहि ईमहि ॥ इमानि वचनानि सप्तमीसंज्ञकानि भवन्ति ॥ सप्तमीप्रदेशाः । विध्यादिषु सप्तमी च [का° ३. १. २०] इत्येवमादयः ॥

**पञ्चमी ॥ २६ ॥**

तु ताम् अन्तु । हि तम् त । आनि आव आम ॥ ताम् आताम् अन्ताम् । स्व आथाम् ध्वम् । ऐ आवहै आमहै ॥ इमानि वचनानि पञ्चमीसंज्ञकानि भवन्ति ॥ पञ्चमीप्रदेशाः । पञ्चम्यनुमतौ [का° ३. १. १८] इत्येवमादयः ॥

**ह्यस्तनी ॥ २७ ॥**

दि ताम् अन् । सि तम् त । अम् व म ॥ त आताम् अन्त । थास् आथाम् ध्वम् । इ वहि महि ॥ इमानि वचनानि ह्यस्तनीसंज्ञकानि भवन्ति ॥ ह्यस्तनीप्रदेशाः । मास्मयोगे ह्यस्तनी [का° ३. १. २३] इत्येवमादयः ॥

एवमेवाद्यतनी ॥ २८ ॥

एवमेवाद्यतनी भवति ॥ अद्यतनीप्रदेशाः । मायोगेऽद्यतनी [का° ३. १. २२] इत्येवमादयः ॥

परोक्षा ॥ २९ ॥

अट् अतुस् उस् । थल्[१] अथुस् अ । अट् व म ॥ ए आते इरे । से आथे ध्वे । ए वहे महे ॥ इमानि वचनानि परोक्षासंज्ञकानि भवन्ति ॥ परोक्षाप्रदेशाः । परोक्षा [का° ३. १. १३] इत्येवमादयः ॥

श्वस्तनी ॥ ३० ॥

ता तारौ तारस् । तासि तास्थस् तास्थ । तास्मि तास्वस् तास्मस् ॥ ता तारौ तारस् । तासे तासाथे ताध्वे । ताहे तास्वहे तास्महे ॥ इमानि वचनानि श्वस्तनीसंज्ञकानि भवन्ति ॥ श्वस्तनीप्रदेशाः । भविष्यति भविष्यन्त्याशीःश्वस्तन्यः [का° ३. १. १५] इत्येवमादयः ॥

आशीः ॥ ३१ ॥

यात् यास्ताम्[२] यासुस् । यास् यास्तम् यास्त । यासम् यास्व यास्म ॥ सीष्ट सीयास्ताम् सीरन् । सीष्ठास् सीयास्थाम्[३] सीध्वम् । सीय सीवहि सीमहि ॥ इमानि वचनान्याशीःसंज्ञकानि

१ थस् A.
२ यातान् । A.
३ सीयास्तां MSS.

भवन्ति ॥ आशीःप्रदेशाः । आशिषि च परस्मै [का° ३. ५. २२] इत्येवमादयः ॥

## स्यसंहितानि त्यादीनि भविष्यन्ती ॥ ३२ ॥

धातोः पराणि स्येन संहितानि[१] त्यादीनि भविष्यन्तीसंज्ञकानि भवन्ति[२]। स्यति स्यतस् स्यन्ति। स्यसि स्यथस् स्यथ। स्यामि स्यावस् स्यामस् ॥ स्यते स्येते स्यन्ते। स्यसे स्येथे स्यध्वे। स्ये स्यावहे स्यामहे[३] ॥ भविष्यन्तीप्रदेशाः । भविष्यति भविष्यन्त्याशीःश्वस्तन्यः [का° ३. १. १५] इत्येवमादयः ॥

## स्यादीनि[४] क्रियातिपत्तिः ॥ ३३ ॥

धातोः पराणि स्येन संहितानि[५] स्यादीनि[४] क्रियातिपत्तिसंज्ञकानि भवन्ति। स्यत् स्यताम् स्यन्। स्यस् स्यतम् स्यत। स्यम् स्याव स्याम ॥ स्यत स्येताम् स्यन्त। स्यथास् स्येथाम् स्यध्वम्। स्ये स्यावहि स्यामहि ॥ क्रियातिपत्तिप्रदेशाः । अड् धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु [का° ३. ८. १६] इत्येवमादयः ॥ एताः पूर्वाचार्यप्रसिद्धाः संज्ञा[६] अन्वर्था इह ज्ञायन्ते[७] ॥

## षडाद्याः सार्वधातुकम् ॥ ३४ ॥

षण्णां विभक्तीनामाद्या वर्तमानासप्तमीपञ्चमीह्यस्तन्यः[८] सा-

---

१ स्यसंहितानि A.
२ B. om. धातोः°
३ B. adds इमानि वचनानि भविष्यन्तीसञ्ज्ञकानि भवन्ति ।
४ त्यादीनि A.
५ स्यसंहितानि A. F.
६ Om. B.
७ ज्ञायन्ते B.
८ B. adds चतस्रो विभक्तयः

र्वधातुकसंज्ञा(१) भवन्ति ॥ सार्वधातुकप्रदेशाः । जुहोत्यादीनां सार्वधातुके [का० ३. ३. ८] इत्येवमादयः ॥

॥ इति दौर्गसिंह्यां वृत्तावाख्याते प्रथमः पादः समाप्तः ॥

---

**प्रत्ययः परः ॥ १ ॥**

प्रतीयते येनार्थः स प्रत्यय इति रूढिः । यथाप्रत्ययात्प्रथमं क्रियत इति प्रकृतिः । प्रकृतेः परः प्रत्ययो वेदितव्यः । वृक्षः । अश्वकः । यावकः । खट्वा । औपगवः । जुगुप्सते । गोपायति । कर्ता । कर्तव्यः ॥ अनियमे प्राप्ते परिभाषेयं विध्यङ्गशेषभूता वा ॥

**गुप्तिज्किद्भ्यः सन् ॥ २ ॥**

गुप्तिज्किद्भ्यः(२) सन् परो भवति स्वार्थे । जुगुप्सते माम् । तितिक्षते तपस्तापसः । विचिकित्सति मे मनः । चिकित्सत्यातुरं वैद्यः । रिपुं चिकित्सति । चिकित्स्यानि(३) क्षेत्रे तृणानि ॥

गुपो वधेश्च निन्दायां क्षमायां च तथा तिजः ।
संशये च प्रतीकारे कितः सन्नभिधीयते ॥

अकारोच्चारणं किम् । स्वरादेर्द्वितीयस्य [का० ३. ३. २] इति द्विर्वचनार्थम् । तेनार्थान्प्रतीषिषति ॥

---

१ °संज्ञकानि F.
२ एभ्यः B.
३ चिकित्सानि B.

## मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ३ ॥

मानादिभ्यः सन् परो भवति स्वार्थे। दीर्घश्चैषामभ्यासस्येतो भवति। मीमांसते। बीभत्सते। दीदांसते। शीशांसते॥ अभ्यासविकारेष्वपवादो नोत्सर्गं बाधते॥ कथम् अवदानम्। निशानमिति द्यतेः श्यतेश्च युटा[1] सिद्धम्॥ चौरादिकेन मानः। मानयति॥ दान् शान् उभयम्। कित्यर्स्मै॥

## धातोर्वा तुमन्तादिच्छतिनैककर्तृकात् ॥ ४ ॥

वा तुमन्तो यस्येति विग्रहः। वा तुमन्ताद्धातोरिच्छतिनैककर्तृकात् सन् परो भवति। कर्तुमिच्छति। चिकीर्षति। भोक्तुमिच्छति। बुभुक्षते॥ सना द्योतितत्वादिषेरप्रयोगः। केचित् सनि चानिटि [का० ३. ५. ७] इति ज्ञापकात् तुमविषयादित्याहुः॥ धातोरिति किम्। प्राचिकीर्षत्॥ तुमन्तादिति किम्। भोजनमिच्छति॥ इच्छायामिति सिद्धे एककर्तृकादिति स्पष्टार्थम्॥ इच्छासनन्तात्सन्न भवति स्वात्मनि क्रियाविरोधात्॥ कथं नदीकूलं पिपतिषति। श्वा मुमूर्षति। यथा वाक्यं तथेदं विवक्षयेति[2] मतम्॥

## नाम्न आत्मेच्छायां यिन् ॥ ५ ॥

नाम्न आत्मेच्छायामर्थे यिन् परो भवति। पुत्रमिच्छति। पुत्रीयति। एवं घटीयति॥ आत्मशब्दोऽत्राध्यात्मवचन एव

---

१ ञुटा A.; द्यति स्यति युटा B.   २ विवचेति॥ A. B.

मन्दधियां सुखार्थः । भ्रातुः पुत्रमिच्छति । महान्तं पुत्रमिच्छति । आत्मनः पुत्रमिच्छतीति सापेक्षत्वात् । भ्रातृपुत्रीयतीति युक्तार्थत्वात् ॥ इच्छया[1] नाम्नः संबन्धाद् दात्रेणेच्छतीत्यकर्मणो न स्यात् सापेक्षत्वात् ॥ व्यवस्थितवास्मरणाद् मान्ताव्ययाभ्यां न स्यात् । किमिच्छति । स्वरिच्छति ॥

**काम्य च ॥ ६ ॥**

नाम्न आत्मेच्छायामर्थे काम्यः परो भवति । चकाराद्यिंश्च । एतच्चोत्तरार्थमेवानन्तरः काम्यो मा भूदिति[2] । पुत्रमिच्छति । पुत्रकाम्यति । इदंकाम्यति[3] । स्वःकाम्यति[3] ॥

**उपमानादाचारे ॥ ७ ॥**

[4]उपमानान्नाम्न आचारेऽभिधेये यिन् परो भवति । पुत्रमिवाचरति । पुत्रीयति माणवकम् । माणवकादिशेषे द्वितीया नोक्तार्थेति ॥ आधारादपि स्याद् निरपेक्षत्वात् । कुट्यामिवाचरति । कुटीयति प्रासादे ॥

**कर्तुरायिः सलोपश्च ॥ ८ ॥**

कर्तुरुपमानान्नाम्न आचारेऽभिधेय आयिः परो भवति सलोपश्च यथासंभवम्[5] । श्येन इवाचरति । श्येनायते । एवं

---

१ इच्छाया F.
२ मा भूत् । A.
३ Om. A.
४ उपमितिरुपमाणं । उप॰ F.; कर्तुरुप॰ B.
५ Om. F.

सारसायते[1]। ओजायते। अप्सरायते। पयायते। पयस्यते। वाशब्दस्येष्टार्थत्वात्॥ आयेश्च लोपः। गर्दभ इवाचरति। गर्दभति। अश्वतीति मतम्॥ कथं गल्भते। क्लीवते[2]। होडते। एत आत्मनेपदिनः। प्रत्ययान्तत्वादामिष्यत एव॥

ओजसोऽप्सरसो नित्यं पयसो तु विभाषया।
आयिलोपश्च विज्ञेयो न चास्यो गर्दभत्यपि[3]॥

तथा च्व्यर्थे भृशादेस्तसोर्लोपश्चेति। अभृशो भृशो भवति। भृशायते। एवम् उन्मनायते। दुर्मनायते॥ वेहत्। वेहायते॥ शश्वत्। शश्वायते॥ वावचनाच्च्विरपि[4]। भृशीभवति[5]। अभृशो यो भृशो भवति स भृश इवाचरति। सादृश्यादभेदो वस्तुन इति मतम्। तल्लोपेष्टिरिति॥ तथा[6] डाज्लोहितादिभ्यश् च्व्यर्थे। पटपटायति। पटपटायते। लोहितायति। लोहितायते। यजादिषु पाठ इष्यते॥ कष्टाय कर्मणे क्रामति। कष्टायते। एवं पापायते। कक्षायते। सत्रायते[7]। गहनायते॥ पापवृत्तिभ्योऽन्यत्र न भवति। कष्टाय तपसे क्रामति॥ रोमन्थं वर्तयति। रोमन्थायते गौः। हनुचलन[8] एवेह न स्यात्। कीटो रोमन्थं वर्तयति॥ बाष्पमुद्वमति[9]। बाष्पायते[10]। एवमुष्मायते[11]।

---

१ परायते। B.
२ क्लीभते A.
३ गर्दभित्यपि B.
४ °चीरपि A.
५ Om. A.
६ तथा च B.
७ शत्रायते B.; कृच्छ्रायते F.
८ हनू° A.
९ वास्पमुद्गमयति A.; वास्पमुद्गमयति B.
१० षास्पायते A. B. F.
११ ऊष्मायते A. F.

फेनायते ॥ सुखादीनि वेदयते । सुखं[१] वेदयते[१] । सुखायते । एवं[१] दुःखायते ॥ शब्दादीनि करोति । शब्दं[१] करोति[१] । शब्दायते । एवं वैरायते । कलहायते ॥ नमस्तपोवरिवस्सु यिन् । नमस्करोति । नमस्यति देवान् । एवं तपस्यति शत्रून् । वरिवस्यति गुरून् ॥ चित्रङ् आश्चर्ये । आश्चर्यं चित्रं करोति । चित्रीयते ॥ कण्ड्वादिभ्यो यन्[२] । कण्डूञ्[३] । कण्डूं[४] करोति । कण्डूयति[५] । कण्डूयते ॥ महीङ् । महीयते । इत्यादयोऽप्यनुसर्तव्याः । एतत्सर्वं वाशब्देन[६] बहुलार्थेन वा सिद्धम् ॥

## इन् कारितं धात्वर्थे ॥ ९ ॥

धात्वर्थे[७] क्रियानाम्न इन् परो भवति धात्वर्थे स च कारितसंज्ञकः । हलिं कलिं गृह्णाति । हलयति । कलयति । एवं कृतयति । वर्णयति । त्वचयति ॥ तूस्तानि[८] विहन्ति । वितूस्तयति[९] ॥ वस्त्रं समाच्छादयति । संवस्त्रयति ॥ वर्मणा संनह्यति । संवर्मयति ॥ चूर्णैरवध्वंसते । अवचूर्णयति[१०] ॥

तत्करोति । तदाचष्टे ॥ मुण्डं करोति । मुण्डयति । एवं मिश्रयति । श्लक्ष्णयति[११] । लवणयति । सूत्रयति[१२] । पयो व्रतय-

---

१ Om. B.
२ यण् F.
३ कण्डुञ् B.; om. F.
४ कण्डुं B.
५ Om. B.
६ Om. A.
७ धात्वर्थः F.
८ तुस्तानि B.
९ वितुस्तयति B.
१० F. adds तूलैरवकुष्णाति । अवतूलयति ।
११ श्लचयति A.
१२ Om. A.

ति। पयो भुङ्क्त इति गम्यते। वृषलान्नं व्रतयति। भुङ्क्त इत्यर्थः॥ सत्यमाचष्टे। सत्यापयति। एवम् अर्थापयति। वेदापयति॥ प्रियमाचष्टे। प्रापयति। आबागमश्च॥ तेनातिक्रामति। हस्तिनातिक्रामति। अतिहस्तयति॥ कर्तृकरणार्थे। वीणयोपगायति। उपवीणयति(१)। तूलैरवकुष्णाति(२)। अवतूलयति(२)। श्लोकैरुपस्तौति। उपश्लोकयति। सेनयाभियाति। अभिषेणयति॥ कदाचिद्दर्शने। रूपं पश्यति। निरूपयति। बहुलमेतन्निदर्शनम्॥ तथा। इनङ्(३) अङ्गनिरसनेऽपि। हस्तौ निरस्यति। हस्तयते॥ पादौ(४) निरस्यति(४)। पादयते॥ एवं पुच्छमुत्क्षिपति। उत्पुच्छयते गौः॥ पुच्छं परिक्षिपति। परिपुच्छयते॥ एवं भाण्डानि समाचिनोति। संभाण्डयते वणिक्। चीवरं समार्जयति परिदधाति वा। संचीवरयते भिक्षुः॥ दिङ्मात्रमिदं गणकारवचनादप्यूह्यम्॥

## धातोश्च हेतौ॥ १०॥

हेतुशब्देन हेतुकर्तृव्यापारोऽर्थाद्गम्यते। धात्वर्थं वर्तयन्त्यन्ये। हेतुकर्तृव्यापारे वर्तमानाद्धातोरिन् परो भवति(५) स च कारितसंज्ञकः। कुर्वन्तं प्रयुङ्क्ते। कारयति॥ पचन्तं प्रयुङ्क्ते। पाचयति॥ तथा भिक्षां वासयति। कारीषोऽध्यापयति॥

---

१ उपवीणायति B.
२ Om. F., see note 10, page 170.
३ इनिङ F.; इनिञ A.
४ एवं B.
५ A. adds धात्वर्थे.
६ कारीषो B.

तथा कथकः कंसं[१] घातयति। सीतां हारयति। राजानमागमति[२]। तथा च किं[३] गतेन हतः कंस[४] इति लोकविवक्षा॥ तथा रात्रिं विवासयति। विपूर्वो वसिरतिक्रमे[५]॥ उज्जयन्याः प्रस्थितो माहिष्मत्यां सूर्यमुद्गमयति। तथा पुष्येण चन्द्रं योजयति॥

## चुरादेश्च ॥ ११ ॥

चुर् इत्येवमादिभ्यस्त्विन् परो भवति। स्वार्थे। स च कारितसंज्ञकः। चोरयति। चिन्तयति॥ कारितप्रदेशाः। कारितस्यानामिड्विकरणे [का० ३. ६. ४४] इत्येवमादयः॥

## इनि लिङ्गस्यानेकाक्षरस्यान्त्यस्वरादेर्लोपः ॥ १२ ॥

स्वराणां मध्ये योऽन्त्यस्वरादिस्तस्यावयवस्येति[६] विग्रहः। न क्षरति। न चलतीति प्रधानत्वादक्षरं स्वर उच्यते। इनि परे लिङ्गस्यानेकाक्षरस्य यो[७]ऽवयवोऽन्त्यस्वरादिस्तस्य लोपो भवति। अतिहस्तयति। उपवीणयति॥ अनेकाक्षरस्येति किम्। वाचयति॥ श्वेताश्वाश्वतरगालोडितह्वरकाणामश्वतरेतकलोपश्चेति गणकारवचनादेव। श्वेताश्वमाचष्टे। श्वेतयति॥ अश्वतरमाचष्टे। अश्वयति॥ गालोडितमाचष्टे[८]। गालोडयति[८]॥

---

१ कंशं B.

२ F. adds यथा वाह्यं तथेदं विवक्षयेति।

३ B. om. किं.

४ कंश B.

५ °अतिक्रमे वर्तते। F.

६ स्वराणां मध्ये योऽन्त्यः स आदिर्यस्यावयवस्येति F.

७ Om. F.

८ °गलो° A.

कुरकमाचष्टे । कुरयति ॥ तद्वदिष्ठेमेयःसु बहुलम् । पटिष्ठः । पटिमा । पटीयान् ॥ मन्तुवन्तुवीणां(१) लुक् चेति गणे । ईएमन्तमाचष्टे(२) । ईशयति । स्रुग्वन्तमाचष्टे(३) । स्रुचयति(३) । स्रग्विणमाचष्टे(४) । स्रजयति(४) ॥

## रशब्द ऋतो लघोर्व्यञ्जनादेः ॥ १३ ॥

व्यञ्जनादेर्लिङ्गस्यानेकाक्षरस्य ऋतो लघो रशब्दादेशो भवति । इनि परे । पृथु प्रथयति । मृदु म्रदयति । दृढ द्रढयति । कृश क्रशयति । भृश भ्रशयति । परिवृढ परिव्रढयति । एषामेवाभिधानम् ॥

## धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे ॥ १४ ॥

क्रियायाः समभिहारः पौनःपुन्यं भृशार्थो वा । क्रियासमभिहारे वर्तमानाद्धातोर्व्यञ्जनादेर्यशब्दः परो भवति । स च चेक्रीयितसंज्ञकः । पुनःपुनः पचति । पापच्यते । भृशं ज्वलयति । जाज्वल्यते ॥ पाकादीनां प्रधानक्रियाणां पौनःपुन्यं प्रधानक्रियोपकारकाणामधिश्रयणादीनां(५) च भृशता फलातिरेको वा । व्यवस्थितवाधिकारादेकस्वरात् । तेन पुनःपुनर्जागर्ति ॥ ऋप्रभृतिभ्यश्च । अरार्यते । अटाट्यते । अश भोजने । अशाश्यते । प्रोर्णोनूयते । सोसूच्यते । मोमूत्र्यते ॥ शुभिरुचिभ्यां न स्यात् । भृशं

---

१ °विनां A.
२ ईएमान्तम्° A.
३ Om. B.; स्रग्वन्तमाचष्टे । स्रजयति.
४ स्र° A. B.
५ °अधिश्रयादीनां B.

शोभते । भृशं रोचते ॥ गत्यर्थात्[1] कौटिल्य एव । भृशं पुनःपुनर्वा कुटिलं क्रामति । चंक्रम्यते ॥ लुपादेर्गर्ह्यात् । भृशं पुनःपुनर्वा गर्हितं लुम्पति । लोलुप्यते । एवं सासद्यते । चंचूर्यते । जंजप्यते । जंजभ्यते । दंदह्यते । दंदश्यते । निजेगिल्यते ॥

## गुपूधूपविच्छिपणिपनेराय[2] ॥ १५ ॥

गुपूप्रभृतिभ्य आयः[3] परो भवति स्वार्थे । गोपायति । धूपायति । विच्छायति । पणायति । पनायते[4] । पनिसहचरित इह पणिः स्तुत्यर्थ इत्यन्ये ॥ ऋतेर्नीयङ्[5] वक्तव्यः । ऋतीयते । ङकार आत्मनेपदार्थः । नकारो[6]ऽगुणार्थः ॥ कमेरिनङ् कारितं च ॥ कामयते । व्यवस्थितवाधिकारादायादयोऽसार्वधातुके वा भवन्ति । गोपायिता । गोप्ता । गोपाया । गुप्तिः । ऋतीयिता । अर्तिता । कामयिता । कमिता ॥

## ते धातवः ॥ १६ ॥

ते सनाद्यन्ता धातुसंज्ञा भवन्ति । जुगुप्सते । मीमांसते । चिकीर्षति । पुत्रीयति । पुत्रकाम्यति । श्येनायते । उपवीणयति[7] । पापच्यते । गोपायति । ऋतीयते । कामयते ॥ धातुत्वाद्धातु-

---

१ गत्यर्थत्वात् A.
२ °पनेरायः ॥ B.
३ आय F.
४ पनायति F.
५ ऋतेर्णीयङ् F.
६ णकारो F.
७ F. adds कारयति । चोरयति ।

कार्यम्। अभूद्धक्रियत्वाद्वचनम्। इतरेषां गणेऽप्रसिद्धत्वात्सुखार्थम्॥

## चकासकासप्रत्ययान्तेभ्य(१) आम् परोक्षायाम्॥ १७॥

चकासकासप्रत्ययान्तेभ्य(१) आम् परो भवति परोक्षायाम्(२)। चकासांचकार(१)। कासांचक्रे(३)। लोलूयांचक्रे। चिकीर्षांचकार॥ चकासग्रहणमनेकस्वरोपलक्षणम्॥ तेन दरिद्रांचकार। चुलुम्पांचकार(४)॥ प्रत्ययान्तग्रहणमेकस्वरार्थमपीति मतम्। तेन खमिवाचचार(५)। खांचकार॥

## दययासश्च(६)॥ १८॥

दय। अय। आस। एभ्य आम् परो भवति परोक्षायां परभूतायाम्(७)। दयांचक्रे। पलायांचक्रे। आसांचक्रे॥

## नाम्यादेर्गुरुमतोऽनृछः॥ १९॥

नाम्यादेर्गुरुमतो धातोर्ऋच्छवर्जितादाम् परो भवति परोक्षायां परतः(८)। ईहांचक्रे। उञ्छांचकार। उब्जांचकार॥ कथमियेष। उवोष। (९)धातुसंज्ञातो नित्यं गुरुमान्॥ अनृछ इति किम्। आनर्छ॥ व्यवस्थितवाधिकारात् प्रोर्णुनाव॥

---

१ चकाशकाश॰ B.
२ Om. B.; परोक्षायां परतः। F.
३ चकाशाञ्चक्रे B.
४ Om. B.
५ खमिवाञ्चचार। B.
६ दययासाश्च A.; दयायासश्च B.
७ परतः F.
८ Om. F.; परभूतायाम्। B.
९ नायं धातु॰ F.

उषविदजागृभ्यो वा ॥ २० ॥

उषादिभ्य आम् परो भवति वा परोक्षायां परतः(१)। जागर्तिना सहचरितो विदिरदादिः। उषांचकार। उवोष ॥ विदांचकार। विवेद ॥ जागरांचकार। जजागार ॥

भीह्रीभृहुवां तिवच्च ॥ २१ ॥

एषां परोक्षायाम् आम् परो भवति वा। स च तिरिव। तेन द्वित्वमित्वं चेति। बिभयांचकार। बिभाय ॥ जिह्रयांचकार। जिह्राय ॥ बिभरांचकार। बभार ॥ जुहवांचकार। जुहाव ॥

आमः कृञनुप्रयुज्यते ॥ २२ ॥

आमन्तस्य धातोः कृञ् अनुप्रयुज्यते परोक्षायाम्। ईहांचक्रे। चकासांचकार(२) ॥ प्रयुज्यत इति स्पष्टार्थम् ॥ आमो मकारस्यानुस्वारो भवत्यन्तत्वात्। तद्वर्गपञ्चमो वा स्यात् ॥

अस्भुवौ च परस्मै ॥ २३ ॥

आमन्तस्य धातोरस्भुवावनुप्रयुज्येते परोक्षायाम्। परस्मैपदं चातिदिश्यते। ईहामास। ईहांबभूव। चकासामास(३)। चकासांबभूव(३) ॥ अन्वाचयशिष्टोऽयमादेशोऽर्थस्यान्तरतम्यात्। तेन। ईहामासे। ईहांबभूवे कन्या छात्त्रेण। ईहां व्यतिबभूवे छा-

---

१ Om. F.; परभूतायाम्। B.
२ चकाशाञ्चकार।; A. adds लोलुयाञ्चक्रे। चिकीर्षाञ्चकार। A.
३ चकाश० B.

त्तः ॥ अस्तेर्भू न स्याद् विधानबलात् प्रकृतेश्च[1]। अुतश्चकार आदेशेन सह संबध्यते ॥ विद आम् कृञ् पञ्चम्यां वा। विदांकरोतु। विदांकरवाणि। वेत्तु। वेदानि[2] ॥

## सिज् अद्यतन्याम् ॥ २४ ॥

अद्यतन्यां परभूतायां धातोः सिच् परो भवति। अनैषीत्। अचैषीत्। अपाक्षीत् ॥ व्यवस्थितवाधिकारात् स्पृशिमृशिकृषि[3] तृपिदृपिभ्यो वा। अस्पार्क्षीत्[4]। अस्पृक्षत्। अमार्क्षीत्। अमृक्षत्। अकार्क्षीत्। अकृक्षत्। अतार्प्सीत्। अतृपत्। अदार्प्सीत्। अदृपत् ॥ पक्षे शिडन्तात्[5] सण्[6] पुषादित्वात्। तृपिदृप्योरण् ॥

## सण्[7] अनिटः शिडन्तान्नाम्युपधादृदृशः[5] ॥ २५ ॥

[5]शिडन्तान्नाम्युपधादनिटो[8] धातोर्दृशवर्जितात् सण्[9] परो भवति। अद्यतन्यां परतः। अलिक्षत्। अकुक्षत् ॥ अनिट इति[10]किम्। अकोषीत्[11] ॥ कथम् अघुक्षत्। गुहूरनिडेकपक्षे॥ शिडन्तादिति किम्। अभुक्त ॥ नाम्युपधादिति किम्। अधाक्षीत् ॥ अदृश इति किम्। अद्राक्षीत् ॥

---

१ प्रकृतिः F.
२ विदानि F.
३ कृशि A.
४ अस्प्राक्षीत् A.
५ सिडन्तात् B.
६ सन् B. F.
७ सन० A. B.
८ ०ङपधाच्च अनिटो B.
९ सन् B.
१० अनिडिति B.
११ अकाषीत् A.

**(१)श्रिद्रुस्रुकमिकारितान्तेभ्यश्चण्(२) कर्तरि ॥ २६ ॥**

(१)श्रिद्रुस्रुकमिकारितान्तेभ्यश्चण्(२) परो भवति । कर्तर्यद्यतन्यां परतः । अशिश्रियत् । अदुद्रुवत् । असुस्रुवत्(३) । अचकमत(४) । अचीकरत् । अपीपचत् ॥ कर्तरीति किम् । समाश्रयिषातां राजानौ गृहे(५) देवदत्तेन ॥
श्विधेटोर्वा वक्तव्यः । अशिश्वियत् । अश्वयीत् । अदधत् । अधासीत् ॥

**अण्(६) असुवचिख्यातिलिपिसिचिह्वः ॥ २७ ॥**

एभ्यो धातुभ्यो ऽण्(७) भवति । कर्तर्यद्यतन्यां परतः । अपास्थत(८) । अवोचत् । अख्यत् । अलिपत् । असिचत् । अह्वत् ॥ व्यवस्थितवाधिकाराल्लिपादीनामात्मनेपदे वा । अलिपत । अलिप्त । असिचत । असिक्त । अह्वत । अह्वास्त ॥ कर्तरीति किम् । अलिप्सातां कुड्यो देवदत्तेन ॥ असुरित्युकारः । अस् भुवि अस् दीप्तौ । आभ्यां(९) मा भूदिति ॥

**पुषादिद्युताद्यॢकारानुबन्धार्तिसर्तिशास्तिभ्यश्च(१०) परस्मै ॥ २८ ॥**

पुषादिद्युताद्यॢकारानुबन्धार्तिसर्तिशास्तिभ्यो(१०) ऽण्(७) भ-

---

१ श्रीद्रुस्रु° B.; श्रिद्रुस्रु° F.
२ °चन B.
३ असुस्रुवत् B. F.
४ अचकमत् MSS.
५ Om. F.
६ अन° B.
७ अन परो B.
८ अपास्थत् B. F.; अपास्थ A.; *cf.* notes.
९ °असदीप्ताभ्यां A. F.
१० सास्तिभ्यश्च B.

वति । अद्यतन्यां[१] परस्मैपदे परतः ॥ पुषादि गृधु अभिकाङ्क्षा-यां यावत् । अपुषत् । अगृधत् ॥ द्युतादि । अद्युतत् । अश्वितत् ॥ लृकारानुबन्धः । अगमत् । अघसत् ॥ ऋ सृ गतौ । आरत् । असरत् ॥ शासु अनुशिष्टौ । अशिषत् ॥ परस्मा इति किम् । व्यद्योतिष्ट ॥ द्युतादीनामात्मनेपदमप्यस्तीति[२] ॥

इरनुबन्धाद्वा वक्तव्यम् । अरुधत् । अरौत्सीत् ॥

जॄश्विस्तम्भुम्रुचुम्लुचुग्लुचां वा वक्तव्यम् । जॄ । अजरत् । अजारीत्[३] ॥ श्वि । अश्वत् । अश्वयीत् ॥ स्तम्भु सौत्रोऽयं धातुः । अस्तभत्[४] । अस्तम्भीत् ॥ अम्रुचत् । अम्रोचीत् ॥ अम्लुचत् । अम्लोचीत् ॥ अग्लुचत् । अग्लोचीत् । स्तेये गतावपि वर्तते ॥

## इजात्मने पदेः प्रथमैकवचने ॥ २९ ॥

पदेर्धातोरिच् परो भवति । कर्तर्यद्यतन्यामात्मनेपदे प्रथमैकवचने परतः[५] । उदपादि । समपादि ॥ इच् ते पदेरिति[६] सिद्धे गुरुकरणं योगविभागार्थम् । तेन दीपजनबुधपूरितायिप्यायिभ्यो वा । अदीपि । अदीपिष्ट । अजनि । अजनिष्ट । अबोधि । अबुद्ध । अपूरि । अपूरिष्ट । अतायि । अतायिष्ट । अप्यायि । अप्यायिष्ट ॥

---

१ कर्तर्यद्यतन्यां A.
२ °अस्तीति मतं । A.
३ B. adds द्विवद्वक्तव्यम् ।
४ अस्तम्भत् B.
५ Om. A.
६ पदिरिति B.

भावकर्मणोश्च ॥ ३० ॥

सर्वस्माद्धातोरिच् परो भवति। भावकर्मणोर्विहिते प्रत्यये[१] परे[१]। अद्यतन्यामात्मनेपदे प्रथमैकवचे परतः[२]। अस्थायि भवता। अकारि कटो भवता॥ व्यवस्थितवाधिकाराद् नानोस्तपः। अन्वतप्त॥

सार्वधातुके यण्[३] ॥ ३१ ॥

सर्वस्माद्धातोर्यण्[३] परो भवति भावकर्मणोर्विहिते सार्वधातुके परे।[४] स्थीयते भवता। ग्रामो गम्यते भवता॥ कृञः श च [का° ४. ५. ७७]। क्रिया॥ चकारात् तपेस्तपःकर्मकात् कर्तरि भवति[५]। तप्यते तपस्तापसः। तपोऽर्जयतीत्यर्थः॥ दुचादिरचार्थेऽनोस्तु न स्यात्। अनुतपते तपस्तापसः॥

अन् विकरणः कर्तरि ॥ ३२ ॥

धातोरन् परो भवति। स च विकरणसंज्ञकः। कर्तरि विहिते सार्वधातुके परे। भवति। भवन्॥ विकरणप्रदेशाः। अनि च विकरणे [का° ३. ५. २] इत्येवमादयः॥

दिवादेर्यन् ॥ ३३ ॥

दिवादेर्गणाद् यन् विकरणसंज्ञकः[६] परो भवति[७] कर्तरि

---

१ Om. F.
२ Om. A.
३ यन B.
४ B. adds आस्यते भवता।
५ कर्तरि च भवति F.
६ Om. A. F.
७ F. adds स च विकरणसंज्ञकः।

विहिते सार्वधातुके परे। दीव्यति। सीव्यति॥ [१]भ्राशभ्लाशभ्रमुक्रमुत्रसित्रुटिलषियसिसंयसिभ्यश्च[२] वा। भ्राश्यते। भ्राशते[३]। भ्लाश्यते। भ्लाशते[३]। भ्राम्यति। भ्रम्यति। भ्रमति। भौवादिकोऽपि भ्रमिरस्तीति। क्राम्यति। क्रामति। त्रस्यति। त्रसति। त्रुट्यति। त्रुटति। लष्यति। लषति[४]। यस्यति। यसति। संयस्यति[५]। संयसति[५]॥

## नुः स्वादेः॥ ३४॥

स्वादेर्गणाद् नु विकरणसंज्ञकः परो भवति कर्तरि विहिते सार्वधातुके परे। सुनोति। सुन्वन्। चिनोति। चिन्वन्[६]॥ योगविभागादक्षतेर्वा। अक्ष्णोति। अक्षति॥ तनूकरणे तक्षतेश्च। तक्ष्णोति। तक्षति॥ तनूकरण इति किम्। संतक्षति वाग्भिः शिष्यम्। निर्भर्त्सयतीत्यर्थः॥

## श्रुवः शृ च॥ ३५॥

श्रुवो धातोर्नु विकारणसंज्ञकः परो भवति आदेश्च कर्तरि विहिते सार्वधातुके परे। शृणोति। शृण्वन्। उभयं विधेयं भौवादिकत्वात्॥

धिन्विकृण्व्योर्धि कृ चेति वक्तव्यम्। धिनोति। कृणोति॥

---

१ भ्रासभ्लास० F.
२ लसि MSS.; जसिसंजसिभ्यश्च F.
३ Om. B.; भ्रास्यते। भ्रासते। भ्लास्यते। भ्लासते। F.
४ लस्यति। लसति। MSS.
५ Om. A.; B. twice संयस्यति; संजस्यति। संजसति। F.
६ चिन्वानः। F.

## स्वराद्रुधादेः परो नशब्दः ॥ ३६ ॥

रुधादेर्गणस्य स्वरात्परो नशब्दो(१) भवति । स च विकरणसंज्ञकः(२) । कर्तरि विहिते सार्वधातुके परे । रुणद्धि । भिनत्ति ॥ प्रकृतिप्रत्यययोरर्थाभिधानेनैव(३) साहाय्यं कृतमित्यन्न स्यात् ॥

## तनादेरुः ॥ ३७ ॥

तनादेर्गणाद् उ विकरणसंज्ञकः परो भवति कर्तरि विहिते सार्वधातुके परे । तनोति । सनोति ॥

## ना क्र्यादेः ॥ ३८ ॥

क्र्यादेर्गणाद् ना विकरणसंज्ञकः परो भवति कर्तरि विहिते सार्वधातुके परे । क्रीणाति । प्रीणाति ॥

स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुभ्यो नुश्चेति वा वक्तव्यम् । स्कुञ् क्रैयादिकः । शेषाः सौत्रा धातवः । स्तभ्नाति । स्तभ्नोति । स्तुभ्नाति । स्तुभ्नोति । स्कभ्नाति । स्कभ्नोति । स्कुभ्नाति । स्कुभ्नोति । स्कुनाति । स्कुनोति ॥

## आन व्यञ्जनान्ताद्धौ ॥ ३९ ॥

क्र्यादेर्गणाद्व्यञ्जनान्तादानो विकरणसंज्ञकः(४) परो भवति हौ परे । पुषाण । बधान(५) ॥ व्यञ्जनान्तादिति किम् । क्रीणीहि ॥

---

१ नशब्दादेशो B. F.
२ F. om. स च०
३ ०अर्थाभिधानेन शब्देनैव A.
४ ०आनविकरण० B.
५ वदान A.

## आत्मनेपदानि भावकर्मणोः ॥ ४० ॥

धातोरात्मनेपदानि भवन्ति भावकर्मणोरर्थयोः । आस्यते भवता । शय्यते भवता ॥ भावः सत्ता । औत्सर्गिकमेकवचनमेवा-संख्यत्वात् ॥ कर्मणि च । क्रियते कटो देवदत्तेन । मास आस्यते[१] । क्रोशौ[२] गुडधानाभिर्भूयते । ओदनपाकः शय्यते । नदी सुप्यते । कालाध्वभावदेशानां कर्मसंज्ञा सिद्धेति[३] ॥

## कर्मवत् कर्मकर्ता ॥ ४१ ॥

कर्मचासौ कर्ता चेति कर्मकर्ता । कर्मकर्ता कर्मवद्भवति ।
क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति ।
सुकरैः स्वैर्गुणैः कर्तुः कर्मकर्तेति तद्विदुः ॥

लूयते केदारः स्वयमेव । अभेदि कुशूलः[४] स्वयमेव । कर्मवद्भा-वादात्मनेपदम् । वत्करणं स्वाश्रयार्थम् । तेन भावेऽपि । पच्यत ओदनेन स्वयमेव । त्यादित्वान्न तव्यादिषु कर्मवद्भावः । कर्तव्यं कटेन स्वयमेव । ईषत्करः कटेन स्वयमेव ॥ कर्मकर्तैत्यभेदाद् भेदे तु न स्यात् । भिद्यमानः कुशूलः[४] पात्राणि भिनत्ति । तथा । अन्योन्यमाश्लिष्यतः । आत्मानं हन्त्यात्मेति द्विविधो ह्यत्रात्मा[५] ॥ तथा । पचत्योदनं राध्यति स्वयमेव । धातुभेदात् ॥ गच्छति ग्राममसौ स्वयमेव । गम्यत इति न स्यात् । क्रियाश्रयः कर्तैव केवलं

---

१ मासास्यते B.
२ मासं B.
३ सिद्धैवेति.
४ कुसूलः A.
५ B. om. हि.

कर्मेति भेदात् । उक्तार्थतापि कर्मकार्यम् । तेन न द्वितीया धात्वधिकाराच्च(१) ॥ कर्मकर्त्रेति किम् । साध्वसिश्छिनत्ति । साधु स्थाली पचति ॥ कथम् । ब्रूते कथा स्वयमेव । अचीकरत कटमसौ स्वयमेव । वचनं प्रेषणादि च कर्तृस्थमेव । आत्मनेपदं तु(२) फलवद्विवक्षयेति(३) मतम् ॥ कार्यातिदेशोऽयम् ॥

### कर्तरि रुचादिङानुबन्धेभ्यः ॥ ४२ ॥

रुचादिभ्यो ङानुबन्धेभ्यश्च कर्तर्यभिधेय आत्मनेपदानि भवन्ति । रोचते । वर्धते ॥ शीङ् । शेते ॥ चक्षिङ् । आचष्टे ॥ रुच इत्यनुदात्तानुबन्धोपलक्षणम् । ऊर्ध्वमादत्त इत्युदात्तः । तद्विपरीतश्चानुदात्तः । उदात्तानुदात्तयोर्मिश्रश्च(४) समाहारो लोकोपचारात् । तेन रुचप्रकारेभ्यो भवन्ति(५) ॥ आदिग्रहणाच्च । निविशते । परिक्रीणीते ॥

नेर्विशः ॥ १ ॥ परिव्यवेभ्यः क्रीञ् ॥ २ ॥ विपराभ्यां जिः ॥ ३ ॥ आङो दाञ् अनात्मप्रसारणे ॥ ४ ॥ गमिन् क्षान्तौ ॥ ५ ॥ नुप्रच्छी ॥ ६ ॥ अनुपरिभ्यां च क्रीड् ॥ ७ ॥ समोऽकूजने ॥ ८ ॥ अपस्किर ॥ ९ ॥ गत्यनुकरणे हृञ् ॥ १० ॥ आशिषि नाथ ॥ ११ ॥ शपथे शप ॥ १२ ॥ प्रतिज्ञानिर्णयप्रकाशनेषु स्था ॥ १३ ॥ समवप्रतिभ्यः(६) ॥ १४ ॥ उदोऽनूर्ध्वचेष्टायाम्(७) ॥ १५ ॥ उपान्म-

---

१ धात्वाधि० A.
२ तत् F.
३ ०विवक्षेति B.
४ उदानु० A.
५ ऽपि भवन्ति । F.
६ ०प्रविभ्यः F.
७ ऽनूर्द्ध० F.

न्त्रेण ॥ १६ ॥ पथ्याराधनयोश्च ॥ १७ ॥ वा लिप्सायाम् ॥ १८ ॥ अकर्मकश्च ॥ १९ ॥ समो गमृच्छिप्रच्छिस्वृ(१)श्रुवेत्त्यर्तिदृशः ॥ २० ॥ उपसर्गादस्यत्यूहो(२) वा ॥ २१ ॥ आङो यमहनौ स्वाङ्गकर्मकौ च ॥ २२ ॥ व्युद्भ्यां तपः ॥ २३ ॥ तपःकर्मकः ॥ २४ ॥ निसंव्युपेभ्यो ह्वा ॥ २५ ॥ स्पर्द्धायामाङः ॥ २६ ॥ सूचनावक्षेपणसेवनसाहसयत्नकथोपयोगेषु कृञ् ॥ २७ ॥ अधेः शक्तौ ॥ २८ ॥ वेः शब्दकर्मकः ॥ २९ ॥ अकर्मकश्च ॥ ३० ॥ पूजोत्क्षेपणोपनयनज्ञानभृतिविगणनव्ययेषु नीङ्(३) ॥ ३१ ॥ कर्तृस्थामूर्तकर्मकश्च ॥ ३२ ॥ वृत्त्युत्साहतायनेषु क्रमः ॥ ३३ ॥ परोपाभ्याम् ॥ ३४ ॥ आङो ज्योतिरुद्गमे(४) ॥ ३५ ॥ वेः पादाभ्याम् ॥ ३६ ॥ प्रोपाभ्यामारम्भे ॥ ३७ ॥ अनुपसर्गे वा ॥ ३८ ॥ निह्नवे ज्ञा ॥ ३९ ॥ अकर्मकश्च ॥ ४० ॥ संप्रतिभ्यामस्मृतौ ॥ ४१ ॥ ज्ञानयत्नोपच्छन्दनेषु वदः ॥ ४२ ॥ अनोरकर्मकः ॥ ४३ ॥ विमतौ ॥ ४४ ॥ व्यक्तं(५) सहोक्तौ ॥ ४५ ॥ तयोर्वा ॥ ४६ ॥ अवाद्गिरः ॥ ४७ ॥ समः प्रतिज्ञायाम् ॥ ४८ ॥ किरादिग्रन्थिसनन्ताः कर्मकर्तृस्थाः ॥ ४९ ॥ दुहः ॥ ५० ॥ अद्यतन्यां स्वरान्तश्च वा ॥ ५१ ॥ स्नुनमौ स्वयम् ॥ ५२ ॥ उदः सकर्मकश्चरः(६) ॥ ५३ ॥ समस्तृतीयायुक्तः ॥ ५४ ॥ दाण् सा चेच्चतुर्थ्यर्थे ॥ ५५ ॥ उद्वाहे उपयम(७) ॥ ५६ ॥ शदिरनि ॥ ५७ ॥

---

१ स्नु B.; सृ F.
२ °अस्यत्युहौ A. B.
३ णीङ् A.; नीञ् F.
४ ज्योतिरुपगमे । A. B.
५ व्युक्तं F.
६ सकर्मकश्चच । F.
७ उपयमे B.

आशीरद्यतन्योश्च स्तङः ॥ ५८ ॥ अशने भुजि ॥ ५९ ॥ समः क्ष्णु: ॥ ६० ॥ स्वराद्यन्तादुपसर्गादयज्ञपात्रेषु युजिर् ॥ ६१ ॥ हेतुकर्तृभीष्म्योरिन्[१] ॥ ६२ ॥ प्रलम्भने[२] गृधिवञ्च्योः ॥ ६३ ॥ पूजाभिभवयोश्च लातेः ॥ ६४ ॥ मिथ्यायोगे[३]ऽभ्यासे कृञ् ॥ ६५ ॥ अनियमे चागतिहिंसाशब्दार्थहसः ॥ ६६ ॥

## चेक्रीयितान्तात् ॥ ४३ ॥

चेक्रीयितान्ताद्धातोः कर्तर्यात्मनेपदानि भवन्ति। पापच्यते। लोलूयते ॥

## आय्यन्ताच्च ॥ ४४ ॥

आयिप्रत्ययान्ताच्च धातोः[४] कर्तर्यात्मनेपदानि भवन्ति। हंसायते। पयायते। पयस्यते ॥ अन्तग्रहणादायिलोपे[५] न स्यादिति मतम्। तेन दरिद्राति। घटति ॥

## इन्ञयजादेरुभयम् ॥ ४५ ॥

इनन्ताद् ञनुबन्धाद्यजादेश्चोभयपदं भवति कर्तरि[६]। कारयति। कारयते। सुनोति। सुनुते। यजति। यजते। पचति। पचते ॥ समाहारानुबन्धा ये ते यजादयः[७]॥ अफलवति कर्तर्यात्मनेपदं च दृश्यते। यथा। वृत्तं परिवारयन्ते कण्टकाः। शोषयते व्रीहीनातपः[८]। तव दर्शनं किं न धत्ते। कमलवनोद्घाटनं कुर्वते

---

१ ०ष्मण D.
२ गो F.
३ मिथ्याभियोगे B.
४ Om. F.
५ आयिल्लोपे A.
६ कर्तर्यभिधेये B.
७ यजादय उच्यन्ते। B.
८ व्रीहिनातपः B.

ये। माणवकं ब्रूते। मरीचीन्वितनुते[१]॥ फलवति कर्तरि परस्मैपदं च दृश्यते। स्वं कटं कारयति[२]। स्वमङ्गं[३] कण्डूयति[३]। स्वं यज्ञं यजति। स्वं पुत्रमपवदति[४]। स्वमश्वं जानाति॥ अपदान्तरद्योत्येऽपि दृश्यते। तनोति शुभ्रं[५] गुणसंपदा यश इति॥ यजेरपि विवक्षया[६] भवितव्यमेवेति मतम्॥ गणकारवचनप्रमाणार्थमिदम्॥

## पूर्ववत् सनन्तात्॥ ४६॥

सनः पूर्वो यो धातुस्तद्वत्। सनन्तादपि तत्पदं भवति। रुरोचिषते। अधिजिगांसते। पापचिषते। शिश्येनायिषते। पिपक्षति। पिपक्षते॥ स्मृदृशी च सनन्तौ तु रुचादौ श्रुरनाङ्प्रतिः।
अननुज्ञाश्च[७] विज्ञेयो यथा सुस्मूर्षत[८] इति॥

## शेषात् कर्तरि परस्मैपदम्॥ ४७॥

येभ्य आत्मनेपदमुक्तं ततोऽन्यः शेषः। शेषाद्धातोः कर्तरि[९] परस्मैपदं भवति। भवति। अत्ति। जुहोति। दीव्यति। तुदति। रुणद्धि[१०]। विशति। पुत्रीयति। पुत्रकाम्यति। गोपायति[११]॥ पुनः

१ मरीचिन षि० B.
२ करोति। B.
३ Om. A.
४ पुत्रमुपवदति B.
५ सूभ्रं B.
६ विवक्षाया B.
७ अननुज्ञश्च A.
८ सुष्मूर्षत F.; सुसूर्षत B.
९ A. adds पदं.
१० Om. B.; तनोति F.
११ B. adds गोपायते।

कर्तरीति किम् । भिद्यते कुशूलः[१] स्वयमेव । नायं शुद्धः कर्तेति ॥ कथम् अनुकरोति । पराकरोतीति[२] नित्यं वक्तव्यम् ॥ प्रतिक्षिपति । अभिक्षिपति । अतिक्षिपति[३] । परस्मैपदमेव । तथा च प्रवहति । परिमृष्यति । विरमति । आरमति । परिरमति । देवदत्तमुपरमति । नात्मनेपदम्[४] । यजादे रुचादेश्च गणकृतस्यानित्यत्वात् ॥

॥ इति दौर्गसिंह्यां वृत्तावाख्याते द्वितीयः पादः समाप्तः ॥

---

द्विर्वचनमनभ्यासस्यैकस्वरस्याद्यस्य ॥ १ ॥

धातोरवयवस्यानभ्यासस्यैकस्वरस्याद्यस्य द्विर्वचनं भवतीत्यधिकृतं[५] वेदितव्यम् । पपाच । जुहोति ॥ वचनग्रहणं द्वे रूपे भवत इति स्थानित्वाशङ्कानिरासार्थम् । तेन जिघांसति । आटिटत् । घत्वकारितलोपप्रतिपत्तिगौरवं[६] स्यात् ॥ अनभ्यासस्येति किम् । जुगुप्सिषते । बोभूयिषते । प्रतिनिमित्तं द्विरुक्तिर्न स्यात् ॥ एकस्वरस्येति बहुव्रीहिः किम् । व्यञ्जनेन सह द्विर्वचनार्थम् ।

१ कुसूलः A.
२ A. om. पराकरोति.
३ °क्षिपतीति F.
४ B. om. न.
५ B. om. इति.
६ °लोपः प्रति° B.

तेन दिदरिद्रासति ॥ कथम् इयाय। आर। एकस्यापि स्वरस्याद्यन्तवदुपचारात्[१]। तथा। आट। अनेनिजुः। समुदायस्यापि द्विर्वचनमभ्यस्तकार्यं चेति ॥ कथं वृक्षं वृक्षं परिषिञ्चति। ग्रामो ग्रामो रमणीयः। गृहे गृहेऽश्वाः। वीप्सायां[२] वर्तमानस्य पदस्य लोकत एव द्विरुक्तिः सिद्धा[३] ॥ तथा[४]। परि परि त्रिगर्तेभ्यो वृष्टो देवः। परेर्वर्जने द्योत्ये विभाषैव ॥ तथा[५]। उपर्युपरि ग्रामम्। अधोऽधो नगरम्। अध्यधि स्थापयति। उपर्यधोऽधीनां सामीप्य एव ॥ तथा[५]। एकैकं जुहोति। आदेरेकस्य विभक्तेर्लुक् ॥ तथा। हा प्रिया मे गतगता नष्टनष्टा। सति संभवे पुंवद्भावोऽपि[६] पीडायां गम्यमानायाम् ॥ तथा। पटुपटुः। पटुपट्वी। पण्डितपण्डितः। पण्डितपण्डिता[७]। सादृश्ये गुणवचनस्यागुणवचनस्यापि[८]। भीतभीतः। चकितचकितः ॥ तथा प्रियप्रियेण ददाति। सुखसुखेन पश्यति। अप्राणिविषय एव। तथान्येऽप्यनुसर्तव्याः ॥ तथाभीक्ष्ण्ये[९]। पचति पचतितराम्। पचति पचतितमाम्। गच्छति गच्छतितराम्। गच्छति गच्छतितमाम्। तमादयः पश्चात् ॥ तथा[१०] डाच्यव्यक्तानुकरणस्य[११] च। पटपटाकरोति। पटपटायते ॥

---

१ °आद्यन्तलङ्घावात् F.
२ विप्सायां A.
३ सिद्धेति A.
४ Om. B.
५ Om. A.
६ सति संभवोऽपि A.
७ पण्डितपण्डिताः B.
८ गुणवचनस्यापि। B.
९ तथाभीक्ष्ये A.; F. om. तथा.
१० Om. F.
११ डाव्यक्ता° B.; F. corr. डाचव्यक्ता°

## स्वरादेर्द्वितीयस्य ॥ २ ॥

येन नाप्राप्तिन्यायेन पूर्वस्य बाधकोऽयम् । स्वरादेर्धातोर्द्वितीयस्यावयवस्यैकस्वरस्यानभ्यासस्य द्विर्वचनं भवतीत्यधिकृतं वेदितव्यम् । आशिशत् । अटाट्यते । अरिरिषति ॥ स्वरादेरिति किम् । पापच्यते ॥ धातोरिति किम् । आटतुः ॥ स्वरादेरिति कर्मधारयात्पञ्चम्या सिध्यति ॥ द्वितीयग्रहणमिहोपलक्षणम् । तेन शिष्टप्रयोगानुसारेण कण्डूयादीनां तृतीयस्यापि । कण्डूयियिषति ॥ ईर्ष्यतेर्यिशब्दस्य सनो[1] वा द्विर्वचनम् । ईर्ष्यितुमिच्छति[2] । ईर्ष्यियिषति । सनो[1]ऽपि । ईर्ष्यिषिषति ॥ नामधातोराद्यस्य द्वितीयस्य तृतीयस्य क्रमेण युगपद्वा । पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति । पुपुतित्रीयियिषति[3] ॥ क्वचिद् द्वितीयतृतीययोरपि[4] । अशिश्वीयिषति । अश्वीयियिषति ॥

## न नबदराः संयोगादयोऽये ॥ ३ ॥

स्वरादेर्धातोर्द्वितीयस्यावयवस्यैकस्वरस्यानभ्यासस्य नबदराः संयोगादयो न द्विरुच्यन्ते । न तु ये परे । उन्दिदिषति । उब्जिजिषति । अड्डिडिषति । अर्चिचिषति ॥ नामधातुष्वपि । इन्द्रीयितुमिच्छति । इन्दिद्रीयिषति[5] । एवमन्येऽप्यनुसर्तव्याः[6] ॥

---

१ सणो F.

२ ईर्ष्यतुमि° A.; ईर्षयितुमिच्छति B.; ईर्षितुमि° F.

३ पुपुत्रीयियिषति A.

४ B. adds अश्वियितुमिच्छति । B.

५ इन्द्रिद्रीयिषति F.

६ एवमन्येपि । F.; om. A.

अय इति किम्। अरार्यते। अर्थमाख्यातवान्। आरर्यदित्यपि स्यात्॥ कथं प्रोर्णोनूयते। नायं ये परतः। स्वरादाद्याद् द्वितीयो ऽवयवो वचनाद्गम्यते॥



पूर्वो ऽभ्यासः॥४॥

धातोर्द्विरुक्तस्य यः पूर्वः सो ऽभ्याससंज्ञो भवति। पपाच। देहि॥ अभ्यासप्रदेशाः। अभ्यासस्यादिर्व्यञ्जनमवशेष्यम् [का° ३. ३. ९] इत्येवमादयः॥

द्वयमभ्यस्तम्॥५॥

धातोरभ्यास इतरस्य द्वयमभ्यस्तसंज्ञं[१] भवति। ददति। ऐयरुः[२]॥ द्वयमिति किम्। परमात्रस्य[३] मा भूत्। अन्यथा जुह्वषतीत्यत्राभ्यस्तस्य च [का° ३. ४. १५] इत्यभ्यासस्य[४] संप्रसारणं न स्यात्॥ अभ्यस्तप्रदेशाः। अभ्यस्तानामाकारस्य [का° ३. ४. ४२] इत्येवमादयः॥

जक्षादिश्च॥६॥

जक्षादिरनभ्यस्तो ऽप्यभ्यस्तसंज्ञो[५] भवति। जक्षति। जाग्रति। दरिद्रति। चकासति[६]। शासति[७]॥ पञ्चैते भाषायां व्यवस्थिता इति[८]॥

१ °संज्ञो B.
२ ऐअरुः B.
३ परमात्र A.
४ °अभ्यासे B.
५ °संज्ञं A.
६ चकाशति B. F.
७ शाशति F.
८ व्यवस्थिताः॥ A.

## चण्परोक्षाचेक्रीयितसनन्तेषु(१) ॥ ७ ॥

चणाद्यन्तेषु(१) द्विर्वचनं भवत्यधिकारवशात्(२)। अपीपचत्। औन्दिदत्। पपाच। पापच्यते। प्रोर्णोनूयते। पिपक्षति। अटिटिषति॥ अन्तग्रहणं संश्चेक्रीयितयोरपि द्विर्वचनार्थम्। तेनार्थान्प्रतीषिषति। अटाट्यते॥

## जुहोत्यादीनां सार्वधातुके ॥ ८ ॥

जुहोत्यादीनां(३) सार्वधातुके परे द्विर्वचनं भवति। जुहोति(४)। अजुहोत्। जुहवानि। जजनानि। जजन्यात्। अजजन्॥ चिक्लिदचक्नसचराचरचलाचलपतापतवदावदघनाघनपाटूपटा(५) वा। इति नामभूताः संज्ञा रूढाः। न च क्लिदेर्नाम्युपधत्वात् कः। (६)क्नसिचरिचलिपतिवदिहनिपाटयतिभ्यो नाच्प्रत्ययो द्विर्वचनं निपातनं चेति॥

## अभ्यासस्यादिर्व्यञ्जनमवशेष्यम् ॥ ९ ॥

अभ्यासस्यादिर्व्यञ्जनमवशेष्यं रक्षणीयं भवति। अनादिर्लोपनीयमित्यर्थः(७)। शिश्राय। जग्लौ। बंभ्रम्यते॥ व्यञ्जनग्रहणमनादिवर्णमात्रस्य लोपो(८) मा भूत्। कथम् आटतुः। अभ्यासजातेरवगतं शेष्यम्। शेष्यशब्दो निवृत्तिप्रधानां(९) स्थितिमाहेत्यन्ये॥

---

१ चन॰ B.
२ भवतीत्यधिकृतं वेदितव्यम्। B.
३ F. adds धातूनां.
४ F. adds बिभेति.
५ ॰पट्टूपटा F.
६ क्नशि॰ B.
७ लोपनीय इत्यर्थः। A.
८ Om. F.
९ ॰प्रधानं B.

## शिट्परोऽघोषः ॥ १० ॥

शिटः परो[१]ऽघोषोऽवशेष्यो भवति। शिटो लोप इत्यर्थः। चुश्चोत[२] । तिष्ठेव । चस्कन्द ॥ शिट्पर इति किम् । पप्सौ ॥ अनाद्यर्थोऽयमारम्भः ॥

## द्वितीयचतुर्थयोः प्रथमतृतीयौ ॥ ११ ॥

अभ्यासद्वितीयचतुर्थयोः स्थाने प्रथमतृतीयौ भवतः । यथासंख्यमान्तरतम्यात् । चखान । चिच्छेद । टिठकारयिषति । तस्थौ । जुघोष । पफाल । डुढौके । दध्यौ । बभार ॥ कथम् ऊढमाख्यातवान् । औजढत् । असिद्धं बहिरङ्गमन्तरङ्ग इत्येके ॥

## हो जः ॥ १२ ॥

अभ्यासहकारस्य जकारो भवति । जघान । जुहोति ॥

## कवर्गस्य चवर्गः ॥ १३ ॥

अभ्यासकवर्गस्य[३] चवर्गो भवति यथासंख्यम्[४] । चकार । चखान । जगाम । जघास । ञुङुवे ॥

## न कवतेश्चेक्रीयिते ॥ १४ ॥

कवतेरभ्यासस्य चवर्गो न भवति चेक्रीयिते परे । कोकूयते खरः ॥ स्वविकरणनिर्देशात् कौतिकुवत्योर्मा भूत् । चोकूयते ॥

---

१ शिट्परो B.
२ चुश्चोत A.
३ अभ्यासे क० A.
४ Om. A.

ह्रस्वः ॥ १५ ॥

स्वरान्तस्याभ्यासस्य[1] ह्रस्वो भवति । तस्थौ । लुलूषति । डुढौके ॥

ऋवर्णस्याकारः ॥ १६ ॥

अभ्यास ऋवर्णस्य अकारो भवति । ववृधे । चक्रतुः ॥

दीर्घ इणः[2] परोक्षायामगुणे ॥ १७ ॥

इणो[2] धातोरभ्यासस्य परोक्षायामगुणे दीर्घो भवति । ईयतुः । ईयुः ॥ कृते द्विर्वचन इयो बाधकं यत्नमिति वचनम् ॥ अगुण इति किम्[3] । इययिथ ॥

अस्यादेः सर्वत्र ॥ १८ ॥

परोक्षायां सर्वत्र गुणिन्यगुणे चाभ्यासस्यादेरस्य दीर्घो भवति ।[4] आटिथ । आटतुः ॥ अस्येति किम् । इयेष । उवोष[5] ॥ आदेरिति किम् । पपाच ॥

तस्मान्नागमः परादिरन्तश्चेत्संयोगः ॥ १९ ॥

तस्माद्दीर्घीभूतादभ्यासात् परादिर्नकारागमो भवति । धातोरन्तश्चेत् संयोगः स्यात् । परोक्षायां परतः । आनर्च्छ । आन-

---

१ दीर्घान्तस्य॰ A. B. against Ṭikâ.
२ इनः B.
३ F. adds इयाय.
४ B. adds आट.
५ Om. F.

र्च्छतुः। आनर्च्छुः। आनञ्ज। आनञ्जतुः। आनञ्जुः॥ तस्मादिति किम्। आञ्छ। आञ्छतुः। आञ्छुः। नायमकारलोपस्य बाधको दीर्घः॥ अन्तश्चेत्[1] संयोग इति किम्। आटतुः॥

ऋकारे च॥ २०॥

तस्माद् दीर्घीभूतादभ्यासात् परादिर्नकारागमो भवति परोक्षायामृकारे च परतः। आनृधे। आनृधाते। आनृधिरे॥ कथम् आरधुः। निमित्ताभावात्[2]॥

अश्नोतेश्च॥ २१॥

तस्माद् दीर्घीभूतादभ्यासादश्नोतेश्च[3] परादिर्नकारागमो भवति। परोक्षायां परतः[4]। व्यानशे। व्यानशाते। व्यानशिरे॥ स्वविकरणनिर्देशाद् अश्नातेर्न स्यात्[5]। आशतुः॥

भवतेरः॥ २२॥

भवतेरभ्यासस्य परोक्षायामकारो भवति। बभूव। बभूवतुः। बभूवुः॥

निजिविजिविषां[6] गुणः सार्वधातुके॥ २३॥

निज्यादीनाम्[7] अभ्यासस्य सार्वधातुके गुणो भवति।

---

१ धातोरन्तश्चेत् B.
२ °अभावादिति B.
३ °अश्नोतेः B.
४ Om. B.
५ स्वविकरणनिर्देशात्। B.
६ °विषां B.
७ निजादीनाम° B.

अर्थादिकारस्य। नेनेक्ति। नेनिज्यात्। वेवेक्ति। वेविज्यात्। अनेनेक्। अवेवेक्। वेवेष्टि। वेवेष्टु॥

भृञ्हाङ्माङामित्[१] ॥ २४ ॥

भृञ्हाङ्माङामभ्यासस्य[२] सार्वधातुके परे इद् भवति। बिभर्ति। बिभृयात्। जिहीते। अजिहीत। मिमीते। अमिमीत॥

अर्त्तिपिपर्त्योश्च ॥ २५ ॥

अनयोरभ्यासस्य[३] इद् भवति सार्वधातुके परे। इयर्त्ति। इयृयात्। पिपर्त्ति। पिपृयात्॥ पृथग्योगो वैचित्र्यार्थः[४]॥

सन्यवर्णस्य ॥ २६ ॥

सनि परे योऽभ्यासस्तस्यावर्णस्य इद् भवति। पिपक्षति। पिपासति॥ सन्यभ्यासस्येति किम्। पापचिषते[५]॥

उवर्णस्य जान्तःस्थापवर्गपरस्यावर्णे[६] ॥ २७ ॥

सनि परतो[७] योऽभ्यासस्तस्योवर्णस्य जान्तःस्थापवर्गपरस्यावर्णे परे इद् भवति। जु[८] इति सौत्रोऽयं धातुः। जिजावयिषति[९]॥ यु। यियावयिषति। यियविषति॥ रु। रिरावयि-

---

१ भृङ० F.
२ भृङादीनामभ्यासस्य F.
३ अर्त्तिपिपर्त्योश्चाभ्यासस्य B.
४ वैचित्रार्थः A. B.
५ पापचिषति A.
६ उवर्णस्यान्तस्था० A.
७ परे A.
८ जू F.
९ F. adds जिजविषति।

षति[१] ॥ लू । लिलावयिषति[१] ॥ पूञ्[२] । पिपावयिषति । पूङस्तु । पिपविषते[३] ॥ भू । बिभावयिषति ॥ उवर्णस्येति किम् । बोभविषति[४] ॥ वचनमिदं ज्ञापनार्थम् । इनि यत्कृतं तत् सर्वं स्थानिवदिति तेन जुहावयिषतीत्यादयः सिद्धाः ॥

श्रुस्रुद्रुप्रुप्लुच्युङां[५] वा वक्तव्यम् । शिश्रावयिषति । शुश्रावयिषति । सिस्रावयिषति । सुस्रावयिषति । दिद्रावयिषति । दुद्रावयिषति । पिप्रावयिषति । पुप्रावयिषति । पिप्लावयिषति । पुप्लावयिषति । चिच्यावयिषति । चुच्यावयिषति ॥

## गुणश्चेक्रीयिते ॥ २८ ॥

चेक्रीयिते योऽभ्यासस्तस्य गुणो भवति । चेचीयते[६] । पोपूयते । बेभिदिता[७] ॥ वर्णान्तत्वाद्[८] नामिन एव ॥

## दीर्घोऽनागमस्य ॥ २९ ॥

चेक्रीयिते योऽभ्यासस्तस्यानागमस्य दीर्घो भवति । पापच्यते ॥ अनागमस्येति किम् । वनीवच्यते । वरीवृश्च्यते ॥ अनागमस्येति वचनमभ्यासविकारेष्वपवादो नोत्सर्गं बाधत इति ज्ञापनार्थम् । तेन मीमांसते ॥

---

१ B. adds respectively दिद्रविषति । लिलविषति ।
२ पुञ B.; पिञ A.
३ पुङस्तु° A. B.; पिपविषति F.
४ बोभविषते । A.
५ A. om. प्रु.
६ चेकीयते F.
७ B. adds बोभविता.
८ वर्णान्तविधित्वात् A.

## वञ्चिस्रंसिध्वंसिभ्रंसिकसिपतिपदिस्कन्दामन्तो नी ॥ ३० ॥

एषां चेक्रीयिते योऽभ्यासस्तस्यातोऽन्तो(१) नीर्भवति। वनीवच्यते। सनीस्रस्यते। दनीध्वस्यते। बनीभ्रस्यते। चनीकस्यते। पनीपत्यते। पनीपद्यते। चनीस्कद्यते॥ दीर्घविधानाद्गुणो नाशङ्क्यते॥

## अतोऽन्तोऽनुस्वारोऽनुनासिकान्तस्य ॥ ३१ ॥

अनुनासिकान्तस्य धातोश्चेक्रीयिते परे(२) योऽभ्यासस्तस्यातोऽन्तोऽनुस्वारो भवति। बंभण्यते। बंभणिता। यंयम्यते। यंयमिता॥ तकार उच्चारणार्थः॥ प्रतिपदोक्तग्रहणात्। बाभाम्यते(३)॥ पुनरन्तग्रहणमनुस्वारस्यापि स्थित्यर्थम्॥

## जपादीनां च ॥ ३२ ॥

जप इत्येवमादीनां(४) चेक्रीयते योऽभ्यासस्तस्यातोऽन्तोऽनुस्वारो भवति। जंजप्यते। जंजपिता। जंजभ्यते। जंजभिता॥ जप। जभ। दह। दन्श(५)। भन्ज। पश। षडेते जपादयः॥

## चरफलोरुच्च परस्यास्य ॥ ३३ ॥

चरफलोश्चेक्रीयिते योऽभ्यासस्तस्यातोऽन्तोऽनुस्वारो भव-

---

१ तस्यान्तो B.; ऽन्त्ये A.
२ Om. B. F.
३ वा भ्राम्यते A.; वा भार्यते B.
४ जपजभ इ० A.
५ दन्श A.; दन्स B. F.

ति। परस्यास्योश्च[१] भवति। चंचूर्यते। चंचुरिता। पंफुल्यते। पंफुलिता॥

## ऋमतो रीः[२]॥ ३४॥

ऋमतो धातोश्चेक्रीयिते योऽभ्यासस्तस्यातोऽन्तो रीर्भवति[३]। नरीनृत्यते। परीपृच्छ्यते[४]॥

## अलोपे समानस्य सन्वल्लघुनीनि चण्परे॥ ३५॥

समानसंज्ञकस्यालोपे सति लघुनि धात्वक्षरेऽभ्यासस्य इनि चण्परे सन्वत्कार्यं भवति। अपीपचत्। अलीलवत्। अशिश्रवत्॥ अलोपे समानस्येति किम्। अचकथत्॥ कथं पटुमाख्यातवान्। अपीपटत्। वृद्धौ सन्ध्यक्षरलोपः॥ लघुनीति किम्। अततक्षत्॥ कथम् अजीजागरत्। अनेकवर्णव्यवधानेऽपि लघुनि स्यादेवेति मतम्[५]। अत् त्वरादीनां च [का° ३. ३. ३७] इति वचनात्[६]॥ इनीति किम्। अचकमत[७]॥ इनीति जातिनिर्देशात्। वादितवन्तं प्रयोजितवान्। अवीवदद् वीणां परिवादकेनेति। इनीनो[८] लोपेऽपि स्यात्॥ चण्पर इति किम्। रिरमयिषति। दीर्घो लघोर्मा भूत्॥

---

१ °स्योश्च B.
२ ऋः A.
३ ऋर्भ° A.
४ A. adds वरीवृश्च्यते।
५ Om. A.
६ अतत्वरादिवचनात्। F.
७ अचकमत् B. F.
८ इनो B.; इनिनो F.

## दीर्घो लघोः ॥ ३६ ॥

समानसंज्ञकस्यालोपे सति लघ्वन्तस्याभ्यासस्य लघुनि धात्वक्षर इनि चण्परे दीर्घो भवति। अपीपचत्। अजूहवत्॥ लघोरिति किम्। अतित्रपत्॥

## अत् त्वरादीनां च ॥ ३७ ॥

त्वरादीनामभ्यासस्य[१] लघुनि धात्वक्षर इनि चण्परेऽद् भवति। अतत्वरत्। असस्मरत्॥ त्वर। स्मृ। दृ। प्रथ। म्रद। स्तृ। स्पश॥ वा वेष्टिचेष्टी॥ ईत्त्व[२] गणः॥

## इतो लोपोऽभ्यासस्य ॥ ३८ ॥

इतः सूत्रादारभ्याभ्यासस्य लोपो भवत्यधिकृतं[३] वेदितव्यम्। तेन पूर्वोक्ते[४] सन्वद्भावे सत्ययं न स्यात्। अमीमपत्। अदीदपत्॥ पुनरभ्यासग्रहणं समस्तलोपार्थम्॥

## सनि मिमीमादारभलभशकपतपदामिस्[५] स्वरस्य ॥ ३९ ॥

मिङादीनां[५] स्वरस्य सनि पर इसादेशो भवति। अभ्यासलोपश्च। डुमिङ्[६]। मित्सति। मीञ् मीङ् वा। प्रमित्सति। प्रमित्सते॥ मा इति मेङ्माङोरपि ग्रहणम्। प्रमित्सते[७]। उपमित्सते॥

---

१ त्वरादीनाञ्चाभ्य° A.
२ ईस्व F.
३ भवतीत्यधिकृतं F.
४ पूर्वोक्तिन A.
५ °इत् A.; ईस् B.
६ मीञादीनां B.
७ डुमिञ B.
८ उपमित्सति। A.

दासंज्ञकः । दित्सति । धित्सति ॥ रभ । आरिप्सते ॥ लभ । आलिप्सते ॥ शक्लृ शक । शिक्षति ॥ पत्लृ पित्सति ॥ पद पित्सते ॥ कथं पिपतिषति । सनीति द्विसकारोऽयं निर्देशो व्यक्तिर्वेति ॥
प्रतिरित्सतीति वक्तव्यम् । प्रतिपूर्वो राधो हिंसायामिति ॥

## आप्नोतेरीः ॥ ४० ॥

आप्नोतेः स्वरस्य ईर्भवति सनि परेऽभ्यासलोपश्च । ईप्सति ॥
ऋधिज्ञप्योरीरीतौ वक्तव्यौ[१] सनि सकारादौ । ईर्त्सति । ज्ञीप्सति ॥

## दम्भेरिच्च ॥ ४१ ॥

दम्भेः स्वरस्य इद् भवति । चकारादीच्च[२] । सनि सकारादौ । अभ्यासलोपश्च । धिप्सति । धीप्सति ॥
मुचोऽकर्मकस्यौद्वा[३] वक्तव्यः । मोक्षते वत्सः स्वयमेव । मुमुक्षते वत्सः स्वयमेव । आनुकूल्यात् कर्मकर्तृत्वम् ॥

## दिगि दयतेः परोक्षायाम् ॥ ४२ ॥

देङः[४] परोक्षायां दिग्यादेशो भवति । अभ्यासलोपश्च । तिपा धातुरेव[५] निर्दिश्यते । दिग्ये । दिग्याते । दिग्यिरे ॥ दय दान इत्यस्यामाव्यवधानात् । दयांचक्रे ॥

॥ इति दौर्गसिंह्यां वृत्तावाख्याते तृतीयः पादः समाप्तः ॥

---

१ ऋधिज्ञाप्योर्० A.
२ ०दीश्च B.
३ कर्मस्यौद्वा F.
४ देङो धातोः A.
५ धातुपरे A.

## सपरस्वरायाः संप्रसारणमन्तःस्थायाः ॥ १ ॥

सह परेण धातुस्वरेणान्तःस्थायाः संप्रसारणं भवत्यधिकृतं वेदितव्यम् । परेणैव सस्वरत्वं लोकतः सिद्धम् । परग्रहणं स्पष्टार्थम् । संप्रसारणं ध्रुतोऽन्तःस्थानिमित्ता(१) नित्यत्वेन स्थिता अन्वाख्यास्यन्ते ॥ अन्तःस्थाग्रहणमभ्यासविकारबाधनार्थम् । तेन विव्यथे । विव्याधे । इत्यादीनां यस्याभ्यासे संप्रसारणं सिद्धम् ॥

## ग्रहिज्यावयिव्यधिवष्टिव्यचिप्रच्छिव्रश्चिभ्रस्जीनामगुणे ॥ २ ॥

ग्रह्यादीनाम्(२) अन्तःस्थायाः सपरस्वरायाः संप्रसारणं भवति । अगुणे प्रत्यये परे । गृह्यते । गृह्णाति ॥ जीयते । जिनाति ॥ ऊयतुः । ऊयुः । न वाश्व्योरगुणे च [का० ३. ४. ६] इति प्रतिषेधबाधनार्थं वेञो वयिरुच्यते ॥ विध्यते(३) । विध्यति ॥ ऊश्चुः । उशन्ति(३) ॥ विच्यते । विचति । कुटादित्वादगुणत्वम्(४) । कथम् उरुव्यचाः । असुन्नौणादिकत्वात् ॥ पृच्छ्यते । पृच्छति । कथं प्रश्नः । प्रश्नाख्यानयोः [का० ४. ५. ९०] इति वचनात् ॥ वृश्च्यते । वृश्चति ॥ भृज्ज्यते(५) । भृज्जति(६) ॥ अगुण इति किम् । ग्रहीता ॥

---

१ F. adds इति.
२ B. adds धातूनाम्.
३ विव्याध । विविध्यतें । जघुः । जपन्ति । B.
४ °गुणः । B.; कुटादित्वात् । F.
५ भृज्यते B. F.
६ भृज्यति B.

स्वपिवचियजादीनां यण्परोक्षाशीःषु ॥ ३ ॥

स्वपिवच्योर्यजादीनामन्तःस्थायाः सपरस्वरायाः संप्रसारणं भवति। यणि परोक्षायामाशिषि चागुणे परतः[1]। सुप्यते। सुषुपतुः। सुप्यात्॥ उच्यते। ऊचतुः। उच्यात्॥ इज्यते। ईजतुः। इज्यात्॥

यजो वपो वहश्चैव वेञ्व्येञौ क्वयतिस्तथा।
वद्वसौ श्वयतिश्चैव नव यजादयः स्मृताः॥

परोक्षायामभ्यासस्योभयेषाम् ॥ ४ ॥

उभयेषां ग्रहादिस्वपादीनामभ्यासस्यान्तःस्थायाः सपरस्वरायाः संप्रसारणं भवति। परोक्षायां परतः। गुणार्थोऽयम्। जग्राह। जग्रहिथ। जिज्यौ। जिज्यिथ। उवाय। उवयिथ॥ स्वपादीनां च। सुष्वाप। सुष्वपिथ। उवाच। उवचिथ। इयाज। इयजिथ॥ परोक्षायामिति किम्। विवक्षति। वावच्यते॥

व्यथेश्च ॥ ५ ॥

व्यथेरभ्यासस्यान्तःस्थायाः सपरस्वरायाः संप्रसारणं भवति परोक्षायां परतः। विव्यथे। विव्यथाते। विव्यथिरे॥ परोक्षायामिति किम्। वाव्यथ्यते॥

न वाश्व्योरगुणे च ॥ ६ ॥

वेञ्। श्वि। इत्येतयोरभ्यासस्यान्तःस्थायाः सपरस्वरायाः

---

1 Om. F.

संप्रसारणं न भवति। परोक्षायाम् अगुणे गुणिनि च[१]। ववौ। वविथ। ववतुः। ववुः। शिश्वाय। शिश्वयिथ[२]। शिश्वियतुः। शिश्वियुः॥ अगुण इति वचनाद्[३] वेञो ऽनभ्यासो ऽपि गृह्यते॥ श्वयतेर्वा [का० ३. ४. १२] इति परस्य विभाषास्त्येव॥

## स्वपिस्यमिव्येञां चेक्रीयिते॥ ७॥

स्वपिस्यमिव्येञामप्राप्तं संप्रसारणं भवति[४] चेक्रीयिते परे। सोषुप्यते। सेसिम्यते। वेवीयते॥

## स्वापेश्चणि॥ ८॥

स्वापेरिनन्तस्य चणि परतः[५] संप्रसारणं भवति। असूषुपत्॥ स्वापेरिनन्तस्येति किम्। स्वापमकरोत्। असुषुपत्[६]॥

## ग्रहिस्वपिप्रच्छां सनि॥ ९॥

एषां सनि परे संप्रसारणं भवति। जिघृक्षति। सुषुप्सति। पिपृच्छिषति॥

## चायः किश्चेक्रीयिते॥ १०॥

चायश्चेक्रीयिते परे किर्भवति। चेकीयते॥

---

१ अगुणे गुणे च B.; A. adds परतः; F. adds प्रत्यये परे.
२ शिश्वियिथ। F.
३ अगुणवचनाद् A.
४ Om. F.
५ परे A.
६ असुस्वपत् B. F.

प्यायः पिः परोक्षायाम् ॥ ११ ॥

प्यायश्चेक्रीयिते परे[१] परोक्षायां च पिर्भवति। पेपीयते। आपिप्ये। आपिप्याते। आपिप्यिरे ॥

श्वयतेर्वा ॥ १२ ॥

श्वयतेश्चेक्रीयिते परे[१] परोक्षायां च संप्रसारणं भवति वा। शोशूयते। शेश्वीयते। शुशाव। शुशुवतुः। शिश्वाय। शिश्वियतुः ॥

कारिते च संश्चणोः ॥ १३ ॥

श्वयतेः संश्चणोर्यत् कारितं तस्मिन्[२] संप्रसारणं भवति वा। शुशावयिषति। शिश्वाययिषति। अशूशवत्। अशिश्वयत् ॥ इनि कृतस्य स्थानिवद्भावाच्छुद्विर्वचनम्[३] ॥

ह्वयतेर्नित्यम् ॥ १४ ॥

ह्वयतेः संश्चणोर्यत् कारितं तस्मिन् नित्यं संप्रसारणं भवति। जुहावयिषति। अजूहवत् ॥ द्विर्वचननिमित्ते कारितव्यवधान एव यथा स्यादिति वचनं। ह्वायकयितुमिच्छति। जिह्वायकयिषति। अजह्वायकत्। इति ॥

अभ्यस्तस्य च ॥ १५ ॥

ह्वयतेरभ्यस्तमात्रस्यान्तःस्थायाः सपरस्वरायाः संप्रसारणं भवति। जुहाव। जोहूयते। जुहूषति ॥

---

१ Om. F.

२ F. adds कारिते च.

३ सुद्विर्वचनम् B.; सुर्द्विवचनम् F.

**द्युतिस्वाप्योरभ्यासस्य ॥ १६ ॥**

द्युतिस्वाप्योरभ्यासस्य संप्रसारणं भवति। दिद्युते। दिद्युत्यते। दिद्योतिषते[१]। अदिद्युतत्। सुष्वापयिषति॥ स्वापेरिनन्तस्य ग्रहणाद् न घञादौ[२]। तेन सिष्वपयिषति[३]॥

**न संप्रसारणे ॥ १७ ॥**

संप्रसारणे कृते पुनः संप्रसारणं न भवति। विध्यते। वेविध्यते। विव्यथे। विविधतुः। विविधुः। संविव्यतुः। संविव्युः॥ एकदेशविकृतस्यानन्यवद्भावाद् व्यक्तौ जातौ च[४] वचनम्॥

**वशेश्चेक्रीयिते ॥ १८ ॥**

वशेश्चेक्रीयिते परे संप्रसारणं न भवति। वावश्यते॥

**प्रच्छादीनां परोक्षायाम् ॥ १९ ॥**

प्रच्छिव्रश्चिभ्रस्जीनां परोक्षायां संप्रसारणं न भवति। पप्रच्छतुः। पप्रच्छुः। वव्रश्चतुः। वव्रश्चुः। बभ्रज्जतुः। बभ्रज्जुः॥

**सन्ध्यक्षरान्तानामाकारोऽविकरणे ॥ २० ॥**

सन्ध्यक्षरान्तानां धातूनामविकरणविषय आकारो भवति।

---

१ दिद्योतिषति A.; दिद्युतिरे। देद्युत्यते। दिद्युतिषते। F.
२ य घाञादौ A.; न न घञादौ B.
३ सिस्वापयिषति। F.; शिश्वापयिषति। B.
४ B. om. च.

धेट् । धाता ॥ ग्लै । ग्लाता ॥ म्लै । म्लाता ॥ दो । दाता ॥ सुग्लः । सुम्लः । उपसर्गे लातो[१] डः स्यात् ॥ अन्तग्रहणं धातुसंज्ञाकाले सन्ध्यक्षरार्थम् । तेन चेता । स्तोता ॥ अविकरण इति किम् । ग्लायति । म्लायति ॥

## न व्ययतेः परोक्षायाम् ॥ २१ ॥

व्येञो धातोः परोक्षायामाकारो[२] न भवति । संविव्याय । संविव्ययिथ ॥ अगुणे संप्रसारणमस्त्येव[३] ॥

## मीनातिमिनोतिदीङां[४] गुणवृद्धिस्थाने ॥ २२ ॥

एषां गुणवृद्ध्योः प्रसङ्ग आकारो भवति । मीञ् । प्रमाता । प्रमापयति ॥ डुमिञ् । निमाता । निमापयति ॥ दीङ् । उपदाता । उपदापयति । उपदायो वर्त्तते ॥ इङाभ्यां चेति[५] घञ् स्यात् ॥ गुणवृद्धिस्थान इति किम् । प्रमीयते ॥ वर्णान्तविधित्वादभ्यासस्य[६] न स्यात् । प्रमेमीयते ॥

## सनि दीङः ॥ २३ ॥

दीङः सन्याकारो भवति । उपदिदासते । नाम्यन्तानामनिटाम् [का° ३. ५. १७] इत्यगुणत्वाद् वचनम् ॥

---

१ उपसर्गात्तातो B.
२ °अकारो A.
३ A. adds तेन संविव्यतुः
४ °दिङां B.
५ चेत्यधिकरणे F.
६ °विधिरित्वाद° A.; वर्णान्तस्य विधित्वाद° B.

स्मिजिक्रीङामिनि ॥ २४ ॥

एषामिनि पर आकारो भवति। विस्मापयते। जापयति। क्रापयति। अध्यापयति॥ हेतुकर्तृभये स्मिङोऽभिधानात्। कुञ्चिकयैनं(१) विस्माययति। करणाद् भये न स्यात्॥ भातिरिनन्तो हेतुभये(२)ऽपि वर्तते। मुण्डो भापयते॥ भीषिचिन्ति° [का° ४. ५. ८३] इति वचनाद् भियः षान्तता(३)। मुण्डो भीषयते॥ विस्फुरणं विस्फारः। तं करोतीतीन्। विस्फारयति। विस्फोरयति(४)॥ हेतुविवक्षायाम्(५) इन्॥ चप सान्त्वने चयनेऽपि वृत्तिः। चापयति। चिञस्तु चाययति॥ डुवपि प्रजनेऽपि। पुरोवातो गाः प्रवापयति॥ वी(६) प्रजने। प्रवाययति। गर्भं ग्राहयतीत्यर्थः॥ तपः साधयति। धर्मं साधयतीति पारलौकिकेऽपि साधिना भवितव्यमेव॥ सिधु गत्यामित्यनेन च। अन्नं सेधयति। ग्रामं सेधयतीति भवितव्यमेव॥ सिध्यतिनापि। तपस्तापसं सेधयति॥ कस्त्वामुल्लापयते। श्येनो वर्त्तिकामुल्लापयते। लातेरेवायं प्रयोगः। विसंवादाभिभवयोर्लियः कारिते प्रयोगो नास्त्यनभिधानात्। रुचादिरयम्। विलाता। विलेता। विलास्यते। विलेष्यते। विलाय। विलीय। लातेर्लियः प्रयोगो(७)ऽनेकार्थत्वाद्धातूनामिति॥

---

१ कञ्जिकयैनं A.
२ हेतुकर्तृभये B.
३ सान्तता B.
४ Om. A.
५ हेतुकर्तृविवक्षायाम् F.
६ वि B. F.
७ प्रयोगे A.

सृजिदृशोरागमोऽकारः स्वरात्परो धुटि गुणवृद्धिस्थाने ॥ २५ ॥

सृजिदृशोः स्वरात्परो धुडादौ प्रत्यये[1] गुणवृद्धिस्थाने[2] ऽकारागमो भवति। स्रष्टा। अस्राक्षीत्। द्रष्टा। अद्राक्षीत्॥ धुटीति किम्। ससर्ज। ददर्श॥ गुणवृद्धिस्थान इति किम्। सृक्षीष्ट। दृक्षीष्ट॥

योगविभागात् स्पृशादीनां वा। स्पृश। स्प्रष्टा। अस्प्राक्षीत्॥ मृश। म्रष्टा। अम्राक्षीत्॥ कृष। क्रष्टा। अक्राक्षीत्॥ तृप। त्रप्ता। अत्राप्सीत्॥ दृप। द्रप्ता। अद्राप्सीत्॥ पक्षे। स्पर्ष्टा। अस्पार्क्षीदित्यादि॥

दीङो[3]ऽन्तो यकारः स्वरादावगुणे ॥ २६ ॥

दीङो[3]ऽन्तो यकारो भवति। स्वरादावगुणे प्रत्यये परे। उपदिदीये। उपदिदीयाते। उपदिदीयिरे॥ दीङो[3]ऽवयवत्वेन[4] द्विर्वचनं स्याद् आत्वं च न स्यात्॥

आलोपोऽसार्वधातुके ॥ २७ ॥

धातोराकारस्य लोपो भवति। असार्वधातुके स्वरादावगुणे प्रत्यये परे। पपुः। तस्थुः। गोदः। संस्था॥ असार्वधातुक इति किम्। यान्ति॥ स्वरादाविति किम्। ग्लायते॥ अगुण इति किम्। दानम्॥

---

१ Om. A.
२ गुणवृद्ध्योः प्रसङ्गे F.
३ दिङो B.
४ ऽवयवेन B.

उकाराच्च ॥ ३५ ॥

उकाराच्च विकरणात्परस्य हेर्लोपो भवति । तनु । कुरु ॥ विकरणादिति किम् । नुहि ॥

उकारलोपो वमोर्वा ॥ ३६ ॥

असंयोगस्य(१) विकरणस्योकारस्य लोपो भवति वा वमोः परतः । सुन्वः । सुन्मः । सुनुवः । सुनुमः । तन्वः । तन्मः । तनुवः । तनुमः ॥ आद्यन्तवद्भावात् । सुनोमि । तनोमीति परत्वात् स्वरादेशत्वाद्वा सिद्धम् ॥

करोतेर्नित्यम् ॥ ३७ ॥

कृञः(२) परस्य विकरणोकारस्य नित्यं लोपो भवति वमोः परतः । कुर्वः । कुर्मः ॥

ये च ॥ ३८ ॥

करोतेर्नित्यं(३) विकरणोकारस्य नित्यं लोपो भवति ये प्रत्यये परे(४) । कुर्यात् । कुर्याताम् । कुर्युः ॥

अस्योकारः सार्वधातुकेऽगुणे ॥ ३९ ॥

करोतेरकारस्यागुणे सार्वधातुके पर(५) उकारो भवति ।

---

१ असंयोगात्परस्य F.
२ करोतेः A.
३ F. om. नित्यं.
४ ये च परतः । F.; B. om. प्रत्यये.
५ Om. A.

कुरुतः । कुर्वन्ति । कुरु । प्रत्ययलोपलक्षणत्वात् । गुणो नैव स्वरू-पनिर्देशात् ॥ सार्वधातुक इति किम् । संचस्करुः ॥ अगुण इति किम् । करोमि ॥

## रुधादेर्विकरणान्तस्य लोपः ॥ ४० ॥

रुधादेर्यो विकरणस्तस्यान्तावयवस्य[१] लोपो भवति । अगुणे सार्वधातुके परे । रुन्द्धः । रुन्धन्ति । भिन्त्तः । भिन्दन्ति ॥ अगुण इति किम् । रुणद्धि ॥

## अस्तेरादेः ॥ ४१ ॥

अस्तेरादेरकारस्यागुणे[२] सार्वधातुके परे लोपो भवति । स्तः । सन्ति ॥ अगुण इति किम् । अस्ति ॥

## अभ्यस्तानामाकारस्य ॥ ४२ ॥

अभ्यस्तसंज्ञकानामाकारस्य लोपो भवति । अगुणे सार्वधा-तुके परे । मिमते । मिमताम् । जिहते । जिहताम् । दत्ते । धत्ते ॥ अगुण इति किम् । जहाति ॥

## क्र्यादीनां विकरणस्य ॥ ४३ ॥

क्र्यादीनां धातूनामगुणे सार्वधातुके[३] विकरणाकारस्य[४] लोपो भवति । क्रीणते । क्रीणन्ति । प्रीणते । प्रीणन्ति ॥ कथं स्तभ्न-

---

१ तस्यावयवस्य F.; रुधादेर्विक-रणान्तस्यावयवस्य B.

२ °आदेरवयवस्य A.

३ F. adds परे.

४ विकरणान्तस्य A.

न्तीत्युपलक्षणत्वात् ॥ क्र्यादीनामिति किम् । दीव्यामः । सीव्यामः[१] ॥ विकरणस्येति सुखप्रतिपत्त्यर्थम् ॥ अगुण इति किम् । क्रीणाति ॥

## उभयेषामीकारो व्यञ्जनादावदः ॥ ४४ ॥

राश्यपेक्षयोभयशब्दो व्यक्त्यपेक्षया बहुवचनम् । उभयेषामभ्यस्तक्र्यादिविकरणानां दावर्जितानामाकारस्य[२] व्यञ्जनादावगुणे सार्वधातुके[३] ईकारो भवति । मिमीते । जिहीते । लुनीते । पुनीते ॥ व्यञ्जनादाविति किम् । मिमते । क्रीणते ॥ अगुण इति किम् । जहाति । क्रीणाति ॥ सार्वधातुक इति किम् । लालायते ॥ अद इति किम् । दत्से । धत्से ॥

## इकारो दरिद्रातेः ॥ ४५ ॥

दरिद्रातेराकारस्यागुणे सार्वधातुके व्यञ्जनादाविकारो भवति । दरिद्रितः । दरिद्रिथः ॥ अगुण इति किम् । दरिद्राति ॥ सार्वधातुक इति किम् । दरिद्राणम् । दरिद्रायकः । दिदरिद्रासति[४] ॥

भियो वेति वक्तव्यम् । बिभितः । बिभीतः ॥

## लोपः सप्तम्यां जहातेः ॥ ४६ ॥

जहातेरन्तस्य सप्तम्यामगुणे[५] लोपो भवति । जह्यात्[६] । जह्याताम्[६] ॥

---

१ दीव्यावः । सीव्यावः । A.
२ दारवर्जितानाम्° B.
३ F. adds परे.
४ Om. A.
५ A. adds परतो.
६ जज्यात् । जज्याताम् । जज्युः । B.

व्यञ्जनादावगुणे सार्वधातुक इत्वं वा[1] वक्तव्यम् । जहितः । जहीतः ॥ हौ चात्वमित्वमीत्वं चेष्टम् । जहाहि । जहिहि । जहीहि ॥

## धुटि हन्तेः सार्वधातुके ॥ ४७ ॥

हन्तेर्धुडादौ सार्वधातुकेऽगुणेऽन्तस्य[2] नकारस्य लोपो भवति । हतः । हथः । आहते । आहताम् ॥ धुटीति किम् । हन्वः । हन्मः ॥ अगुण इति किम् । हन्ति ॥ प्रतिषिद्धेटां मध्ये हन्तेरेव सार्वधातुके संभवदर्शनार्थमिदम्[3] ॥

## शासेरिदुपधाया अण्व्यञ्जनयोः ॥ ४८ ॥

शासेरुपधाया इद् भवति । अणि व्यञ्जनादावगुणे[4] । अन्वशिषत् । शिष्यते । शिष्टः[5] ॥ कथं मित्रं शास्तीति मित्रशीः । विलोपात् स्वरादेशो विधिर्बलवान्[6] ॥ अणा सहचरितः शासुरिह[7] गृह्यते । आशास्ते । आशासमानः ॥ कथम् आशीः । ज्ञापकात् ॥

## हन्तेर्ज हौ ॥ ४९ ॥

हन्तेर्जकारो भवति हौ परे । जहि शत्रून् ॥ हेर्व्यक्तित्वाद् हतात् । परत्वात्तातन्[8] ॥

---

१ इद्वा F.
२ Om. F.
३ सार्वधातुक इति संभव° B.; F. om. इदम्.
४ F. adds प्रत्यये परे.
५ F. adds शिष्टवान् ।
६ °बलवानिति F.
७ °इहेति F.
८ आशिषि तु ह्योस्तातण् A.

## दास्त्योरेऽभ्यासलोपश्च ॥ ५० ॥

दासंज्ञकस्यास्तेश्च हौ परेऽन्तस्यैत्वं भवति । अभ्यासलोपश्च यथासंभवम् । देहि । धेहि ॥ अस । एधि ॥ अलोपश्चेति सिद्धेऽभ्यासग्रहणं समस्तलोपार्थम् ॥

## अस्यैकव्यञ्जनमध्येऽनादेशादेः परोक्षायाम् ॥ ५१ ॥

अगुणे परोक्षायां परतोऽनादेशादेर्धातोरस्यैकव्यञ्जनमध्यगतस्यैत्वं भवति । अभ्यासलोपश्च । पेचतुः । नेमतुः । सेहे ॥ चकाराधिकारात्[१] क्वचिद् दीर्घोऽपि गृह्यते । राधो हिंसायां । अपरेधतुः ॥ हिंसायामित्येव । आरराधतुः ॥
राजिभ्राजिभ्राशिभ्लाशीनां[२] वा वक्तव्यम् । रेजतुः । रराजतुरित्यादि । अन्यत्र न भवति । चकाशे ॥ थलि च सेट्यप्येवम् । रेजिथ[३] । रराजिथ[३] ॥
असहायव्यञ्जनमध्यगतस्येति किम् । ततचतुः ॥ अनादेशादेरिति किम् । बभणतुः ॥ अगुण इति किम् । अहं पपच ॥

## थलि च सेटि ॥ ५२ ॥

थलि च सेटि परतोऽनादेशादेर्धातोरस्यैकव्यञ्जनमध्यगतस्यैत्वं भवति । अभ्यासलोपश्च । पेचिथ । नेमिथ ॥ सेटीति किम् ।

---

१ चकारात् A.
२ ॰भ्रासिभ्लासीनां B. F.
३ Om. A.

पपक्थ ॥ अनादेशादेरिति किम् । बभणिथ ॥ एकव्यञ्जनमध्यगतस्येति किम् । विव्ययिथ ॥

## तॄफलभजत्रपश्रन्थिग्रन्थिदन्भीनां च(१) ॥ ५३ ॥

तृप्रभृतीनामत एत्वं भवति । अभ्यासलोपश्च । परोक्षायामगुणे थलि च सेटि परतः । गुणादेशादिसहायव्यञ्जनत्वाद् वचनम् । तेरतुः । तेरिथ । फेलतुः । फेलिथ । भेजतुः । भेजिथ । त्रेपे । त्रेपाते । त्रेपिरे । श्रेथतुः । ग्रेथतुः । देभतुः ॥ अनुषङ्गलोपिनां(२) मध्ये दन्भेरेवेति नियमात् । ममन्थान् ॥ निरनुषङ्गः साहचर्यात् । शश्रन्थिथ । जग्रन्थिथ । ददन्भिथ । इत्यनुषङ्गिणां न स्यात् ॥ अगुण इति किम् । अहं ततर ॥

जॄभ्रमुत्रसिस्यनफणस्यमां(३) वा वक्तव्यम् । जेरतुः । जजरतुः । जेरिथ । जजरिथेत्यादि ॥

## न शसददवादिगुणिनाम् ॥ ५४ ॥

शसेर्ददेर्वकारादीनां गुणिनां च(४) धातूनामेत्वमभ्यासलोपश्च न भवति । अगुणे परोक्षायां थलि च सेटि परतः । विशशसतुः । विशशसिथ(५) ॥ ददद े। ददद ाते ॥ ववसतुः । ववसिथ ॥ विशशरतुः । विशशरिथ ॥(६) निनयिथ ॥

---

१ °दम्भीनां च A.
२ °लोपानां A.
३ जृभमु° A. B.
४ Om. F.
५ विशसतुः । विशसिथः । A.
६ F. adds एवं.

## स्वरादाविवर्णो वर्णान्तस्य धातोरियुवौ ॥ ५५ ॥

स्वरादावगुणे प्रत्यये परे धातोरिवर्णो वर्णान्तस्य इ् उवौ भवतः। निर्दिष्टस्य स्थानिन एवान्तरतम्यात्। शिश्रियतुः। चिक्रियतुः। चुच्युवतुः। पुपुवतुः। पुवन्ति। रुवन्ति। लुवन्ति[१] ॥ स्वरादाविति किम्। श्रीयात्। लूयात् ॥ अगुण इति किम्। श्रयिता। लविता ॥ धातुग्रहणमप्युत्तरार्थमेव ॥

## अभ्यासस्यासवर्णे ॥ ५६ ॥

इवर्णो वर्णान्तस्याभ्यासस्यासवर्णे[२] स्वर[३] इयुवौ भवतः। इयेष। उवोष। इयृयात् ॥ असवर्ण इति किम्। ईषतुः। ऊषतुः ॥

## नोर्विकरणस्य ॥ ५७ ॥

नोर्विकरणस्योकारस्यागुणे स्वरादावुव् भवति। आन्तरतम्यात्। प्राप्नुवन्ति। प्राप्नुवन्तु। शक्नुवन्ति। शक्नुवन्तु ॥ नोरिति किम्। चिण्वन्ति ॥ विकरणस्येति किम्। तन्वन्ति ॥

## य इवर्णस्यासंयोगपूर्वस्यानेकाक्षरस्य ॥ ५८ ॥

अनेकाक्षरस्य धातोर्य इवर्णस्तस्यासंयोगपूर्वस्य यकारो भवति। अगुणे स्वरादौ। निन्यतुः। निन्युः। निन्यतुः। निन्युः। दिग्यिरे। निन्यिरे ॥ असंयोगपूर्वस्येति किम्। शिश्रियतुः। चिक्रियतुः ॥ अनेकाक्षरस्य धातोरिति[४] किम्। अधीयते ॥

---

१ B. adds श्रुवन्ति।
२ °अभ्यासस्यावर्णे A.
३ स्वरे परे B.
४ अनेकाक्षरस्येति F.

इणश्च ॥ ५९ ॥

इणो धातोरगुणे स्वरादौ यकारो भवति। यन्ति। यन्तु॥ चकारोऽनुक्तसमुच्चयार्थः। तेन इकोऽपि स्यात्। अधियन्ति। अधियन्तु॥

नोर्वकारो विकरणस्य ॥ ६० ॥

नोर्विकरणस्यासंयोगपूर्वस्य(१) स्वरादावगुणे वकारो भवति। सुन्वन्ति। चिन्वन्ति॥ विकरणस्येति किम्। नुवन्ति। नोनुवः॥ असंयोगपूर्वस्येति किम्। तक्ष्णुवन्ति॥

जुहोतेः सार्वधातुके ॥ ६१ ॥

जुहोतेरुकारस्य सार्वधातुके स्वरादावगुणे प्रत्यये(२) परे(२) वकारो भवति। जुह्वति। जुह्वतु॥ अगुण इति किम्। जुहवानि॥ सार्वधातुक इति किम्। जुहुवुः॥ स्वरादाविति किम्। जुहुयात्॥

भुवो वोऽन्तः परोक्षाद्यतन्योः ॥ ६२ ॥

भुवो धातोरन्तो वकारो भवति परोक्षाद्यतन्योः स्वराद्योः परतः। बभूव। बभूवतुः। बभूवुः। बभूविथ। अभूवन्(३)। अभूवम्॥ पुनर्वकारो गुणवृद्धिबाधनार्थः। नित्यश्चेद्गुणाधि-

१ °विकरणस्योकारस्यासयाग° A.　　३ बभूवन्। B.
२ Om. A.

कारः स्यात् ॥ स्वराद्योरिति किम् । अभूत् । बभूवान्[१] ॥ बभूवुष इत्यसिद्धं बहिरङ्गमन्तरङ्गे इति ॥

गोहेरूदुपधायाः[२] ॥ ६३ ॥

गोहेः कृतगुणस्य स्वरादौ परत उपधाया ऊद्[३] भवति । गूहयति । गूहिता । गूहकः ॥ गोहेः कृतगुणस्येति[४] किम् । जुगुहुः ॥ उपधाग्रहणमुत्तरार्थं[५] च ॥

दुषेः[६] कारिते ॥ ६४ ॥

दुषेरुपधाया ऊद्[३] भवति कारिते परे[७] । दूषयति ॥ कारित इति किम् । दोषो वर्तते ॥ कारित इति संज्ञापूर्वकत्वाद् वा चित्तविकारे । चित्तं दूषयति । चित्तं दोषयति । प्रज्ञां दूषयति । प्रज्ञां दोषयति ॥

मानुबन्धानां ह्रस्वः ॥ ६५ ॥

घटादयो मानुबन्धा अन्वाख्याताः[८] । तेषामुपधायाः कारिते परे ह्रस्वो भवति । घटयति । व्यथयति ॥
ह्वगे ह्लगे सगे स्थगे संवरणे[९] ॥ कगे नोच्यते । अस्यायमर्थ इति च[१०] नोच्यते । कगयति ॥ चन् च । वनु च नोच्यते । चन् च

---

१ अभूवान् A.
२ गोहिरूदु° B.
३ उद् B.
४ गोहेरिति F.
५ उपधाया ग्रहण° A.
६ दुषे A.
७ Om. A.
८ इत्यन्वाख्याताः F.
९ A. adds च.
१० F. om. च.

हिंसार्थः । वनु च कगेवत्[१] । चनयति । वनयति ॥ स्मृ आध्याने । स्मरयति । चिन्तायामन्यत्र न भवति । विस्मारयति ॥

जनी जृष्[२] क्नसु रञ्जो ऽमन्ताश्च[३] । जनी प्रादुर्भावे । जनयति ॥ जृष्[२] । जरयति ॥ क्नसु क्करणे । क्नसयति ॥ रञ्ज रागे । रजयति मृगान् । रञ्जेर्मृगरमणे ऽनुषङ्गलोपः ॥ अमन्ताश्च[३] । रमयति । श्रमयति ॥

ज्वलह्वलह्मलनमो ऽनुपसर्गा वा । सोपसर्गास्तु नित्यं मानुबन्धाः । ज्वल दीप्तौ घटादिः । प्रज्वलयति ॥ तथा ह्वल ह्मल चलने । प्रह्वलयति । प्रह्मलयति ॥ अमन्तत्वात्[४] । उपनमयति[५] ॥

ग्लास्नावनुवमश्च । अनुपसर्गा इति किम् । प्रग्लापयति । प्रस्नापयति । उपवनयति । उद्वमयति ॥ न कम्यमिचमः ॥

शमो ऽदर्शने । शमयति रोगान् । दर्शने तु न भवति । निशामयति रूपम् ॥

स्खदिरवपरिभ्यां[६] च । अवस्खदयति । परिस्खदयति[७] ॥ अवपरिभ्यामेवेति नियमादन्योपसर्गान्न भवति । प्रस्खादयति । उपस्खादयति ॥

फण गतौ पद्यते मानुबन्धश्च । गतेरन्यत्र न भवति[८] । फाणयति[९] फाण्टम् ॥

---

१ कगेवदिति A.
२ जृष MSS.
३ ऽमन्ताच्च F.
४ अमन्ताश्च B.; अमन्तात् F.
५ उपरमयति A.
६ स्खदिरप° B.
७ A. adds नमो ऽपरिवेशने ॥
८ F. om. from गतेर°
९ फणयति F.

अन्ये सुगमा इति नोदाहृताः । कथम् उद्घाटितः कपाटः[१] । चौरश्चोत्काथयति । घञन्तादिन् ॥ संक्रामयतीति ग्रन्तृङन्तादिन् ॥

## इचि वा ॥ ६६ ॥

मानुबन्धानां धातूनां[२] कारित इचि परे ह्रस्वो भवति वा । अघटि । अघाटि । अव्यथि । अव्याथि ॥ चजि गतौ दाने च । दच हिंसायामिति घटादिपाठबलादनुपधाया अपि दीर्घत्वम् । तेन अचञ्जि । अचाञ्जि ॥ अदचि । अदाचि ॥

## जनिवध्योश्च ॥ ६७ ॥

इज्मात्रमिह[३] वर्तते[४] । जनिवध्योरिचि परे[५] नित्यं ह्रस्वो भवति । अजनि । अवधि ॥ यद्यपि बन्धने वधिस् तथापीचि हिंसायाम् । तथा च भचकश्चेन्नास्ति वधको ऽपि न विद्यते ॥ वधिः[६] प्रकृत्यन्तरमित्येके ॥

## ओतो यिन्आयी स्वरवत् ॥ ६८ ॥

ओतः परौ यिन्आयी स्वरवद् भवतः । गव्यति । गव्यते ॥ अवो ऽपि न स्यात् । गवाजिनवदिष्टत्वात् ॥

---

१ कवाटम् B.
२ Om. B. F.
३ इञ्मात्र° A. F. and MSS. Tril.; इञ्मात्र° B.
४ स्पर्यते A.
५ °बध्योश्चेति परे F.
६ (?) None of the MSS. distinguish between व and ब.

## औतश्च ॥ ६९ ॥

औतः परौ चिन्आयी स्वरवद् भवतः । नाव्यति । नाव्यते । यथासंख्यभयात् पृथगुच्यते ॥

## नाम्यन्तानां यण्आयियिन्आशीश्चिवचेक्रीयितेषु[1] ये दीर्घः ॥ ७० ॥

नाम्यन्तानां धातूनां[2] यणादिषु[3] ये[2] चौ च परत आन्तरतम्याद् दीर्घो भवति । चीयते । मन्तूयति[4] । अग्नीयते । पटूयति[5] । चीयात् ॥ चौ च । पटूकरोति ॥ चेचीयते ॥ य इति[6] किम् । क्षषीष्ट । नामीति संभवदर्शनार्थमिदम् ॥

## इणो[7]ऽनुपसृष्टस्य ॥ ७१ ॥

इणो[7] धातोरनुपसृष्टस्यैवाशिषि ये[8] दीर्घो भवति ॥ ईयात् । ईयास्ताम् ॥ अनुपसृष्टस्येति[9] किम् । अन्वियात् ॥[10] यणो व्यवहितपाठान्नेहानुवृत्तिरिति गम्यते । तेन समीयते । नियमो न स्यात् ॥

## ऋत ईदन्तश्चिवचेक्रीयितयिन्आयिषु ॥ ७२ ॥

ऋदन्तस्य चिचेक्रीयितयिन्आयिषु परत ईदन्तो भवति ।

---

१ यनायीयिना॰ B.
२ Om. F.
३ यणायिषु A. F.
४ नूयते । मन्थूयति । B.
५ पटयति । A.
६ यनादिष्विति । B.
७ इनो B.
८ Om. B.; A. om. धातोः
९ ॰सृष्टस्यैवेति A.
१० यनो व्यवहितत्वात् पा॰ B.

मात्रीकरोति। जेह्रीयते। स्वस्त्रीयति। दुहित्रीयते[१] ॥ ऋत इति किम्। चेकीर्यते[२] ॥

इरन्यगुणे ॥ ७३ ॥

ऋदन्तस्यानि विकरणे[३]ऽगुण इकारो भवति। आद्रियते। आध्रियते ॥ ऋत इति किम्। किरति। गिरति ॥ अगुण इति किम्। स्मरति। आदेशादागमो विधिर्बलवानिति[४] ॥

यणाशिषोर्ये[५] ॥ ७४ ॥

ऋदन्तस्य यणाशिषोर्ये[५] पर इकारोऽन्तो[६] भवति। क्रियते। क्रियात् ॥ य इति किम्। कृषीष्ट ॥

गुणोऽर्तिसंयोगाद्योः ॥ ७५ ॥

अर्तेः संयोगादेश्च धातोर्यणाशिषोर्ये[७] परे गुणो भवति। अर्यते। अर्यात्। स्मर्यते। स्मर्यात् ॥ असिद्धं बहिरङ्गमन्तरङ्गे इति संस्क्रियते। संस्क्रियात् ॥

चेक्रीयिते च ॥ ७६ ॥

अर्तेः संयोगादेश्च धातोश्चेक्रीयिते[८] परे गुणो भवति। अरार्यते। सास्मर्यते ॥

---

१ दुहित्रीयति F.
२ कॄ चे॰ F.; चेक्रीयते B.
३ ऋदन्तस्याकरणे B.; F. om. अगुणे.
४ ॰बलीयानिति A.
५ यना॰ B.
६ Om. B.
७ धातोर्ऋतो य॰ F.
८ धातोर्ऋतश्चेक्री॰ B.; अर्तिसंयोगाद्योर्ऋतश्चे॰ F.

## घ्राध्मोरी ॥ ७७ ॥

[१]घ्रा। ध्मा। इत्येतयोश्चेक्रीयिते पर ईकारो भवति[२]। जेघ्रीयते। देध्मीयते ॥ हन्तेर्घ्नीर्वा वक्तव्यम्। जेघ्नीयते। जंघन्यते ॥

## यिन्यवर्णस्य ॥ ७८ ॥

यिनि परेऽवर्णस्य ईकारो[३] भवति। वस्त्रीयति। मालीयति ॥ च्वौ च। दीर्घीभवति[४]। मालीस्यात् ॥
अशनायोदन्यधनाया बुभुक्षापिपासाकाङ्क्षासु निपाता[५] रूढाः। अशनमिच्छति भोक्तुम्। अशनायति ॥ उदकमिच्छति पातुम्। उदन्यति ॥ धनमिच्छति तृष्णक्। धनायति ॥

## अदेर्घस्लृ सनद्यतन्योः ॥ ७९ ॥

अदेः स्थाने सनद्यतन्योः परतो घस्लृरादेशो भवति। लृद् अनर्थः। जिघत्सति। अघसत् ॥

## वा परोक्षायाम् ॥ ८० ॥

परोक्षायां परतोऽदेर्घस्लृरादेशो[६] भवति वा। आद। आदतुः। जघास। जक्षतुः ॥ घस्लृ अदने[७]। सौत्रोऽयं भाषायां मरम्विषय एव ॥

---

१ घ्राध्मोरित्ये° B.
२ ईर्भवति F.
३ ऽवर्णस्येद् B.
४ दीर्घो भ° F.
५ °काङ्क्षास्वनिपाता F.
६ अदेः स्थाने घस्लृ° B.
७ घस्लृरदने B.

**वेञश्च वयिः ॥ ८१ ॥**

वेञो धातोः परोक्षायां परतो वयिर्भवति(१) वा। उवाय। ऊयतुः। ववौ। ववतुः॥ इकारः स्वरूपग्राहकः॥

**हन्तेर्वधिराशिषि ॥ ८२ ॥**

हन्तेर्वधिर्भवति(२)। आशिषि परतः। वध्यात्। वध्यास्ताम्॥

**अद्यतन्यां च ॥ ८३ ॥**

हन्तेरद्यतन्यां च परतो वधिर्भवति। अवधीत्। अवधिष्टाम्॥ अनान्तत्वादिटि कृते वा दीर्घो न स्यात्। इज्निर्देशस्य(३) स्वरूपग्राहकत्वात्॥ वाशब्दो व्यवस्थावाचीह स्मर्यते। तेनात्मनेपदे वा। आहत। आहसाताम्। आवधिष्ट। आवधिषाताम्(४)॥

**इणो गा ॥ ८४ ॥**

इणो धातोरद्यतन्यां(५) गादेशो भवति। अगात्। अगाताम्॥ इणवद् इकोऽपि। अध्यगात्॥

**इङः परोक्षायाम् ॥ ८५ ॥**

इङः परोक्षायां(५) गादेशो भवति। अधिजगे। अधिजगाते। अधिजगिरे॥ इङ इति किम्। इट् गतौ। उदियाय॥

---

१ परोक्षायां वयिरादेशो भवति F.
२ ०वधिरादेशो भवति B.
३ इङ्निर्देशस्य MSS.
४ अवदिष्ट। अव० F.
५ F. adds परतो.

अद्यतनीक्रियातिपत्त्योर्वा गीरादेश(१) इष्यते(२)। अध्यगीष्ट। अध्यैष्ट(३)। अध्यगीष्यत। अध्यैष्यत(३)॥ इनि संस्मरणेऽपि गायते-रध्ययने(४)ऽपि वृत्तिः। अधिजिगापयिषति। अध्यजीगपत्(५)॥ इङस्तु। अध्यापिपयिषति। अध्यापिपत्(६)॥

## सनीणिङोर्गमिः॥ ८६॥

सनि परे इणिङोर्गमिरादेशो भवति। ग्रामं जिगमिषति। वेदानधिजिगांसते॥ इको(७)ऽपि। अधिजिगमिषति॥ गमू बोधने सनि नाभिधीयते चेत् तथायमपि। अर्थान् प्रतीषिषति॥ इट्(८) गतौ बोधनेऽपि दृश्यते(९)। गमयति। अधिगमयति। गमिनैव सिद्धम्। अर्थान् प्रत्याययति। शास्त्रमध्यापयतीति भवितव्यमेव(१०)॥

## अस्तेर्भूरसार्वधातुके॥ ८७॥

अस्तेर्भूरादेशो भवति। असार्वधातुकविषये। भविता। भूतः। भविष्यति। भव्यम्। स्वराद् यः [का° ४. २. १०]॥ तिपा निर्देशः किम्। अस्तिता॥

---

१ गिरादेश F.
२ उच्यते A.
३ अध्येष्ट।°। अध्येष्यत A. F.
४ गीयतेर° F.
५ अध्यजिगपत् A.
६ अध्यापीपत् F.
७ इकारो A.
८ अट पट किट इट F.
९ वृत्तिः। B.
१० °एवेति F.; °अध्यापयतीत्यत एव॥ B.

ब्रुवो वचिः ॥ ८८ ॥

ब्रुवो धातोर्वचिर्भवति । असार्वधातुकविषये । वक्ता । वक्ष्यति । वाच्यम् । ऋवर्णव्यञ्जनान्ताद् घ्यण् [का° ४. २. ३५] ॥

चक्षिङः ख्याञ् ॥ ८९ ॥

चक्षिङः[1] ख्याञादेशो भवति । असार्वधातुकविषये । आख्याता । आख्यास्यति । आख्यास्यते । ञनुबन्धत्वादुभयपदम् ॥ आख्येयम् । आत्खनोरिच्च [का° ४. २. १२] इति[2] ॥ कथं संचक्षो[3] दुर्जनो । वर्जनीय इत्यर्थः । नृचक्षा राक्षसः । असुन[4] औणादिकत्वात् । विचक्षणो विद्वान् लोकतः सिद्धः ॥

वा परोक्षायाम् ॥ ९० ॥

चक्षिङः परोक्षायां[5] ख्याञादेशो भवति वा । आचख्यौ । आचख्ये । आचचक्षे ॥

अजेर्वी ॥ ९१ ॥

अजेर्वीरादेशो भवति । असार्वधातुकविषये । विव्यतुः । वयनीयम् । वीतः । वीतवान् ॥ व्यञ्जनादौ वेति केचित् । प्राजिता । प्रवेता । प्राजिष्यते । प्रवेष्यते । प्राजितुम् । प्रवेतुम् ॥

---

१ चक्षिङो धातोः A.
२ इति स्यात् A.
३ संचक्षो F.
४ असून B.
५ A. adds च.

घञ्अल्क्यप्सु च[1] न स्यात्। समाजः। उदजः। समज्या। प्राजनो दण्डः। वाधिकारादियमिष्टसिद्धिः[2]॥

## अदादेर्लुग् विकरणस्य॥ ९२॥

अदादेर्गणाद् विकरणस्य लुग् भवति। अत्ति। हन्ति। जुहोति। बिभेति। जुहुतः। बिभीतः॥ लुग्लोपत्वान्न गुणः॥ विकरणस्येति किम्। अघ्नन्॥ अदाद्यन्तर्गणो जुहोत्यादिरिति॥

## इणस्थादापिबतिभूभ्यः सिचः परस्मै॥ ९३॥

इणादिभ्यः परस्य सिचो लुग् भवति परस्मैपदे परतः। अगात्। अध्यगात्। अस्थात्। अदात्। अधात्। अपात्। अभूत्॥ पिबतेरिति किम्। पा रक्षणे। अपासीत्॥ परस्मा इति किम्। समस्थिषत। अदिषत॥

घ्राधाच्छासाधेटां वा वक्तव्यम्। अघ्रात्। अघ्रासीत्। अध्मात्। अध्मासीत्। अच्छात्। अच्छासीत्। असात्। असासीत्। अधात्। अधासीत्॥

॥ इति दौर्गसिंह्यां वृत्तावाख्याते चतुर्थः पादः समाप्तः॥

---

१ ट F.    २ °सिद्धिरिति॥ F.

## नाम्यन्तयोर्धातुविकरणयोर्गुणः ॥ १ ॥

नाम्यन्तयोर्धातुविकरणयोरन्तरतमो गुणो भवति[१]। अर्थात्प्रत्यये परे। एता। चेता। नेता। स्तोता। कर्ता। भविता। सुनोति। तनोति॥ नाम्यन्तयोरिति किम्। उम्भिता। क्रीणाति॥ ग्लायति[२]। म्लायति[२]। ऐकारोपदेशबलान्न गुणः[३]॥ नीभ्याम्। लूभ्यामिति गौणत्वात्॥

## नामिनश्चोपधाया लघोः ॥ २ ॥

धातोरुपधाया नामिनो लघोर्गुणो भवति। कोषिता[४]। कोषिष्यते। वर्तिता। वर्तिष्यते॥ भेत्ता। छेत्तेति प्रत्यये परे धातोरुपधैव॥ चकार उत्तरार्थः॥

## अनि च विकरणे ॥ ३ ॥

नामिन उपधाया नाम्यन्तस्य चान्येव विकरणे गुणो भवति[४]। रोचते। वर्तते। भवति। नयति॥ अन्येव विकरण इति किम्। नृत्यति। सुनोति। क्रीणाति। पुषाण॥ विकरण इति किम्। अदुहन्॥

## करोतेः ॥ ४ ॥

करोतेः स्वविकरणे गुणो भवत्येव। करोति। करोतु[५]॥ तनाद्युपलक्षणं[६] करोतिरिति केचित्। तेन समर्णोति॥

---

१ °विकरणयोर्गुणो भवति। आन्तरतम्यात्। A.

२ Om. A.

३ इत्यैकारोपदेशान्न गुण इति। F.

४ B. om. from कोषिता to गुणो भवति (S. 3).

५ कुरुते। F.

६ °उपलक्षणत्वात् B.

मिदेः ॥ ५ ॥

मिदेः स्वविकरणे गुणो भवत्येव। मेद्यति ॥ भौवादिकस्य मेदतेरनि सिद्ध एव[१]॥

अभ्यस्तानामुसि[२] ॥ ६ ॥

अभ्यस्तानामुसि[३] परे नामिनो[४] गुणो भवति। द्वित्वबहुत्वयोश्च परस्मा इति प्रतिषेधे प्राप्ते वचनम्। अबिभयुः। अजुहवुः। अबिभरुः। अजागरुः ॥ अभ्यस्तानामुसीति किम्। जुहुवुः ॥

न णकारानुबन्धचेक्रीयितयोः[५] ॥ ७ ॥

नाम्यन्तानां नाम्युपधानां च णकारानुबन्धे चेक्रीयिते च[६] परे गुणो न भवति। अशिश्रियत्। अपुषत्। अघुक्षत्[७]। नीयते। दुष्यते ॥ नरीनृत्यते। लोलूयते ॥

अभ्यस्तस्य चोपधाया नामिनः स्वरे गुणिनि सार्वधातुके ॥ ८ ॥

अभ्यस्तस्य चोपधाया नामिनः स्वरादौ गुणिनि सार्वधातुके परे गुणो न भवति। नेनिजानि। अनेनिजम् ॥ विशेषनामिग्रहणाज् जजनानीत्यल्लोपो न स्यात्। एवमुत्तरत्रापि योज्यम् ॥ गुणिनीति किम्। गुणिन्यपि गुणो मा भूत्। अनेनिजुः ॥

---

१ सिद्धमेव ॥ A.
२ °उषि B.
३ अभ्यस्तसंज्ञकानामुषि B.
४ नामिन एव B.; om. F.
५ णकारानुबन्धश्चे° B. F.
६ Om. F.
७ अदुक्षत्। B.; A. adds दीयते, F. चीयते.

सनि चानिटि ॥ ९ ॥

नामिन उपधाया अनिटि सनि गुणो न भवति। बिभित्सति। दित्सा। बुभुक्षते। जिघृक्षति॥ चकारादनामिनोऽपि क्वचित्। तेन धीप्सति। नलोपः स्यात्॥ अनिटीति किम्। चुकोषिषति॥

सिजाशिषोश्चात्मने ॥ १० ॥

नामिन उपधायाः सिच्यात्मनेपद(१) आशिषि चानिटि गुणो न भवति। अभित्त। अच्छित्त। अभित्साताम्। अदुक्षि। अदुग्ध। अदुग्धाः। दुहदिहलिहगुहामात्मने वतवर्गे वा सणेव तत्र व्यवस्थितवानुवृत्तेः सिचोऽद्यतन्युपलक्षणत्वात् सिद्धम्॥ भित्सीष्ट। भुक्षीष्ट॥ अनिटीति किम्। अवर्धिष्ट। वर्धिषीष्ट॥ इहात्मनेग्रहणं गुणबाधिका वृद्धिरिति ज्ञापनार्थम्। तेन न्यनुवीत्। न्यधुवीत्। कुटादित्वादगुणे वृद्धिर्न स्यात्॥

ऋदन्तानां च ॥ ११ ॥

ऋदन्तानां च धातूनां(२) सिजाशिषोरात्मनेपदेऽनिटि गुणो न भवति। अकृत। अकृषाताम्। कृषीष्ट॥ अनिटीति किम्। प्रावरिष्ट। प्रवरिषीष्ट(३)॥ कथं तॄ। अतीर्ष्ट। तीर्षीष्ट। स्तॄ। अस्तीर्ष्ट(४)। स्तीर्षीष्ट। पॄ। अपूर्ष्ट। पूर्षीष्ट। सिजाशिषोरात्मन इड्विकल्पेष्टिरित्यृकारस्योपलक्षणत्वात्॥

---

१ सिच्यात्मनेपदे A.

२ Om. A.; B. om. च.

३ Om. F.

४ अस्तर्ष्ट A.

स्थादोश्च ॥ १२ ॥

स्थादासंज्ञकयोश्च[1] नामिनः सिच्यात्मनेपदे[2] गुणो न भवति। समस्थिषत। समस्थिषाताम्। अदित। अदिषाताम्। अधित। अधिषाताम् ॥ नामिन इति किम्। स्थासीष्ट। दासीष्ट ॥

भुवः सिज्लुकि ॥ १३ ॥

भुवो धातोः[3] सिज्लुकि सति गुणो न भवति। अभूत्। अभूताम् ॥ भुव इति किम्। अस्थात् ॥ सिज्लुकीति वचनान्नामिनो निवृत्तिर्वेति[4] शङ्क्यते ॥

सूतेः पञ्चम्याम् ॥ १४ ॥

सूतेः पञ्चम्युत्तमे[5] गुणो न भवति। सूङ्। सुवै। सुवावहै। सुवामहै ॥

दीधीवेव्योश्च ॥ १५ ॥

छान्दसावेतौ धातू इत्येके। पञ्चम्यामिति नेहानुवृत्तिः पृथग्योगात्। दीधीवेव्योश्च गुणो न भवति। आदीध्यै[6]। आवेव्यै[7]। आदीध्यनम्। आवेव्यनम्। आदीध्यकः[8]। आवेव्यकः ॥

---

१ स्थादोश्च F.
२ सिच्यात्मनेपदे A.
३ Om. B.
४ °नामिनो वृत्ति° F.
५ A. adds पदे.
६ आदीध्ये F.; आदिध्यै B.
७ आवेव्ये F.
८ आदिध्यनम्° आदिध्यकः। B.

### रुदविदमुषां सनि ॥ १६ ॥

रुदादीनां सनि गुणो न भवति। रुरुदिषति। विविदिषति। मुमुषिषति ॥ पारिशेष्याद् विदिर्ज्ञानार्थः ॥ सनि व्यञ्जनादेर्व्युपधत्वाद् विकल्पेष्टौ वचनं नित्यर्थम् ॥

### नाम्यन्तानामनिटाम् ॥ १७ ॥

नाम्यन्तानां धातूनामनिटां(1) सनि गुणो न भवति। चिचीषति। निनीषति। तुष्टूषति। लुलूषति। चिकीर्षति। बुभूर्षति(2) ॥ अनिटामिति किम्। शिश्रयिषति ॥ ज्ञीप्सतीति नित्यत्वात् कारितलोपः स्यात् ॥

दीर्घाणां च क्वतो दीर्घो गुणं वाधेत चेत्तदा।
दीर्घजाविरुरौ नाम द्रना लोपस्तु दुर्लभः(3) ॥

### सर्वेषामात्मने सार्वधातुकेऽनुत्तमे पञ्चम्याः ॥ १८ ॥

सर्वेषां धातूनां विकरणानां च नामिन उपधाया नाम्यन्तस्य च सार्वधातुके पञ्चम्युत्तमवर्जित आत्मनेपदे गुणो न भवति। दुग्धे। स्तुते। चिनुते। कुरुते ॥ सार्वधातुक इति किम्। धोक्ष्यते। स्तोष्यते ॥ अनुत्तमे पञ्चम्या इति किम्। स्तवै। करवै ॥

### द्वित्वबहुत्वयोश्च परस्मै ॥ १९ ॥

सर्वेषां धातूनां चिकरणानां(4) च चार्वधातुके(5) पञ्चम्यु-

---

1 नाम्यन्तानामनिटां A.
2 बुभूषति A.
3 दुर्लभ इति A.
4 A. adds नामिन उपधाया नाम्यन्तस्य च.
5 F. adds नरे.

त्तमवर्जिते द्विलबकुलयोश्च परस्मैपदे गुणो न भवति। दुग्धः। दुहन्ति। स्तुतः। स्तुवन्ति। चिनुतः। चिन्वन्ति। कुरुतः। कुर्वन्ति॥ द्विलबकुलयोरिति किम्। दोग्धि। स्तौति। करोति। चिनोति॥ अनुत्तमे पञ्चम्या इति किम्। दोहाव। दोहाम। चिनवाव। चिनवाम॥

## परोक्षायां च॥२०॥

सर्वेषां धातूनां परोक्षायां च[1] द्विलबकुलयोश्च परस्मैपदे गुणो न भवति। दुदुहतुः। दुदुहुः। विव्यतुः। विव्युः॥ द्विलबकुलयोरिति किम्। दुदोह। निनयिथ॥

## सर्वत्रात्मने॥२१॥

सर्वेषां धातूनां[1] परोक्षायां च सर्वस्मिन्नात्मनेपदे[2] गुणो न भवति। दुदुहे। दुदुहाते। दुदुहिरे। चक्रे। चक्राते। चक्रिरे[3]॥

## आशिषि च परस्मै॥२२॥

सर्वेषां धातूनां[1] सर्वत्राशिषि परस्मैपदे गुणो न भवति। चीयात्। चीयास्ताम्। दुह्यात्। दुह्यास्ताम्॥ परस्मा इति किम्। चेषीष्ट। धोषीष्ट[4]॥

---

१ A. om. from सर्वेषां.
२ सर्वत्रात्मनेपदे F.
३ F. om. from चक्रे.
४ धोचीष्ट B. F.; [धोषीष्टेति धून् कम्पने Tril.].

## सप्तम्यां च ॥ २३ ॥

सर्वेषां धातूनां[१] सप्तम्यां च परस्मैपदे[२] गुणो न भवति। स्तुयात्। चिनुयात्। दुह्यात् ॥

## हौ च ॥ २४ ॥

सर्वेषां धातूनां हौ[३] परे गुणो न भवति। नुहि। दुग्धि। प्राप्नुहि ॥ चिनु। सुनु। प्रत्ययलोपलक्षणत्वात् ॥ कथम् एहि। आङ एत्वमिति ॥

## तुदादेरनि ॥ २५ ॥

तुदादेरनि गुणो न भवति। तुदति। नुदति ॥

## आमि विदेरेव ॥ २६ ॥

विदेरेवामि परे गुणो न भवति। विद ज्ञाने। विदाञ्चकार॥ विदेरेवेति किम्। ओषाञ्चकार[४]। जागराञ्चकार ॥

## कुटादेरनिनिचट्सु ॥ २७ ॥

कुटादेर्गणस्य इन्इच्अटो वर्जयित्वान्येषु प्रत्ययेषु गुणो न भवति। उत्कुटिता। उत्कुटितुम्। उत्कुटिष्यति। उत्पुटिता। उत्पुटितुम्। उत्पुटिष्यति ॥ कुटादेरिति किम्। लेखनीयम् ॥

---

१ A. adds विकरणानां च.
२ Om. F.; B. om. च.
३ B. adds च.
४ Om. B. F.

अनिनिचट्खिति किम् । उत्कोटयति । उद्कोटि । उच्चुकोट ॥ कथं पृच्छनीयम्[1] । रूढित्वात् ॥

## विजेरिटि ॥ २८ ॥

विजेरिटि परे गुणो न भवति । ओविजी । उद्विजिता । उद्विजितुम् । उद्विजिष्यते[2] ॥ कथम् उद्वेजिता । इना सिद्धम् ॥

## स्थादोरिरद्यतन्यामात्मने ॥ २९ ॥

स्थादासंज्ञकयोरद्यतन्यामात्मनेपद इर्भवति । समस्थित । समस्थिषाताम् । अदित । अदिषाताम् । अधित । अधिषाताम् ॥ आत्मन इति किम् । अस्थात् । अदात् । अधात् ॥

## मुचादेरागमो नकारः स्वरादनि विकरणे ॥ ३० ॥

मुचादेर्गणस्य स्वरात्परो नकारागमो भवति । अनि विकरणे[3] परे । मुञ्चति । लुम्पति ॥ विकरण इति किम् । अमुचन् ॥

## मस्जिनशोर्धुटि ॥ ३१ ॥

मस्जिनशोः स्वरात्परो नकारागमो भवति धुटि परे । मङ्क्ता[4] । मङ्क्ष्यति । नंष्टा[5] । नङ्क्ष्यति ॥

---

१ प्रच्छनीयं B.
२ उद्विजिष्यति F.
३ Om. B.; A. om. परे.
४ मङ्त्का A.
५ नष्टा A.; नंता B.

## रधिजभोः स्वरे ॥ ३२ ॥

रधिजभोः स्वरात्परो नकारागमो भवति स्वरे परे। रन्धयति। अरन्धि। जम्भयति। अजम्भि ॥

## नेटि रधेरपरोक्षायाम् ॥ ३३ ॥

रधेरिटि परे नकारागमो न[1] भवति। अपरोक्षायाम्। रधिता। रधिष्यति। रधितव्यम् ॥ अपरोक्षायामिति किम्। ररन्धिव। ररन्धिम ॥

## रभिलभोरविकरणपरोक्षयोः ॥ ३४ ॥

रभिलभोः स्वरात्परो नकारागमो भवति। अविकरणपरोक्षयोः स्वरे परे। आरम्भयति। आरम्भि। आरम्भो वर्तते। आलम्भयति। आलम्भि[2]॥ अविकरणपरोक्षयोररिति[3] किम्। आरभते। आलभते। रेभे। लेभे ॥

## हुधुड्भ्यां हेर्धिः ॥ ३५ ॥

हुधुड्भ्यां परस्य हेर्धिर्भवति। जुहुधि। चकाद्धि। भिन्द्धि। छिन्द्धि ॥ भिन्त्तात्। छिन्त्तात्[4]। परत्वात् तातण् ॥ भिन्द्धकि। छिन्द्धकि[5]। पश्चादक् ॥ कथं रुदिहि[6]। स्वपिहि। सेट्कत्वात् ॥

---

१ A. B. om. च.

२ अलम्भि A.; B. om. from आलम्भयति.

३ अविकरणसंज्ञयोरिति B.

४ भिन्ध्यात्। छिन्ध्यात्। B.

५ भिन्द्धकि। छिन्द्धकि। B.

६ रुधिहि B.

अस्तेः ॥ ३६ ॥

अस्तेः परस्य हेर्धिर्भवति । अस । एधि । नित्यत्वादन्तरङ्गत्वादेत्वे सति वचनम्(१) ॥

शा शास्तेश्च ॥ ३७ ॥

शास्तेः परस्य हेर्धिर्भवति । शास्तेश्च शा(२) भवति । शाधि ॥ अचेति कृत इत्वं स्यात् ॥

लोपोऽभ्यस्तादन्तिनः ॥ ३८ ॥

अभ्यस्तात्परस्यान्तेर्नकारस्य लोपो भवति । ददति । ददतु । जाग्रति(३) । जाग्रतु(३) ॥ नलोपः साध्य इत्यनुक्तः ॥

आत्मने चानकारात् ॥ ३९ ॥

अनकाराच्चात्मनेपदेऽन्तेर्नकारस्य लोपो भवति । कुर्वते । कुर्वताम् । लुनते । लुनताम् । व्यतिलाते । व्यतिलाताम् ॥ अनकारादिति किम् । पचन्ते(४) । पच्यन्ते ॥

शेते रिरन्तेरादिः ॥ ४० ॥

शेतेः परस्यान्तेरादि रिर्भवति(५) । शेरते । शेरताम् । अशेरत ॥ अन्तिग्रहणमन्तिनो(६) रिरादिर्मा भूत् ॥

वेत्तेर्वा वक्तव्यम् । संविदते(७) । संविद्रते ॥

---

१ °अन्तरङ्गत्वाद्वा एत्वे° B.; °अन्तरङ्गत्वादेत्वमिति वचनम् ॥ F.

२ शादेशो B.

३ जक्षति । जक्षतु । F.

४ पठन्ते A. B.; MS. Tril. E.

५ Thus A. B.; °आदि रिर्भवति F.

६ अन्तग्रहण° A.

७ संदरिद्रते । B.

## आकारादट औ ॥ ४१ ॥

आकारात्परस्य अट(१) और्भवति । पपौ । तस्थौ ॥

आशिषि तुह्योस्तातण्(२) वा वक्तव्यम् । जीवतु । जीवतात् । जीव त्वम् । नन्दतु । नन्दतात् । नन्द त्वम्(३) । छिन्त्तात्(४) । कुरुतात् ॥ णकारोऽगुणार्थः ॥

## ॠदन्तस्येरगुणे ॥ ४२ ॥

ॠदन्तस्य धातोः श्रुतस्य स्थानिनोऽन्तरतमोऽगुणे प्रत्यये परे(५) इर्भवति । चिकीर्षति । जिहीर्षति । तितीर्षति ॥ ॠदन्तस्येति किम् । चक्रतुः ॥ कीर्तीषोः किश्च [का० ४. ५. ८६] इति निर्देशात् । कीर्तयति ॥

## उरोष्ठ्योपधस्य(६) च ॥ ४३ ॥

ओष्ठ्योपधस्य(७) धातोॠदन्तस्यागुणे प्रत्यये परे उर्भवति । पुपूर्षति । मुमूर्षति । बुभूर्षति । बोभूर्यते ॥ दन्त्योष्ठ्यादपि । प्राविवूर्षति । संवुवूर्षति ॥ धातोरोष्ठ्योपधस्येति किम् । ॠ गतौ । समीर्णः ॥

---

१ परे अट F.
२ °तातन् B. F.; तुह्यो तन् A.
३ B. om. from नन्दतु.
४ भिन्द्यात् । छिन्दात् । B.; F. om. from नन्द त्वम्; F. adds एवं, B. कथं before कुरुतात्.
५ A. om. प्रत्यये परे.
६ उरुष्ठोपधस्य A.; उरष्ठ्योपधस्य B.
७ उरुष्ठोपधस्य A.

## इन्यसमानलोपोपधाया ह्रस्वश्चणि ॥ ४४ ॥

अविद्यमानसमानलोपोपधाया ह्रस्वो भवति। इनि चण्परे[१]। अचीकरत्। अजीजपत्। अलीलवत्॥ इन्ग्रहणमिन्सामान्यार्थम्। तेन वादितवन्तं प्रयोजितवान्। अवीवदद्वीणां परिवादकेन। इत्यसमानलोपतैव॥ असमानलोपोपधाया इति किम्। अससामत्॥ उपधाया इति किम्। अचकाङ्क्षत्॥ कथं गोनावमाख्यातवान्। अजुगोनत्। औतः स्थानिवद्भावात्॥

## न शास्वृदनुबन्धानाम् ॥ ४५ ॥

शासेर्ऋदनुबन्धानां चोपधाया ह्रस्वो न भवति। इनि चण्परे। अशशासत्। अडुढौकत्[२]॥ शासेरिति किम्। आङः शास इच्छायाम्। आशीशसत्[३]॥ ओणेर्ऋदनुबन्धो ज्ञापनार्थः॥ नित्यमपि द्विर्वचनं ह्रस्वत्वेन बाध्यते। तेन मा भवानटिटत्[४]॥

भ्राजृ। भ्रासृ। भासृ[५]। एषामृदनुबन्धो नाद्रियते[६]। भ्राज अबिभ्रजत्। भ्रास अबिभ्रसत्[७]। भास अबीभसत्। दीप अदीदिपत्। जीव अजीजिवत्। मील अमीमिलत्। पीड अपीपिडत्। कण अचीकणत्[८]। वण अवीवणत्। भण अबीभणत्। अण

---

१ चपरे। A.
२ A. adds अतुत्रौकत्।
३ आङ शास आशीशसत् F.
४ A. adds इ[ति] सिद्धं.
५ भ्राजृ। भ्राशृ। A.; A. B. om. भासृ.
६ एष ऋद० A.; ०ऋदनुबन्धा नाद्रियंते F.
७ भ्राश अबिभ्रशत् A.
८ क्वण अचीक्वणत् F.

अशीश्रणत् । हेठ अजीहिठत् । लुप्लृ अलूलुपत् ॥ भ्राजनं भ्राजस्तमचीकरत् । अबभ्राजत् । समानलोपत्वात्[१] । तेन भ्राजादीनां वेति न वक्तव्यम् ॥

## लोपः पिबतेरीच्चाभ्यासस्य ॥ ४६ ॥

पिबतेरुपधाया लोपो भवति । अभ्यासस्येच्च भवति । इनि चण्परे । अपीप्यत् ॥ पिबतेरिति किम् । पै ओवै । अपीपयत् ॥ पा रक्षणे[२] । अपीपलत् ॥

## तिष्ठतेरित् ॥ ४७ ॥

ह्रस्व इकारोऽभ्यासस्येह । तिष्ठतेरुपधाया इद् भवति । इनि चण्परे । अतिष्ठिपत् ॥

## जिघ्रतेर्वा ॥ ४८ ॥

जिघ्रतेरुपधाया इद् भवति वा । इनि चण्परे । अजिघ्रिपत् । अजिघ्रपत् ॥ कथम् अवीवृधत् । अववर्धत् । अमीमृजत् । अममार्जत् । अचीकृपत् । अचकल्पत् । अचीकृतत् । अचिकीर्तत्[३] । इनि चणि[४] ऋवर्णस्य संज्ञापूर्वकत्वात् कीर्तीषोः क्विस्य [का० ४. ५. ८६] इति ज्ञापकस्यानित्यत्वात् ॥

॥ इति दौर्गसिंह्यां वृत्तावाख्याते पञ्चमः पादः समाप्तः ॥

---

१ Om. A.

२ A. om. पा०

३ अचकर्तत् । F.

४ B. adds ऋदन्तस्य.

अनिदनुबन्धानामगुणेऽनुषङ्गलोपः ॥ १ ॥

अनिदनुबन्धानां धातूनामगुणे प्रत्यये परेऽनुषङ्गलोपो भवति । अस्यते । ध्वस्यते । नष्टः । नष्टवान् ॥ अनिदनुबन्धानामिति किम् । ग्रङ्क्यते । वङ्क्यते । अत एव वर्जनादिदनुबन्धानां नोऽस्तीति ॥ तथा च वृंहणमिति स्वरान्तत्वान्नत्वं स्यात् । नञा निर्दिष्टस्यानित्यात्(१) ॥

लङ्गिकम्प्योरुपतापशरीरविकारयोः स्यात् । विलगितः । विकपितः ॥

तृन्फादीनां शुन्फान्तानामनि न च लुप्यते । तृफ तृन्फ तृफौ । तृम्फतीत्यादि(२) ॥

नशब्दाच्च विकरणात् ॥ २ ॥

अनिदनुबन्धानां(३) चकारेण योगः । परेऽगुण इति सामान्यम् । इदनुबन्धानामनिदनुबन्धानां च(४) गुणिन्यगुणे च नशब्दाच्च विकरणादनुषङ्गस्य लोपो भवति । भनक्ति । भङ्क्तः । भञ्जन्ति । हिनस्ति । हिंस्तः । हिंसन्ति ॥

परोक्षायामिन्धिश्रन्थिग्रन्थिदन्भीनामगुणे ॥ ३ ॥

इन्ध्यादीनां परोक्षायामगुणे परतोऽनुषङ्गस्य लोपो भवति । समीधे । समीधाते । समीधिरे । वचनादाम् नास्ति ॥ श्रेथतुः ।

---

१ निर्दिष्टमनित्यत्वात् B.
२ F. reads तृन्फ° तृफ°
३ F. adds धातूनां.
४ B. adds धातूनां.

येथतुः । देभतुः ॥ इन्ध्यादीनामेवेति नियमात् । श्रस्रंसे(१) । बभञ्जतुः ॥

## दन्शिसन्जिस्वन्जिरन्जीनामनि(२) ॥ ४ ॥

दन्श्यादीनाम्(३) अनि विकरणेऽनुषङ्गस्य लोपो(४) भवति। दशति । सजति । परिष्वजते । रजति ॥ कथं परिष्वजेते । अन्तरङ्गत्वात् स्थानिवद्भावाच्च ॥ दन्श(५) दशन इति निर्देशात्(६) । दशनम् ॥ कथम् अभञ्जि । अभाजि । भजेरिचि भञ्जनेऽपि वृत्तिः ॥

## अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु ॥ ५ ॥

धातोरुपधाया अस्य दीर्घो भवति । नामिनां च वृद्धिर्भवति । इन् । इच् । अट् । एषु परतः । पाचयति । अपाचि(७) । पपाच । लावयति । अलावि । लुलाव । नाययति । अनायि(७) । निनाय । कारयति । अकारि । चकार ॥ धातोरिति किम् । त्वचयति(८)॥ कथं पटुमाख्यातवान् । अपीपटत् । वृद्धौ सन्ध्यक्षरलोपः । धातोर्नामिनो(९) गुणे सत्युपधाया दीर्घः सिद्धः ॥ नामिग्रहणं लिङ्गार्थमेव बहुवचनं वा ॥ कथम् अचकलत् । अजहलत् । संज्ञापूर्वकत्वाद् वृद्धिरनित्येति समानलोपत्वात् सन्वद्भावो

---

१ सश्रंसे B.
२ दन्सि० MSS.
३ दन्स्य० MSS.; A. adds धातूनाम्.
४ अनुषङ्गलोपो.
५ दन्स F.
६ ज्ञापकात् A.
७ अपचि ।०। अनयि । A.
८ Om. A.
९ ०नामिनां F.; नामिने B. and om. गुणे.

न स्यात्॥ तथा। अस्युत्तमे वा। अहं पपच। अहं पपाच। अहं निनय। अहं निनाय। अहं लुलव। अहं लुलाव। अहं चकर। अहं चकार॥

## सिचि परस्मै स्वरान्तानाम्॥ ६॥

परस्मैपदे सिचि परतः स्वरान्तानां धातूनां[१] वृद्धिर्भवति। नामिन एव। अरावीत्। अलावीत्। अचैषीत्। अनैषीत्॥ अर्थात् स्वरान्तग्रहणमुपदेशार्थं तेन। उदवोढाम्॥ सिचीति किम्। नवाव॥ परस्मा इति किम्। अच्योष्ट॥

ऊर्णोतेर्वा। प्रौर्णावीत्। प्रौर्णवीत्॥

## व्यञ्जनान्तानामनिटाम्॥ ७॥

परस्मैपदे सिचि परतो व्यञ्जनान्तानां धातूनामनिटां नामिनो वृद्धिर्भवति। उपधाया एव। अभैत्सीत्। अरौत्सीत्। अतार्प्सीत्[१]॥ अनिटामिति किम्। अकोषीत्॥

## अस्य च दीर्घः॥ ८॥

परस्मैपदे सिचि परतो व्यञ्जनान्तानां धातूनाम्[२] अनिटामस्य च दीर्घो भवति। अपाक्षीत्॥ पृथग्योगात्। अभाङ्क्षीत्॥

## वदव्रजरलन्तानाम्॥ ९॥

परस्मैपदे सिचि परतो वदिव्रज्यो रलन्तानां धातूनामस्य[३]

---

१ Om. A.
२ Om. F.
३ वदव्रजरलन्तानामस्य F.

च दीर्घो भवति। अवादीत्। अव्राजीत्। अचारीत्। अचालीत्॥ कथम् अवभ्रीत्। अश्वलीत्। नाकारस्य रलन्ततेति॥ व्यञ्जादीनां सेटामनेदनुबन्धह्म्यन्तक्षणश्वसां वेति। अरणीत्। अराणीत्॥ एदनुबन्धादीनां(१) च। कगे। अकगीत्॥ ग्रह। अग्रहीत्॥ टुवम। अवमीत्॥ व्यय। अव्ययीत्॥ क्षण। अक्षणीत्॥ श्वस। अश्वसीत्॥ अनिटामिति नञा निर्दिष्टस्यानित्यत्वात्॥

**श्विजाग्रोर्गुणः॥ १०॥**

सिचि परस्मैपदे श्विजाग्रोर्गुणो भवति। अश्वयीत्। अजागरीत्॥ वृद्धेरपवादः॥

**अर्तिसर्त्योररणि॥ ११॥**

अर्तिसर्त्योररणि(२) गुणो भवति। मा भवानरत्। असरत्॥ कथम् अजरत्। अदर्शत्। ऋवर्णस्योपलक्षणत्वात्(३)॥

**जागर्तेः कारिते॥ १२॥**

जागर्तेः कारिते परे गुणो भवति। जागरयति॥

**यणाशिषोर्ये॥ १३॥**

जागर्तेर्यणाशिषोर्ये परे गुणो भवति। जागर्यते। जागर्यात्॥ य इति किम्। जागरिषीष्ट। इड्वेज्वक्षेति वृद्धिः स्यात्॥

---

१ एदनुबन्धानां A.
२ A. adds परे.
३ ऋकारस्योप० A.

परोक्षायामगुणे ॥ १४ ॥

जागर्तेः परोक्षायामगुणे गुणो भवति । जजागरतुः । जजागरुः ॥ अगुण इति किम् । जजागार ॥

ऋतश्च संयोगादेः ॥ १५ ॥

संयोगादेर्धातोर्ऋतश्च परोक्षायामगुणे गुणो भवति । सस्मरतुः । सस्मरुः ॥ कथं संचस्करतुः । संचस्करुः । असिद्धं बहिरङ्गमन्तरङ्गमित्यनित्येयम् ॥

ॠदन्तानां च ॥ १६ ॥

ॠदन्तानां च परोक्षायामगुणे गुणो भवति । तेरतुः । तेरुः । विशशरतुः । विशशरुः । विददरतुः । विददरुः । निपपरतुः । निपपरुः ॥ कथं विशश्रतुः । विशश्रुः[1] । विदद्रतुः[1] । विदद्रुः । निपप्रतुः । निपप्रुः । शॄदॄप्रामर्थे आद्राप्राश्च वर्तन्ते ॥

ऋच्छ ऋतः ॥ १७ ॥

पुनर्ग्रहणं गुणार्थम् । ऋच्छ ऋतः स्थाने परोक्षायां गुणिन्यगुणे च गुणो भवति । आनर्च्छ । आनर्च्छतुः । आनर्च्छुः ॥ कथम् आरतुः । नित्यत्वान्निमित्ताभावाद्वा नागमविघातः स्यात् ॥

शीङः सार्वधातुके ॥ १८ ॥

शीङः सार्वधातुकेऽगुणे गुणो भवति । एकवर्णत्वाद्वर्णान्ते । शेते । शयीत । शेताम् । अशेत[2] ॥

---

१ Om. A.  २ अशेताम् ॥ A.

अयीर्ये ॥ १९ ॥

शीङ ईकारोऽय् भवति(१) ये परे। शय्यते। अधिशय्य गतः॥ कथं समुह्यते। समुह्य गतः। ऊहत्यर्थे(२) वहिरिति॥ अगुणे ये तु सोपसर्गस्य ऊहतेर्निवृत्तिरभिधानात्। तेन ह्रस्वो न वाच्यः(३)॥

आयिरिच्यादन्तानाम् ॥ २० ॥

आदन्तानां धातूनामिचि पर आयिर्भवति निर्दिष्टस्यातः स्थाने। अस्थायि। अदायि(४)। दायिष्यते। अदायिषत(५)। दायिषीष्ट। दायिता। इड्वेज्वच्चेति॥

शाछासाह्वाव्यावेपामिनि ॥ २१ ॥

शाछासाह्वाव्यावेपाम्(६) इनि पर आयिर्भवति। शो शाययति। छो छाययति। सो साययति। ह्वेञ्(७) ह्वाययति। व्येञ्(७) संव्याययति(८)। वेञ् वाययति(९)। पा पाने। पै ओवै(१०)। पाययति॥

अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यादन्तानामन्तः(११) पो यलोपो गुणश्च नामिनाम् ॥ २२ ॥

अर्त्यादीनामादन्तानां च इनि परे पकारोऽन्तो भवति।

१ B. adds अगुणे.
२ उहत्यर्थे F.
३ B. om. from तेन.
४ B. adds स्थायिष्यते।
५ अदयिष्यत A.; om. B.
६ F. adds आदन्तातां.
७ ह्वेङ० वेञ B.
८ व्याययति A.
९ F. om. from वेञ०
१० पै ओवा A.; पै ओ F.
११ ०क्नुयी० MSS.

यथासंभवं यलोपो गुणश्च नामिनाम्। तिपा धातुरेव[1] निर्दिश्यते। अर्पयति। ह्रेपयति। ब्लेपयति। री रेषणे रीङ् श्रवणे वा। रेपयति। क्नोपयति। क्ष्मापयति। स्मापयति[2]। क्रापयति। अध्यापयति॥

## पातेर्लोऽन्तः॥ २३॥

पातेरिनि परे लकारोऽन्तो भवति। पालयति। पल रक्षणे चौरादिकोऽप्यस्ति पातेरायिः स्यादिति वचनम्॥ पुनरन्तग्रहणम् आदेशो वा स्यादिति॥

## धूञ्प्रीणात्योर्नः[3]॥ २४॥

धूञ्प्रीणात्योरिनि[3] परे नकारोऽन्तो भवति। धूनयति। प्रीणयति॥ धूञ्प्रीणात्योरिति किम्। धू विधूनने। विधावयति। प्रीङ् प्रीतौ। प्राययति॥

घृतं विलीनयति। विलीनं करोतीतीन्[4]। घृतं विलाययति। ललते रूपं। स्नेहद्रवीकरणे लियः कारिते वृत्तिर्वास्त्यनभिधानात्[5]॥

पक्षेणोपवाजयतीति वजते रूपम्। वाधातोः कम्पने कारिते न[6] वृत्तिः॥

सत्यार्थवेदानामन्त आप्[7] कारित एव चुरादौ। सत्यापयति।

---

१ नामिनां भवति तिपा धातुमात्रं F.
२ Om. A.; F. adds विस्मापयति.
३ ॰णः।॰ इणि A.
४ करोतीत्यर्थः। A.
५ वृत्तिर्नास्त्य॰ F.; ॰वास्त्यभिधानात् A.
६ B. om. कारिते न.
७ आप्ति A.

अर्थापयति । वेदापयति ॥ कथं कारापयति । वर्णापयति[१] । शब्दापयति । आपनमापः कारस्यापः कारापः तं करोतीतीन् । हेतौ साधुस्तेद्वक्तव्यं वा ॥

स्फायेर्वादेशः ॥ २५ ॥

स्फायेरिनि परे वादेशो भवति । स्फावयति । आगमः स्यादित्यादेशवचनम् ॥

शदेरगतौ तः ॥ २६ ॥

शदेरगत्यर्थस्य इनि परे त आदेशो भवति । फलानि शातयति[२] ॥ अगताविति किम् । गाः शादयति । गमयतीत्यर्थः ॥ रुह्यर्थे रुपिरिति व्रीहीन् रोपयति[३] । कायमध्यारोपयति । अर्थं[४] समारोपयति ॥ रुहेस्तु । रोहयति । आरोहयति हस्ती हस्तिपकम्[५] ॥

हन्तेस्तः ॥ २७ ॥

हन्तेरिनि परे तकारोऽन्तो भवति[६] । घातयति ॥ पुनस्तग्रहणं गत्यर्थम्[७] । तेन शस्याद् गां घातयति[८] । गमयतीत्यर्थः ॥

---

१ Om. A.
२ शतयति A.
३ व्रहीमारोपयति A.
४ अन्नं F.
५ हस्तों हस्तीपकं B.
६ ॰परे नकारस्य तकारो भवति B.
७ गत्यर्थं स्यात् B.
८ F. om. शस्याद्; B. om. श॰गां.

हस्य हन्तेर्घिरिनिचोः ॥ २८ ॥

हन्तेर्हस्य इनिचोः परतो घिर्भवति। घातयति। अघानि॥ हान्तस्य धातोर्विशेषणं स्यादिति पुनर्हन्तिग्रहणम्(१)॥

लुप्तोपधस्य च ॥ २९ ॥

हन्तेर्लुप्तोपधस्य च हस्य घिर्भवति। घ्नन्ति। आघ्नते॥ लुप्तोपधस्येति किम्। क्लेशापहः। तमोपहः(२)॥

अभ्यासाच्च ॥ ३० ॥

अभ्यासात्परस्य हन्तेर्हस्य घिर्भवति। जघान॥ हन्तेरभ्यासादिति किम्। हननीयितुमिच्छति(३)। जिहननीयिषति॥ हेरचणीति वक्तव्यम्। जिघीषति। प्रहाययितुमिच्छति। प्रजिघाययिषति॥ अचणीतिवचनात्। प्राजीहयत्॥

जेर्गिः सन्परोक्षयोः ॥ ३१ ॥

जयतेः सन्परोक्षयोर्गिर्भवति। जिगीषति। जिगाय। विजिग्ये॥ जिनातेर्लाक्षणिकत्वात्। जिज्यतुः॥

चेः कि वा ॥ ३२ ॥

चिञः सन्परोक्षयोः किर्भवति वा। चिकीषति। चिचीषति।

---

१ A. adds वृंहयति.

२ B. adds अपात् क्लेशतमसोरिति डः।

३ हननीतुम्° A.

चिकाय। चिचाय। चिक्ये। चिच्ये॥ कि कित ज्ञाने परस्मैपदीति वचनम्॥

## मणोऽलोपः स्वरेऽबहुत्वे॥ ३३॥

मणोऽकारस्य लोपो भवति। अबहुत्वे स्वरे। अधुच्चाताम्। अधुच्चाथाम्। अधुच्चि॥ स्वर इति किम्। अधुच्चत॥ अबहुत्वमिति किम्। अधुच्चन्त। अकारान्तत्वान्नलोपो न स्यात्॥

## दरिद्रातेरसार्वधातुके॥ ३४॥

तिपा धातुरेव(१) निर्दिष्टः। दरिद्रातेरसार्वधातुकमात्रेऽन्तस्य लोपो भवति। दरिद्रयति। अदरिद्रि। दरिद्रो वर्तते। दरिद्र्यते। दरिद्र्यात्॥ कथं दरिद्रेयम्। आत्वनोरिच्च [का० ४. २. १२] इति परत्वादेति(२) मण्डूकप्लुत्या युण्वोरनिटि(३) सनि च न स्यात्। दरिद्राणम्। दरिद्रायकः। दिदरिद्रासकः॥

## भ्रस्जिमस्जोर्धुटि॥ ३५॥

भ्रस्जिमस्जोर्धुटि(४) परेऽन्तस्य लोपो भवति। भ्रष्टा। भ्रक्ष्यति। मङ्क्ता। मङ्क्ष्यति। नागमेऽन्तरङ्गत्वात् सस्य तृतीये सति पश्चाल्लोपः॥ धुटीति किम्। भृज्ज्यते॥

---

१ धातुमात्रं A.
२ °वेति यः B.
३ युच्वोर° F.; युण्वोर° B.
४ अनयोर्धुटि F.

यन्योकारस्य ॥ ३६ ॥

धातोरोकारस्य लोपो भवति। यनि परे[१]। द्यति। स्यति॥ यनीति किम्। उपोयते। परनिमित्तादेशः पूर्वस्मिन् स एव॥

आकारस्योसि ॥ ३७ ॥

धातोराकारस्य लोपो भवति। उसि परे। उदगुः। अदुः॥ अरुः। अलुः॥

सन्ध्यक्षरे च ॥ ३८ ॥

धातोराकारस्य लोपो भवति। सन्ध्यक्षरे च परतः[२]। व्यतिरे। व्यतिले॥

अस्तेः[३] सौ ॥ ३९ ॥

अस्तेः[३] सौ परेऽन्त्यस्य लोपो भवति। असि॥ कथम् आशीः। लाक्षणिकत्वात्॥ आध्वम्[४]। आशाध्वम्[५]। इति सस्य तृतीयेऽपि ध्व उच्चारणस्याभेदात्॥
ह एकारे वक्तव्यः। व्यतिहे॥ कथम् ईहामासे। तिपा धातुस्वरूपनिर्देशात्[६]॥

असन्ध्यक्षरयोरस्य तौ तल्लोपश्च ॥ ४० ॥

इह धातुप्रस्तावेऽकारसन्ध्यक्षरयोः परयोरकारस्य[७] ता-

१ उसि परे B.
२ परे। A.; om. B.
३ आस्तेः A.
४ आद्धं MSS.
५ आशाद्धम् A.; आसाद्धं B.; आसाध्वं F.
६ धातु is omitted by F., supplied by A.
७ परतोऽका० F.; वर्णयोराकारस्य A.

वकारसन्ध्यक्षरे वर्णौ भवतः । यथासंख्यम् । तयोश्च निमित्तभूतयोर्लोपो(१) भवति । चिकीर्षति । दीव्यन्ति । पच्यन्ते । पचे ॥ अस्येति किम् । यान्ति ॥ असन्ध्यक्षरयोरिति किम् । पचति ॥ अस्य लोप इति सिद्धे तौ तल्लोपश्चेति किम् । पच्यन्ते । नलोपो मा भूत् ॥

दीधीवेव्योरिवर्णयकारयोः ॥ ४१ ॥

दीधीवेव्योरन्तस्य लोपो भवति । इवर्णयकारयोः परयोः(२) । आदीधिता । आवेविता । आदीधीत । आवेवीत(३) । आदीध्यते । आवेव्यते ॥ न(४) यथासंख्यमिहेति न तु प्रत्येकं धातवो द्विवचनात् ॥

नामिव्यञ्जनान्तादायेरादेः ॥ ४२ ॥

नाम्यन्ताद् व्यञ्जनान्ताच्चायेरादेर्लोपो भवति । अग्नीयते । रैयते(५) । विदुष्यते । अनुडुह्यते ॥ ब्राह्मणीवाचरति । नित्यत्वात् पुंवद्भावः । ब्राह्मणायते ॥ संनिपातलक्षणं स्यादिति नामिग्रहणम् ॥

गमहनजनखनघसामुपधायाः स्वरादावनण्यगुणे ॥ ४३ ॥

गमादीनामुपधायाः स्वरादावण्वर्जितेऽगुणे(६) लोपो भव-

---

१ A. om. निमित्त.
२ परतः F.
३ आदीधीत् । आवेवीत् B.
४ F. om. न.
५ F. adds पट्टयते.
६ स्वरादावनखगुणे A.

ति। जग्मतुः। जग्मुः[१]। जघ्नतुः। जघ्नुः। जनी जन जज्ञे। चख्नतुः। चख्नुः। जक्षतुः। जक्षुः[१] ॥ स्वरादाविति किम्। गम्यते ॥ अनणीति किम्। अगमत्। अघसत् ॥ अगुण इति किम्। गमिष्यति ॥

## कारितस्यानामिड्विकरणे[२] ॥ ४४ ॥

आमिड्विकरणादन्यस्मिन् प्रत्यये कारितस्य लोपो भवति। अचीकरत्। अचीकमत[३]। अररचत्। कार्यते। कारणा। उदपादि[४]। यलादयो बाध्यन्ते ॥ अनामिड्विकरण इति किम्। कारयामास। कारयिता। कारयति। अहं कारये। तद्भावादन्तरङ्गत्वाच्च गुणः ॥

## यस्यापत्यप्रत्ययस्यास्वरपूर्वस्य यिन्आयिषु ॥ ४५ ॥

यिन्आयी द्वौ बहुवचनं गणार्थम्। यस्येत्यकार उच्चारणार्थः। अपत्यप्रत्ययसंबन्धिनो यस्यास्वरपूर्वस्य यिन्आयितद्धितानात्स्वरच्चिस्त्रीकारेषु[५] लोपो भवति। गार्गीयति[६]। गार्गीयते[७]। गार्ग्ये साधुर्गार्ग्य[८] इति श्रुतेरभेदात्। कुरोर्णकारादेश्च ढ्यादपत्यमात्रे गर्गादित्वाद् ण्यः। कौरव्यस्यापत्यमितीन्

---

१ F. om. जग्मुः। जघ्नुः etc.
२ °इडि विकरणे A.
३ अचीकमत् A. B. against Tril.; B. adds अपीपचत्।
४ F. adds समपादि, B. परत्वाद् यला°
५ °तद्धितात् स्वर° B.; °तद्धिताद्विधानात् स्वर° F.
६ गार्गायति A.
७ गार्गायते A. B.
८ गार्गसाधु° B.

कौरविः । नैषादिः[1] । गार्ग्यस्यायं[2] गार्गीयः । गार्गाणां समूहो गार्गकम् । समूहेऽकण् । कथं राजन्यकम् । गणकृतमनित्यमिति गार्गी स्यात् । गार्गी स्त्रीगणे ॥ अनात्स्वर इति किम् । गार्ग्यायणः ॥ यिन्आयिष्विति किम् । गार्ग्यमाचष्टे गार्ग्ययति ॥ यिन्आयीष्विति[3] न्याय्यः पाठः । तद्धितानामाकृतिप्रधानत्वात् । तथा च[4] सोमो देवताऽस्याः सौमी ऋक् च दृश्यते ॥ अस्वरपूर्वस्येति किम् । आत्रेयीयति । आत्रेयायते । आत्रेयीस्यात् । आत्रेयी स्त्री ॥

मत्स्यस्य यस्य स्त्रीकार ईये चागस्त्यसूर्ययोः ।
तिष्यपुष्ययोर्नक्षत्रे अनि[5] यस्य विभञ्जनात् ॥

[6]मत्सी । अगस्त्यस्यापत्यमित्यण् । आगस्त्यस्यायम् आगस्तीयः[7] । आगस्त्यस्येयम् आगस्ती । सूर्यस्यायं सौर्यः । तत्र भवः सौरीयः । सूर्यस्येयं सौरो दिक् । तैषमहः । तैषी[8] रात्रिः । पौषमहः । पौषी रात्रिः । गणात्पृथगायिरुत्तरार्थः[9] ॥

## नलोपश्च ॥ ४६ ॥

नकारो लुप्यते येन स नलोपो योगः । अर्थाद् यिन्आय्योर्नलोप एव करणीयः । विदुष्यति । विदुष्यते । एवं राजीयति ।

---

१ नैषदिः A. F.; नैषधिः B.
२ गार्गस्यायं A.
३ यिन्नायिष्विति B.
४ A. om. च.
५ ऽणि A.
६ B. adds मत्स्यस्य स्त्री.
७ आगस्ती F.
८ तेषी A.
९ °पृथगुत्तरार्थः F.

पयीयति ॥ पुंस्यतीत्यपि ॥ नियमः किम् । दीव्यतीत्यपि ॥ कथं चतुर्यति । अनडुह्यति । गीर्यति । धूर्यति । शब्दाश्रयत्वाद्विनियमः ॥ सर्पिष्यति । धनुष्यति । षत्वं[1] स्यादेव ॥ गोमत्यतीति क्विप् । कथं गोमान् । पचन् । पुमान् । यिन्आय्योर्धुटि प्रत्ययलोपस्यानित्यत्वादुदनुबन्धप्रन्तृङ्पुंसामेवेति ॥

**व्यञ्जनाद्दिस्योः[2] ॥ ४७ ॥**

धातोर्व्यञ्जनाद् दिस्योर्लोपो भवति । अधोक् । अलेट् ॥ कथं हंसि । साहचर्यात् ॥

**यस्यानि ॥ ४८ ॥**

यस्येत्यकार उच्चारणार्थः । व्यञ्जनात्परस्य धातोर्यस्यानि[3] प्रत्यये परे लोपो[3] भवति । बेभिदिता ॥ दृषदमिच्छत्याचरति वा । दृषदिता ॥ भिषज्यधातुः कण्ड्वादौ । भिषजिता ॥ यिन्आय्योर्नेच्छन्त्येके । तेनोभयप्रमाणत्वाद् विकल्प इति वक्ष्यमाणलोपोक्तेर्द्वियकारपाठाद्वा मव्यादीनामदोषः । मव्यिता । सूर्क्ष्यिता । ईर्ष्यिता ॥ व्यञ्जनादिति किम् । लोलूयिता । इनो लोपेऽयादेशे च । मोमूत्रिता[4] । शाशयिता ॥ धातोर्यस्येति किम् । पच्यते ॥ अनीति किम् । पापच्यते ॥

---

१ सत्वं B.; इति षत्वं F.
२ °दिस्याः B.
३ A. om. परे; धातोर्यशब्दस्यानि लोपो F.
४ मोमुत्रिता A. F.

## अस्य च लोपः ॥ ४९ ॥

धातोरकारस्यानिटि प्रत्यये परे लोपो भवति। चिकीर्षिता ॥ कुसुभं मगधं कर्ता। कुसुभिता। मगधिता ॥ विषयसप्तम्यपि। कण्डूः। लोलूः। यायावरः। तेनास्य च लोपे यलोपः स्यात्[१] ॥

## सिचो धकारे ॥ ५० ॥

सिचो धकारे परे लोपो भवति। अलविढ्वम्। अच्योढ्वम् ॥ अयन्ध्वमिति सस्य तृतीयेऽपि ध्व उच्चारणस्याभेदात् ॥

## धुटश्च धुटि ॥ ५१ ॥

धुटः[२] परस्य सिचो लोपो भवति। धुटि परे। अभित्त। अभित्थाः ॥ धुट इति किम्। अमंस्त ॥ धुटीति किम्। अभित्सा-ताम् ॥

## ह्रस्वाच्चानिटः[३] ॥ ५२ ॥

ह्रस्वात्परस्यानिटः सिचो लोपो भवति। धुटि परे। अकृत। अकृथाः। समस्थित। आहत ॥ ह्रस्वादिति किम्। अच्योष्ट ॥ नेटः परस्य वेति सुखार्थम्। तेन। अवारिष्टाम्। व्यद्योतिष्ट[४] ॥

## इटश्चेटि ॥ ५३ ॥

इटः परस्य सिचो लोपो भवति। ईटि[५] परे। अलावीत्।

---

१ यलोप एव स्यात् A.
२ धुटि F.
३ ह्रस्वाच्चानिटः B.
४ Om. F.
५ इटि B. F.

अकोषीत्॥ इट इति किम्। अभैत्सीत्॥ ईटीति[1] किम्। अकनिषम्॥

स्कोः संयोगाद्योरन्ते च॥ ५४॥

धातोः संयोगाद्योः सकारककारयोर्लोपो भवति धुट्यन्ते च। आरिप्सते। आलिप्सते। आचष्टे। भ्रष्टा। भ्रक्ष्यति॥ तक्षु। तष्टिः। क्तौ नेट्॥ अन्ते चेत्युत्तरार्थम्। भाषायामपि चेक्रीयितलुगन्तमित्येके। अबाभ्रट्॥ स्कोरिति किम्। अकार्ष्टाम्। मृज अमार्ट्॥ धुट्यन्त इति किम्। भ्रज्जते। आचक्ष्महे॥

चवर्गस्य किरसवर्णे॥ ५५॥

चवर्गस्य किर्भवति। असवर्णे धुट्यन्ते च॥ वक्ता। योक्ता। अनेनेक्। अवेवेक्॥ असवर्ण इति किम्। उच्छति। उज्झति॥

हो ढः॥ ५६॥

धातोर्हकारस्य[2] ढो भवति धुट्यन्ते च। लेढा। लेक्ष्यति। अलेट्[3]॥

दादेर्घः॥ ५७॥

धातोर्दादेरवयवस्य[4] हस्य घो भवति धुट्यन्ते च। अधोक्ष्यत्। अधोक्॥ कथं दोग्धा। आद्यन्तवद्भावात्॥

---

१ इटीति B. F.

२ धातोर्हस्य A.

३ F. adds धुट्यन्त इति किं। लिह्यति।

४ A. om. दादेर्.

नहेर्धः ॥ ५८ ॥

नहेर्हस्य धो[1] भवति धुड्यन्ते च। नद्धा। नत्स्यति। अनानत्॥

भृजादीनां षः ॥ ५९ ॥

भृजादीनामन्तः षो भवति धुड्यन्ते च। भ्रष्टा। भ्रक्ष्यति। स्रष्टा। स्रक्ष्यति। मार्ष्टा। अमार्ट्[2]। मार्क्ष्यति। यज यष्टा। राज् राष्टिः। भ्राज् भ्राष्टिः॥ भ्रस्जेर्भ्रज्जिरिहोपलक्षणम्। निपातनस्येष्टविषयत्वात्[3] संप्रसारणादन्यत्र विभाषा। भ्रष्टा[4]। भर्ष्टा। भ्रज्जनम्। भर्ज्जनम्॥ संप्रसारणे तु। भृज्जति। भृज्जते॥

छशोश्च ॥ ६० ॥

छशोश्च षो भवति धुड्यन्ते च। प्रष्टा। प्रक्ष्यति। क्रोष्टा। क्रोक्ष्यति। अचोक्रोट्॥ निमित्ताभावाद् द्विर्वा पाठः॥

भाषितपुंस्कं पुंवदायौ ॥ ६१ ॥

भाषितपुंस्कं पुंवद् भवति। आयौ परे[5]। ब्राह्मणीवाचरति। ब्राह्मणायते। श्येनी[6] श्येतायते। हरिणी हरितायते। एनी एतायते[7]। लोहिनी लोहितायते। श्येतैतहरितलोहितेभ्यस्तो न

---

१ नहेर्हकारस्य धकारो F.

२ अमार्ट् F.; मार्क्ष्यति A.

३ निपातनस्येष्टार्थत्वात् A.

४ विभाषेयम्। प्रष्टा। A.

५ परतः A.; आयौ प्रत्यये परे F.

६ B. adds श्येनायते.

७ A. om. एनी॰

इति नदादौ ॥ च्व्यर्थे तु न भवति गौणत्वात्। अलोहिनी लोहिनी भवति। लोहिनीयते। इत्यन्ये ॥ पुमानिव पुंवत् स्त्रीति लोकतः सिद्धम्। तत्राधिकारबलाद्[1] अमुख्यमपि नपुंसकं पुंवदिति[2]। तेनातिनूयते॥ भाषितः पुमान्यस्मिन्नर्थे इति समासात्। द्रोणीयते ॥ कथं श्वश्रूयते। श्वशुरस्य श्वश्रूरूङन्तो निपातनात्। नाम्नीभावत्वं[3] श्वशुरत्वम् अपि तु विशिष्टमेव रूढम् ॥ कथं गर्भीयते शालिः। अन्तर्वर्तित्वमात्रविवक्षयेति[4] ॥

## आदातामाथामादेरिः ॥ ६२ ॥

अकारात्परयोरातामाथामित्येतयोरादेरिर्भवति[5]। पचेताम्। पचेथाम् ॥ अकारादिति किम्। व्यत्यपाताम् ॥

## आते आथे इति च ॥ ६३ ॥

अकारात्परयोराते आथे इत्येतयोरादेरिर्भवति[5]। पचेते। पचेथे ॥ अविकृतनिर्देशात् स्वरे विकृतिर्नास्तीति। इति चैवंप्रकारे द्रष्टव्यः[6]। तेन पचावहे आवामिति स्वरे[7] विकृतिर्न स्यात् ॥

---

१ ॰वशाद् A.; तत्र नाम्यधिकाराद् F.
२ Om. A.
३ नास्तीभावत्वं A.; नास्ति अभा॰ B.
४ ॰विवक्षयति A.; ॰विवक्षेति B.
५ ॰एतयोः परयोरादिरिर्भ॰ A.
६ द्रष्टव्य इत्यर्थः। A.
७ पचाव आवा॰ B.; ॰आवामिह स्वरे A.; पचावहे इति वि॰ F.

## याशब्दस्य च सप्तम्याः ॥ ६४ ॥

अकारात्परस्य याशब्दस्य सप्तम्या[१] इर्भवति । पचेत् । पचेताम् । पचेः ॥ अकारादिति किम् । अद्यात् ॥

## याम्युसोरियमियुसौ[२] ॥ ६५ ॥

अकारात्परयोर्याम्युसोरियमियुसौ[२] भवतः । यथासंख्यम् । पचेयं । पचेयुः ॥ कथम्[३] आह । आहतुः । आहुः । आत्थ । आहथुः । ब्रुवस्त्यादिषु पञ्चसु निपाता वा ॥ तथा विदेर्णवसु । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म ॥

## शमादीनां दीर्घो यनि ॥ ६६ ॥

शमादीनां[४] दीर्घो भवति यनि परे । शाम्यति । दाम्यति ॥ मदीपर्यन्तः शमादिः ॥ यनीति किम् । शम्यते ॥

## ष्ठिवुक्लम्वाचमामनि ॥ ६७ ॥

एषामनि[५] परे दीर्घो भवति । ष्ठीवति । क्लामति । आचामति ॥ आङिति किम् । विचमति[६] । चमति ॥

---

१ Om. F.; B. om. याशब्दस्य.
२ °युसोर्° युसौ F.
३ Om. B. F.
४ A. adds धातूनां.
५ A. adds विकरणे.
६ Om. B.

क्रमः परस्मै ॥ ६८ ॥

क्रमः परस्मैपदेऽनि दीर्घो भवति। क्रामति ॥ कथं क्राम। हेर्लोपात् ॥ परस्मा इति किम्। पराक्रमते। उपक्रमते[१] ॥

गमिष्यमां छः ॥ ६९ ॥

सामान्यमनुवर्तते। एषामन्तस्य छो भवति। अनि परे[२]। गच्छति। संगच्छते। इच्छति। यच्छति। आयच्छते ॥

पः पिबः ॥ ७० ॥

पाधातोरनि परे[३] पिबादेशो भवति। पिबति ॥ अदन्तो वा। अनि पारूपस्येति किम्। पै ओवै[४]। पायति ॥

घ्रो जिघ्रः ॥ ७१ ॥

घ्राधातोरनि परे जिघ्रादेशो भवति। जिघ्रति ॥

ध्मो धमः ॥ ७२ ॥

ध्माधातोरनि परे धमादेशो भवति। धमति ॥

स्थस्तिष्ठः ॥ ७३ ॥

स्थाधातोरनि परे तिष्ठादेशो भवति। तिष्ठति ॥

---

१ B. om. from परस्मा°; A. gives only the example प्रक्रमते.

२ A. om. अनि परे.

३ B. F. om. परे in sûtras 70-80.

४ B. adds शोषणे.

म्नो मनः ॥ ७४ ॥

म्नाधातोरनि परे मनादेशो भवति । मनति ॥

दाणो यच्छः ॥ ७५ ॥

दाण्धातोरनि[1] परे यच्छादेशो भवति । यच्छति ॥

दृशेः पश्यः ॥ ७६ ॥

दृशेरनि परे पश्यादेशो भवति । पश्यति ॥

अर्तेर्ऋच्छः ॥ ७७ ॥

अर्तेरनि परे ऋच्छादेशो भवति । ऋच्छति ॥ तिब् निर्देशार्थ एव[2] ॥

सर्तेर्धावः ॥ ७८ ॥

सर्तेरनि परे धावादेशो भवति । धावति ॥ ननु धावु गतावप्यस्ति जवाभिधाने यथा स्यादिति वचनम् । तेन प्रियामनुसरति ॥

शदेः शीयः ॥ ७९ ॥

शदेरनि परे शीयादेशो भवति । शीयते ॥

सदेः सीदः ॥ ८० ॥

सदेरनि परे सीदादेशो भवति । सीदति ॥

---

१ दान० MSS.

२ तिपा धातुस्वरूपार्थः । A.; तिपः स्वरूपनिर्देशार्थ एव । B.; F. and Tril. as above.

जा जनेर्विकरणे ॥ ८१ ॥

जनेर्विकरणे जादेशो भवति। जनी[1]। जायते ॥ यणि तु ये वा स्यात्। जायते। जन्यते ॥

ज्ञश्च ॥ ८२ ॥

ज्ञस्य विकरणे जादेशो भवति[1]। जानाति ॥

प्वादीनां ह्रस्वः ॥ ८३ ॥

पूञादीनां विकरणे ह्रस्वो भवति। पुनाति। लुनाति ॥ ल्वी चेत्यतो ल्वादिप्वादिव्यवच्छित्तये वृत्[2] ॥ पूङस्तु पवते[3]। मूङ् मवते ॥

उतो वृद्धिर्व्यञ्जनादौ गुणिनि सार्वधातुके[4] ॥ ८४ ॥

धातोरुतो वृद्धिर्भवति। व्यञ्जनादौ गुणिनि सार्वधातुके परे। रौति। रौषि। रौमि। एवं नौति। स्नौति ॥ कथं जुहोति। जुहोतिरिति निर्देशात् ॥ धातोरिति किम्। सुनोति। तनोति ॥

ऊर्णोतेर्गुणः[5] ॥ ८५ ॥

परयोगेनात्र वा गम्यते। ऊर्णोतेर्व्यञ्जनादौ[5] गुणिनि सार्वधातुके परे गुणो भवति वा। प्रोर्णोति। प्रोर्णौति ॥

---

१ A. om. from जनी to भवति in S. 82.

२ व्यवस्थित्तये(!) A. B.; वृत्कारणं B.

३ पूङ गुण इति पवते। A.

४ गुणि सार्व० A.

५ उर्णोतेः० MSS.

## ह्यस्तन्यां च ॥ ८६ ॥

ऊर्णोतेर्व्यञ्जनादौ[१] गुणिनि ह्यस्तन्यां च नित्यं गुणो भवति। प्रौर्णोत्। प्रौर्णोः ॥ चकारोऽनुक्तसमुच्चयार्थः। तेनेटि वा स्यात्। प्रोर्णविता। प्रोर्णुविता[२] ॥ प्रौर्णावीत्। प्रौर्णुवीत्[३]। इत्यपि स्यात् ॥

## तृहेरिड् विकरणात् ॥ ८७ ॥

प्रकृतत्वात्सार्वधातुकमनुवर्तते। तृहेर्विकरणात्पर इडागमो भवति। व्यञ्जनादौ गुणिनि सार्वधातुके परे। तृणेढि। तृणेक्षि। तृणेह्मि ॥

## ब्रुव ईड्[४] वचनादिः ॥ ८८ ॥

ब्रुव ईड्[४] भवति वचनादिर्भूत्वा व्यञ्जनादौ गुणिनि सार्वधातुके परे। ब्रवीति। ब्रवीतु। अब्रवीत् ॥
चर्करीताद्वेति[५] केचित्। बोभवीति। बोभोति ॥

## अस्तेर्दिस्योः ॥ ८९ ॥

अस्तेः परयोर्दिस्योर्वचनादिरीड् भवति[६]। आसीत्। आसीः ॥ साहचर्यात् त्वमसि ॥ तिपा धातुस्वरूपनिर्देशात्[७]। अभूत् ॥

---

१ उर्णोतिः० MSS.
२ प्रोर्णाविता B.
३ प्रौर्णवीत् F.
४ इड् B. F.
५ चर्करिताद्० B. F.
६ ०ई भवति A.; दिस्योरीड् भवति B.
७ तिपा स्वरूप० B.; तिपा धातोः स्वरूप० F.

**सिचः ॥ ९० ॥**

सिचः परयोर्दिस्योर्वचनादिरीड् भवति । अकार्षीत् । अकार्षीः ॥ आगमशासनमनित्यमिति केचित् । मा भैः ॥

**रुदादिभ्यश्च ॥ ९१ ॥**

रुदादिभ्यः परयोर्दिस्योर्वचनादिरीड् भवति । अरोदीत् । अरोदीः । अस्वपीत् । अस्वपीः । अश्वसीत् । अश्वसीः । प्राणीत् । प्राणीः[१] । अजक्षीत् । अजक्षीः । पञ्चैते रुदादयः ॥

**अदोऽट् ॥ ९२ ॥**

अदः परयोर्दिस्योर्वचनादिरड् भवति । आदत् । आदः ॥ रुदादेरपि[२] केचित् । अरोदत् । अरोदः[३] ॥

**सस्य सेऽसार्वधातुके तः ॥ ९३ ॥**

सस्य तकारो भवति । असार्वधातुकविषये से । जिघत्सति । वत्स्यति ॥ असार्वधातुक इति किम् । वस्से ॥

**अणि वचेरोदुपधायाः ॥ ९४ ॥**

वचेरुपधाया ओद् भवति । अणि परे[४] । अवोचत् । अवोचः ॥ कथं पुस्तकवाचः । असार्वधातुक इति विशेषणात् । एवमुत्तरत्रापि ॥

---

१ अप्राणीत् । अप्राणीः । A.
२ रुदादेरपीति B.
३ अरोददित्यादिः ॥ A.
४ असार्वधातुके अणि॰ A.

**अस्यतेः स्थोऽन्तः ॥ ९५ ॥**

अस्यतेरन्तः स्थो भवति । अणि परे । अपास्थत् ॥

**पतेः पप्तिः ॥ ९६ ॥**

पतेः पप्तिर्भवति । अणि परे । अपप्तत्(१) ॥ श्वेरद् वक्तव्यः । अश्वत् ॥

**कृपे रो लः ॥ ९७ ॥**

कृपे रेफस्य लकारो(२) भवति । कल्प्ता(३) । कल्पयति । कल्पः ॥ कथं कॢप्तः । कॢप्तिरिति रश्रुतेर्लश्रुतिरिति वक्तव्यं वा । इह ऋकारस्थस्य रेफस्यावर्णात्मन(४) ऌकारस्थो लकारोऽवर्णात्मान्तरतम्याद् भवन् । ऋकारस्थस्य(५) ऌकार एव स्याद् अव्यतिरिक्तत्वात् ॥ कथं कृपा । लाक्षणिकत्वात् । कृपणादयो ह्यौणादिका इति(६) ॥

**गिरतेश्चेक्रीयिते ॥ ९८ ॥**

गिरते रेफस्य लकारो भवति । चेक्रीयते परे । गर्हितं गिरति । निजेगिल्यते ॥

**वा स्वरे ॥ ९९ ॥**

गिरते रेफस्य लत्वं भवति वा स्वरे परे । गिरति । गिलति ।

---

१ A. adds अपप्तः ।

२ लो A.

३ A. adds कल्प्स्यति.

४ °वर्णात्मा A.

५ ऋकारस्य A.

६ A. om. इति.

निगरणम् । निगलनम् ॥ निगाल्यत इतीनः[१] स्थानिवद्भावात् ॥ गलः प्राण्यङ्गे विषे तु गर इति[२] ॥ कपिरिकादेर्लोकतः सिद्धिः[३] । कपिरिका । कपिलिका । रोहिणी । लोहिणी । रोम । लोम । पर्यङ्कः । पल्यङ्कः । परिघः । पलिघः । परियोगः । पलियोगः । चूडा । चूला । वडभी । वलभी । जडम् । जलम् । जडधिः । जलधिः । डलयोरेकत्वम् ॥ तथोपसर्गस्यायतौ[४] । परायते[५] । पलायते ॥ निर्दुरोर्वा स्यात् । निरयणम् । निलयनम् । दुरयणम् । दुलयनम् ॥ अतिव्यवहिते नेष्टम् । प्रत्ययते ॥

## तृतीयादेर्घढधभान्तस्य धातोरादिचतुर्थत्वं सध्वोः[६] ॥ १०० ॥

धातोरवयवस्य तृतीयादेर्घढधभान्तस्यादिचतुर्थत्वं[७] भवति । आन्तरतम्यात् । सकारे ध्वे च परतः । दुधुक्षति । अधुग्ध्वम् । अघुक्षत[८] । अघूढ्वम् । बुभुत्सते । अभुद्ध्वम्[९] । धीप्सति । भोत्स्यते[१०] । निघोक्ष्यते[११] । इत्याद्यन्तवद्भावात्[१२] ॥ सध्वोरिति किम् । दिदम्भिषति । दुग्धः । दुग्धवान् ॥ पुनर्धातुग्रहणमिह सुखार्थं च[१३] ॥

---

१ इति A.
२ B. om. इति.
३ सिद्ध इति F.
४ F. adds वा ; B. om. तथा.
५ पल्ययते । A.
६ सध्वे ॥ A.
७ °आदेश्चतुर्थत्वं B.
८ अघुक्षत A. ; om. बुभुत्सते.
९ अभुध्वं B. F.
१० भोत्स्यति F.
११ निघोक्षते B.
१२ इत्याद्यन्तवदुपचारात् ॥ A.
१३ सुखार्थमुत्तरार्थं च ॥ F.

लोपे च दिस्योः ॥ १०१ ॥

धातोरवयवस्य तृतीयादेर्घढधभान्तस्यादेश्चतुर्थत्वं भवति। दिस्योर्लोपे च सति। अधोक्। अजोघोट्। अबोभोत्॥ दिस्योरिति किम्। अदुग्धाः। वर्णाश्रयत्वात् प्रत्ययलोपलक्षणं नास्तीति॥

सध्वोश्च दधातेः ॥ १०२ ॥

दधातेर्धान्तस्यादेश्चतुर्थत्वं भवति। तथोः सध्वोश्च परतः। धत्तः। धत्थः। धत्से। धद्ध्वे॥ धान्तस्येति किम्। दधाति(१)। दधासि॥

॥ इति दौर्गसिंह्यां वृत्तावाख्याते षष्ठः पादः समाप्तः॥

---

इडागमोऽसार्वधातुकस्यादिर्व्यञ्जनादेरयकारादेः ॥ १ ॥

धातोर्विहितस्यासार्वधातुकस्य व्यञ्जनादेरयकारादेरादिरिडागमो भवति। भविता। भविष्यति। भवितव्यम्॥ पुनर्धात्वधिकारो धातुसंज्ञाश्रितासार्वधातुकार्थः। तेन गृह्णाति। वृणोति। जुगुप्सते। मीमांसते॥ असार्वधातुकस्येति किम्। शेते। वेत्ति॥

---

१ दधति A.

टकार इटि च [का° ३. ४. २८] इत्यादौ विशेषार्थः॥ व्यञ्जनादेरिति किम्। बभूव॥ अयकारादेरिति किम्। भूयात्॥

स्नुक्रमिभ्यां परस्मै॥२॥

परस्मैपदविषये यौ स्नुक्रमी ताभ्यां परस्यासार्वधातुकस्य व्यञ्जनादेरयकारादेरादिरिडागमो भवति। प्रस्नविता। प्रस्नविष्यति। क्रमिता। क्रमिष्यति। चिक्रमिषति॥ परस्मैपदविषय एवेति नियमात्। व्यतिस्नोष्यते। प्रचिक्रंसते। उपचिक्रंसते[१]। प्रोपाभ्यां क्रमी रुचादिरादिकर्मणि॥ प्रस्नवितव्यम्। प्रक्रमितव्यम्। इत्यसमानविषयत्वादिट्[२]॥ कथं प्रक्रन्ता। उपक्रन्ता[३]। आत्मनेपदविषयस्य क्रमेः कर्तरि क्तीट्प्रतिषेधः॥ प्रस्नवितेवाचरति। प्रस्नवित्रीयते। आयिरयमात्मनेपदी॥

रुदादेः सार्वधातुके॥३॥

रुदादेर्गणात् सार्वधातुके[४] व्यञ्जनादेरयकारादेरादिरिडागमो भवति। रोदिति। रुदितः। स्वपिति। स्वपितः। श्वसिति। श्वसितः। प्राणिति। प्राणितः। जक्षिति। जक्षितः[५]॥ रुद्यत इति परत्वाद् यणा भवितव्यम्[६]॥

---

१ A. adds व्यतिक्रंसते.
२ °असमासविषय° B.
३ प्रक्रान्ता। उपक्रान्ता A. B.
४ A. adds परे.
५ यक्षिति। यक्षितः। A.
६ रुद्यत इति व्यवहितत्वात्। A.; F. om. परत्वात्.

रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा ।
जक्षितिश्चैव[१] विज्ञेयो रुदादिः पञ्चको गणः ॥

## ईशः से ॥ ४ ॥

ईशः सादौ सार्वधातुक आदिरिडागमो भवति । ईशिषे । ईशिष्व ॥

## ईड्जनोः स्ध्वे च ॥ ५ ॥

ईड्जनोः स्ध्वे च[२] सार्वधातुके पर आदिरिडागमो भवति । ईडिषे । ईडिष्व[३] । ईडिध्वे । ईडिध्वम्[३] । व्यतिजज्ञिषे । व्यतिजज्ञिध्वे । व्यतिजज्ञिध्वम्[४] ॥ जन जनने । न जनी यना[५] व्यवहितत्वात् ॥ स्ध्वे चेति पठितत्वाच्चकारेण ईशिरनुकृष्यते[६] । ईशिध्वे । ईशिध्वम् ॥

## से गमः परस्मै ॥ ६ ॥

परस्मैपदस्य[७] यो गमिस् तस्मात् स आदिरिडागमो[८] भवति । गमिष्यति । जिगमिषति । अधिजिगमिष त्वम् । जिगमिषा । जिगमिषुः । जिगमिषितव्यम् ॥ परस्मैपदस्येति किम् ।

---

१ यक्षिति° A.
२ सकारध्वे च B.
३ Om. A.
४ जज्ञिध्वं A., om. व्यतिजज्ञिध्वे; F. adds व्यतिजज्ञिष्व.
५ जन जनने जननी यणा F.; जन जनने यनी यणा B.
६ °अनुकृष्यते A.; ईषिरनुकृष्यति F.; ईषिरनुदृश्यते B.
७ परस्मैपदविषयो A.
८ सेरादि° A.

अधिजिगांसते । संगंसीष्ट ॥ केचिद् योगं विभज्यात्मनेपद इटमिच्छन्ति । तन्मतेन(१) संजिगमिषुः । अधिजिगमिषितव्यम्(२) ॥ अनिङ्गमः क्वतीत्येके । तदा । अधिजिगांसुरिति ॥

हनृदन्तात् स्ये(३) ॥ ७ ॥

हन्तेर्ऋदन्ताच्च(४) धातोः स्ये(३) पर आदिरिडागमो भवति । हनिष्यति । हनिष्यमाणः । करिष्यति । करिष्यमाणः । स्वरिष्यति । स्वरिष्यमाणः । अस्वरिष्यत् ॥

अन्जेः सिचि ॥ ८ ॥

अञ्जेः सिच्यादिरिडागमो भवति । आञ्जीत् । आञ्जिष्टाम्(५) ॥ उदनुबन्धत्वाद् विकल्पे प्राप्ते नित्यार्थं वचनम्(६) ॥

स्तुसुधूञ्भ्यः(७) परस्मै ॥ ९ ॥

एभ्यः(८) परस्मैपदे सिच्यादिरिडागमो(९) भवति । प्रास्तावीत् । प्रासावीत् । प्राधावीत् ॥ परस्मा इति किम् । प्रास्तोष्ट । प्रासोष्ट । प्राधोष्ट ॥ धूञ् कम्पनेऽपि । अधावीत् ॥

यमिरमिनम्यादन्तानां सिरन्तश्च ॥ १० ॥

एषां परस्मैपदे सिच्यादिरिडागमो भवति । सिश्चान्तो(१०)

---

१ तन्मते A.
२ संजिगमिषितव्यं F.
३ से B.; B. F. om. पर.
४ °ऋदन्तानां च B.
५ आञ्जीष्टां । आञ्जीषुः B.
६ F. om. वचनम्.
७ °धूङ्भ्यः B.; स्तुषु° F.
८ एषु F.
९ सिचीडागमो B.
१० सिरन्तश्च A.

भवति । अयंसीत् । व्यरंसीत् । अनंसीत् । अयासीत्[१] । अयासिष्टाम् । अम्लासीत्[१] । अम्लासिष्टाम् । अदरिद्रासीत् । अदरिद्रासिष्टाम् । अन्तग्रहणाद् दरिद्रातेराल्लोपो न स्यात् ॥ कथम् अदरिद्रीत् । अदरिद्रिष्टाम् । आगमस्यानित्यत्वाद्[२] विभाषैव ॥

## स्मिङ्पूङ्रञ्ज्वशूकृगृदृधृप्रच्छां सनि ॥ ११ ॥

एषां समीपे[३] सनीडागमो भवत्यादिः । स्मिङ् । सिस्मयिषते ॥ पूङ् । पिपविषते । पूञस्तु । पुपूषति ॥ ऋ । अरिरिषति ॥ अञ्जु । अञ्जिजिषति ॥ अशूङ् । अशिशिषते[४] ॥ कृ । चिकरिषति ॥ गृ । जिगरिषति ॥ दृङ् । दिदरिषते[५] ॥ धृङ् अवस्थाने । दिधरिषते[६] ॥ प्रच्छ । पिपृच्छिषति ॥

प्रच्छिसहचरिताः कृ गृ धृ तौदादिकाः । कॄञ् हिंसायां । चिकरिषति । चिकीर्षति ॥ गॄ शब्दे । जिगरिषति । जिगीर्षति ॥ धृञ् धारणे दिधरिषति[७] । दिधीर्षति ॥ कृग्रोर्ज्ञापकस्य सविकल्पत्वाद् अन्येषामॄदन्तानां वा स्यादेव ॥ कथं प्रावुवूर्षते । प्राविवरिषते[८] । संवुवूर्षति । संविवरिषति । वृङ्वृञोर्नञानिर्दिष्टस्यानित्यत्वात् ॥

ॠद्दृङ्वृञां सनीड् वा स्यादात्मने च सिजाशिषोः ।
संयोगादेर्ऋतो वाच्यः सुडसिद्धो बहिर्भवः ॥

---

१ Om. A. B.
२ आगमस्य नित्यत्वाद् A.
३ Om. B.
४ अशिशिषति A. B.
५ दिदरिषति MSS.
६ दिधरिषति F.; A. om. अवस्थाने.
७ Om. A.; B. F. om. धारणे; धृञस्तु F.
८ प्रावुवुर्षति । प्राविवरिति F.

तॄ । (१)अतरिष्ट । अतीर्ष्ट । तरिषीष्ट(२) । तीर्षीष्ट ॥ वृ(३) । अवरिष्ट । अवृत । वरिषीष्ट । वृषीष्ट ॥ ध्वृ । अध्वरिष्ट । अध्वृत । ध्वरिषीष्ट । ध्वृषीष्ट ॥ समस्कृत । संस्कृषीष्ट । असिद्धं बहिरङ्गमन्तरङ्ग इति ॥

## इटो दीर्घो ग्रहेरपरोक्षायाम् ॥ १२ ॥

ग्रहेः परस्येटो दीर्घो भवति । न तु परोक्षायाम् । ग्रहीता ॥ अग्रहीत् । इट्त्वात् सिचो लोपः स्यात् । अस्य च दीर्घो न स्यात् ॥ कथं ग्राहिता । ग्राहिष्यते । इञ्वदिटोऽश्रुतत्वात् ॥ अपरोक्षायामिति किम् । जगृहिव । जगृहिम ॥

ऋद्वृङ्वृञोऽपि वा दीर्घो न परोक्षाशिषोरिटः ।
न परस्मै सिचि प्रोक्त इति योगविभञ्जनात् ॥

तॄ । तरिता । तरीता ॥ वृङ् वृञ् वा(४) । वरिता । वरीता ॥ वर्जने तु । तितरिव । तितरिम । ववरिथ । तरिषीष्ट । वरिषीष्ट(५) । अतारिष्टाम् । अवारिष्टाम् ॥

## अनिडेकस्वरादातः ॥ १३ ॥

एकस्वराद्धातोराकारान्तात्(६) परमसार्वधातुकमनिड् भ-

१ A. adds तितरिषति । तितीर्षति ।
२ तरषीष्ट A.; तरिषिष्ट B.
३ वृङ वृञ F.; A. adds विवरिषते । वुवूर्षते ।
४ F. om. वा.
५ Om. A.
६ °आकारात् F.



वति । दाता । दास्यति । दातव्यम् ॥ एकस्वरादिति किम् । दरिद्रिता ॥

अनात्मनेपदस्थात्तु वृतादेरिड् न स्ये सनि ।
श्वस्तन्यां च कृपेर्नैव कृतादेर्वापि से[१]ऽसिचि ॥

वृतु । वर्त्स्यति । विवृत्सति ॥ वृधु । वर्त्स्यति । विवृत्सति[२] ॥ शृधु । शर्त्स्यति । शिशृत्सति[३] ॥ स्यन्दू[४] । स्यन्त्स्यति । सिस्यन्त्सति[३] ॥ कृपू । कल्प्स्यति । चिकॢप्सति । कल्प्तासि । कृपेः श्वस्तन्यां वा रुचादित्वम् ॥ कृती । कर्त्स्यति । कर्तिष्यति ॥ एवं चृती हिंसायाम् । चर्त्स्यति । चर्तिष्यति ॥ उछृदिर् । छर्त्स्यति । छर्दिष्यति ॥ उतृदिर् । तर्त्स्यति । तर्दिष्यति ॥ नृती । नर्त्स्यति । नर्तिष्यति ॥ असिचीति किम् । अकर्तीत् ॥

## इवर्णादश्विश्रिडीङ्शीङः ॥ १४ ॥

इवर्णान्ताच् श्विश्रिडीङ्शीङ्वर्जितादेकस्वरात् परमसार्वधातुकमनिड् भवति[५] । चेता । चेष्यति । नेता । नेष्यति ॥ अश्विश्रिडीङ्शीङ इति किम् । श्वि श्वयिता । श्रि श्रयिता । डीङ् डयिता । शीङ् शयिता ॥ एकस्वरादिति किम् । आदीधिता । आवेविता ॥

## उतोऽयुरुणुस्नुक्षुक्ष्णुवः[६] ॥ १५ ॥

उकारान्तादेकस्वराद्[७] युरुणुस्नुक्षुक्ष्णुवर्जितात्[६] परम-

१ स्ये B.
२ विभृत्सति A.
३ शिशृत्सति° सिस्यन्त्सति B. F.
४ स्यन्दु A. B.
५ A. adds एता । एष्यति ।
६ °युरुनु° A. B.
७ उवर्णान्ताद्° B.

सार्वधातुकमनिड् भवति। होता। स्तोता[1]॥ अयुरुणुक्ष्णुक्ष्णुव[2] इति किम्। यविता। रविता। नविता। क्ष्णविता। क्ष्णविता। क्ष्णुविता॥ उत इति किम्। लविता॥ एकस्वरादिति किम्। प्रोर्णविता॥

ऋतोऽवृङ्वृञः॥१६॥

ऋदन्तादेकस्वराद् वृङ्वृञ्वर्जितात् परमसार्वधातुकमनिड् भवति। कर्ता। हर्ता॥ अवृङ्वृञ इति किम्। वरिता[3]॥ ऋत इति किम्। कृ करिता॥ एकस्वरादिति किम्। जागरिता॥

शकेः कात्॥१७॥

शकेः कान्तादनिड्[4] भवति। शकॢ शक। शक्ता। शक्ष्यति॥

पचिवचिसिचिरिचिमुचेश्चात्॥१८॥

एभ्यः पञ्चभ्योऽनिड् भवति। डुपचष् पाके। पच व्यक्तीकरणे वा[5]। पक्ता॥ वच वचि[6]। वक्ता॥ सिच[7]। सेक्ता॥ रिचिर्[8]। रेक्ता॥ मुचॢ[9]। मोक्ता॥

---

१ A. adds स्तोष्यति.
२ °युरुनु° A. B.
३ वृङ वरिता A.
४ °न्तात्परमसार्वधातुकमनिड् A.
५ B. om. from पच.
६ F. om. वचि.
७ सिचिर् A. B.
८ रिच F.
९ मुच। F.

प्रच्छेश्छात् ॥ १९ ॥

प्रच्छेश्छान्तादनिड्[1] भवति । प्रष्टा । प्रक्ष्यति ॥

युजिरुजिरन्जिभुजिभजिभन्जिसन्जित्यजिभ्रस्जियजि-मस्जिसृजिनिजिविजिस्वन्जेर्जात्[2] ॥ २० ॥

एभ्यः पञ्चदशभ्योऽनिड् भवति । युजिर् युज । योक्ता ॥ रुजो[3] । रोक्ता ॥ रन्ज । रङ्क्ता ॥ भुज भुजो[3] । भोक्ता ॥ भज । भक्ता ॥ भन्ज । भङ्क्ता ॥ सन्ज । सङ्क्ता ॥ त्यज । त्यक्ता ॥ भ्रस्ज । भ्रष्टा ॥ यज । यष्टा ॥ टुमस्जो । मङ्क्ता ॥ सृज । स्रष्टा ॥ निजिर् । नेक्ता ॥ विजिर् । वेक्ता । न ओविजी । ईदनुबन्धबलात् ॥ स्वन्ज । स्वङ्क्ता ॥

अदितुदिनुदिक्षुदिस्विद्यतिविद्यतिविन्दतिविनत्ति-छिदिभिदिहदिशदिसदिपदिस्कन्दिखिदेर्दात् ॥ २१ ॥

एभ्यः षोडशभ्योऽनिड् भवति ॥ अद । अत्ता ॥ तुद । तोत्ता ॥ नुद । नोत्ता ॥ क्षुदिर् । क्षोत्ता ॥ स्विद । स्वेत्ता ॥ विद सत्तायाम् । विद्लृ लाभे । विद विचारे वा । वेत्ता ॥ छिदिर् । छेत्ता ॥ भिदिर् । भेत्ता ॥ हद । हत्ता ॥ शद्लृ । शत्ता ॥ पद । पत्ता ॥ स्कन्दिर् । स्कन्त्ता[4] ॥ खिद दैन्ये । खिद परिघाते वा । खेत्ता ॥

---

१ °न्तात्परमसार्वधातुकमनिड् A.
२ °मस्जियजिभ्रस्जि° A.
३ रुज । B. and om. भुजो.
४ स्कन्ता B. F.

राधिरुधिक्रुधिक्षुधिबन्धिशुधिसिध्यतिबुध्यतियुधिव्यधिसाधेर्धात् ॥ २२ ॥

एभ्य एकादशभ्योऽनिड् भवति ॥ राध । राद्धा ॥ रुधिर्[१] । रोद्धा ॥ क्रुध । क्रोद्धा ॥ क्षुध । क्षोद्धा ॥ बन्ध । बन्द्धा[२] ॥ शुध । शोद्धा ॥ सिध । सेद्धा ॥ बुध अवगमने । बोद्धा ॥ युध । योद्धा ॥ साध । साद्धा ॥

हनिमन्यतेर्नात् ॥ २३ ॥

आभ्यामनिड् भवति । हन । हन्ता ॥ मन ज्ञाने । मन्ता ॥ कथम् अवधीत् । नायं नान्तः ॥

आपितपितिपिस्वपिवपिशपिछुपिक्षिपिलिपिलुपिसृपेः पात्[३] ॥ २४ ॥

एभ्य एकादशभ्योऽनिड् भवति ॥ आप्लृ । आप्ता ॥ तप धूप संतापे[४] । तप ऐश्वर्ये वा । तप्ता ॥ तिप्तृ । तेप्ता ॥ ञिष्वप[५] । स्वप्ता ॥ डुवप[६] । वप्ता ॥ शप[७] । शप्ता ॥ छुप । छोप्ता ॥ क्षिप । क्षेप्ता ॥[८] लिप । लेप्ता ॥ लुप्लृ । लोप्ता ॥ सृप्लृ । सर्प्ता ॥ कथं तर्प्ता । दर्प्ता । रधादित्वाद् विभाषेट्[९] ॥

---

१ रुध । F.

२ संबन्धा F.; B. om. from बन्ध.

३ B. om. लुपि; B. (and marg. A.) add रिपि before लिपि.

४ संतापने A.

५ स्वप A.

६ वप F.

७ शप आक्रोशे F.

८ A. (marg.) adds रिप । रेप्ता.

९ विभाषैव ॥ A.

यभिरभिलभेर्भात् ॥ २५ ॥

एभ्यस् त्रिभ्यो ऽनिड् भवति । यब्धा । रब्धा । लब्धा ॥

यमिरमिनमिगमेर्मात् ॥ २६ ॥

एभ्यस्चतुर्भ्यो ऽनिड् भवति । यन्ता । रन्ता । नन्ता । गन्ता ॥

रिशिरुशिक्रुशिलिशिविशिदिशिदृशिस्पृशिमृशिदन्शेः(१) शात् ॥ २७ ॥

एभ्यो दशभ्यो ऽनिड् भवति ॥ रिश रुश हिंसायाम् । रेष्टा । रोष्टा ॥ क्रुश । क्रोष्टा ॥ लिश । लेष्टा(२) ॥ विश । वेष्टा ॥ दिश । देष्टा ॥ दृषिर् । द्रष्टा ॥ स्पृश । स्प्रष्टा ॥ मृश । म्रष्टा ॥ दन्श । दंष्टा ॥

द्विषिपुष्यतिकृषिश्लिष्यतित्विषिपिषिविषिशिषिशुषितुषिदुषेः षात्(३) ॥ २८ ॥

एभ्य एकादशभ्यो ऽनिड् भवति ॥ द्विष । द्वेष्टा ॥ पुष्यति । पोष्टा ॥ कृषति(४) कर्षति वा । क्रष्टा(४) ॥ श्लिष्यति । श्लेष्टा ॥ त्विष । त्वेष्टा ॥ पिषृ । पेष्टा ॥ विषृ । वेष्टा ॥ शिषृ । शेष्टा ॥ शुष । शोष्टा ॥ दुष । दोष्टा ॥

---

१ ॰दन्सेः (and निशि for लिशि) F.; A. om. विशि.

२ निश । नेष्टा । F.

३ A. om. विषिशिषि.

४ कृष । क्रष्टा । F.

**वसतिघसेः सात् ॥ २९ ॥**

आभ्यामनिड् भवति । वस्ता[१] । जिघत्सति ॥ नायं दान्त इति[१] ॥

**दहिदिहिदुहिमिहिरिहिरुहिलिहिलुहिनहिवहेर्वात् ॥ ३० ॥**

एभ्यो दभ्योऽनिड् भवति ॥ दह् । दग्धा ॥ दिह् । देग्धा ॥ दुह् । दोग्धा ॥ मिह् । मेढा ॥ रिह् । रेढा ॥ रुह् । रोढा ॥ लिह् । लेढा ॥ लुह् । लोढा ॥ नह् । नद्धा ॥ वह् । वोढा ॥ रिहिलुही सौत्रौ धातू केचिन्न पठन्त्येव[२] ॥

**ग्रहगुहोः सनि ॥ ३१ ॥**

ग्रहगुहोः सनि नेड् भवति । ग्रह् । जिघृक्षति ॥ गुह् । जुघुक्षति ॥

**उवर्णान्ताच्च ॥ ३२ ॥**

उवर्णान्ताद्धातोः[३] सनि नेड् भवति । वर्णग्रहणं रुणुस्नुच्युक्ष्णुर्थम् ॥ रुरूषति । नुनूषति । सुस्नूषति[४] । चुच्यूषति । चुक्ष्णूषति[५] । लुलूषति । पुपूषति ॥

**इवन्तर्धभ्रस्जदम्भुश्रियूर्णुभरज्ञपिसनितनिपतिदरिद्रां वा ॥ ३३ ॥**

एषां सनि पर इडागमो न भवति वा ॥ इवन्त । दिदेवि-

१ वस । वस्ता B., and om. इति.

२ सौत्रोऽयं धातु॰ B.; रिहीरुही सौत्रौ धातु केचित्पठन्त्येव F.

३ उवर्णान्ताच्च धातोः F.

४ रुरूषति॰ प्रसुस्नूषति F.

५ Om. A. F.

षति। दुद्यूषति ॥ ऋधु। अर्दिधिषति। ईर्त्सति ॥ भ्रस्ज। बिभ्रज्जिषति। बिभ्रक्षति[१] ॥ दम्भु। दिदम्भिषति। धिप्सति। धीप्सति ॥ श्रिञ्। शिश्रयिषति। शिश्रीषति ॥ यु। यियविषति। युयूषति ॥ ऊर्णुञ्[२]। प्रोर्णुनविषति। प्रोर्णुनूषति ॥ भर। बिभरिषति। बुभूर्षति ॥ ज्ञपि। जिज्ञपिषति। ज्ञीप्सति ॥ सनु[३]। सिसनिषति। सिषासति[४] ॥ तनु। तितनिषति। तितांसति ॥ पतॢ। पिपतिषति। पित्सति ॥ दरिद्रा। दिदरिद्रिषति। दिदरिद्रासति ॥ भ्रस्जभ्रूयूनामप्राप्ते विभाषा ॥

## भुवः सिज्लुकि ॥ ३४ ॥

भुवो धातोः[५] सिज्लुकि सति नेड् भवति। अभूत्। अभूताम् ॥ सिज्लुकीति किम्। व्यत्यभविष्ट ॥

## सृवृभृस्तुद्रुस्रुव एव परोक्षायाम् ॥ ३५ ॥

एभ्य एव परोक्षायां नेड्[६] भवति। सृ। सस्रव ॥ वृञ् वृङ्। वव्रवहे। वव्रमहे ॥ डुभृञ् भृञ् वा[७]। बभृव ॥ ष्टुञ्। तुष्टुव ॥ द्रु। दुद्रुव ॥ स्रु। सुस्रुव ॥ श्रु। शुश्रुव ॥ एभ्य एवेति किम्। पेचिव। शेकिव। ददिव। ररन्धिव। नेशिव। रधादित्वाद् विभाषापि बाध्यते। परत्वाद् विकल्प इत्येके। ररन्धिव। रेध्वेति[८] ॥

---

१ बिभृक्षति MSS.
२ ऊर्णुङ B.; A. adds आच्छादने.
३ सनि F.
४ सिषांसति MSS.
५ Om. F.; भुव° B.
६ परोक्षायमनिड् A. B.
७ डुभृङ° B.; A. om. भृञ; F. om. डुभृञ and वा.
८ ररन्धिम। रेध्म ॥ F.

थल्यृकारात् ॥ ३६ ॥

ऋकारान्ताद्धातोस्[1] थलि नेड् भवति । दधर्थ । जहर्थ ॥ थलीति किम् । जह्रिव । जह्रिम ॥ ऋकारान्तादिति[2] किम् । स्तॄञ् । तस्तरिथ ॥

नित्यात्वतां स्वरान्तानां सृजिदृशोश्च वेट् थलि ।

तृचि नित्यानिटः सुस्वेद् वृव्येऽदां नित्यमिट् थलि ॥

पपक्थ । पेचिथ ॥ पपाथ । पपिथ ॥ चिचेथ । चिचयिथ ॥ सस्रष्ठ । ससर्जिथ ॥ दद्रष्ठ । ददर्शिथ ॥ तृचि योऽकारवान्[3] नित्यानिडिति विशेषणात् । अदेर्घस्लृ । जघसिथ ॥ वेञो वयि । उवयिथ ॥ अञ्जेर्विकल्पेट्त्वात् । आनञ्जिथ । ववरिथ[4] । आरिथ[5] । विव्यथिथ । आदिथ ॥

कृञोऽसुटः ॥ ३७ ॥

असुटः कृञः परोक्षायां थलि च नेड् भवति । चकृव । चकृम । चकर्थ ॥ असुट इति किम् । संचस्करिव । संचस्करिम । संचस्करिथ ॥

स्यसिजाशीःश्वस्तनीषु भावकर्मार्थकासु[6] च ।

स्वरहनग्रहदृशामिड्वेञ्चचेति वक्तव्यम् ॥

चेष्यते । चायिष्यते ॥ दास्यते[7] दायिष्यते[8] ॥ एवम् अचेष्यत ।

---

१ ऋदन्तात् F.; ऋकाराद्धातोः A.
२ ऋकारादिति F.
३ B. adds स.
४ वरिथ A.
५ आविथ F.
६ भावकर्मार्थासु A. F. (? śloka).
७ Om. A.
८ दयिष्यति B.

अचायिष्यत ॥ अदास्यत[१]। अदायिष्यत[१]॥ हनिष्यते। घानिष्यते। अहनिष्यत। अघानिष्यत॥ ग्रहीष्यते[१]। ग्राहिष्यते[२]। अग्रहीष्यत। अग्राहिष्यत ॥ द्रक्ष्यते। दर्शिष्यते। अद्रक्ष्यत। अदर्शिष्यत ॥ सिचि च ॥ अचेषाताम्। अचायिषाताम्॥ अवधिषाताम्। अघानिषाताम्॥ अग्रहीषाताम्। अग्राहिषाताम्[१]॥ अदृक्षाताम्। अदर्शिषाताम्[१]॥ आशिषि च॥ चेषीष्ट। चायिषीष्ट॥ दासीष्ट[३]। दायिषीष्ट[३]॥ वधिषीष्ट। घानिषीष्ट॥ ग्रहीषीष्ट। ग्राहिषीष्ट ॥ दृक्षीष्ट। दर्शिषीष्ट॥ श्वस्तन्यां च॥ चेता। चायिता॥ दाता[१]। दायिता[१]॥ हन्ता। घानिता॥ ग्रहीता। ग्राहिता॥ द्रष्टा। दर्शिता॥ इज्वद्भावादिटस्तु कारितलोपः स्यात्। कारिष्यते। कारयिष्यते ॥ चोरिष्यते। चोरयिष्यते ॥ मानुबन्धानां ह्रस्वो नित्यम्। गमिष्यते ॥

## सुड् भूषणे संपर्युपात् ॥ ३८ ॥

भूषणेऽर्थे संपर्युपात् परस्य कृञः सुडादिर्भवति ॥ संस्कर्ता। संचस्कार। समस्कार्षीत्। परिष्कर्ता[४]। परिचस्कार। पर्यस्कार्षीत्[५]। अड्व्यवधानेऽ[६]पि षत्वमिष्यते ॥ उपस्कर्ता। उपचस्कार। उपास्कार्षीत्॥ एवं समवायेऽपि वक्तव्यम्। भूषणसमवायाभ्यामन्यत्रापि दृश्यते। संस्कृतमिदमनित्यमिति। उपात्

१ Om. A.
२ ग्राहीष्यते। F.
३ Om. A. B.
४ परिस्कर्ता A. F.
५ पर्यस्कार्षीत् A. B.
६ अडभ्यासव्यवधाने F.; अभ्यासव्य० A.; अडभ्यासव्यवसाने B.

प्रतियत्नविकृतवाक्याध्याहारेषु सुड् वक्तव्यः। असिपत्रस्योपस्कुरुते। उपस्कृतं भुङ्क्ते। विकृतं भुङ्क्त इत्यर्थः। उपस्कृतं जल्पति। वाक्याध्याहारं जल्पतीत्यर्थः॥

॥ इति दौर्गसिंह्यां वृत्तावाख्याते सप्तमः पादः समाप्तः॥

---

## पदान्ते धुटां प्रथमः॥१॥

पदान्ते वर्तमानानां धुटाम्(१) अन्तरतमः प्रथमो भवति। त्वन्नाथः। षण्मुखानि। ज्ञानभुट्टीकनम्। तच्छ्रुतम्(२)। ककुब्भासः। वर्गप्रथमलक्षणं स्यात्॥ अलेट्। अलेड्। आसीत्। आसीद्। वा विरामे [का० २. ३. ६२] इति बाधकत्वात् प्रथमतृतीयौ॥ पदग्रहणम्(३) अप्रकृतस्यापि लिङ्गस्य परिग्रहार्थं तेन च धातोरन्ते न स्यात्। वदति। एधते॥ धुटामिति किम्। अहन्। अपचम्(४)॥

## रसकारयोर्विसृष्टः॥२॥

पदान्ते वर्तमानयो रेफसकारयोर्विसृष्टो(५) भवति। अबिभः। पचावः॥ पदान्त इति किम्। बिभर्ति। आस्महे। अत

---

१ पदान्ते धुटां वर्णानाम् B.
२ दृश्रुतं A.
३ पदान्तग्रहणं B.
४ पचन्॥ A.
५ रसकार० A.

एवारम्भः ॥ कथम् अभिनस्त्वम् । अभिनत्त्वम् । अरुणस्त्वम् । अरुणत्त्वम् । सौ पदान्ते ऽरेफप्रकृत्योरपि वा दधो रत्वं स्यात् ॥

घढधभेभ्यस्तथोर्धोऽधः ॥ ३ ॥

घढधभेभ्यः परयोस्तथोर्धो(१) भवति । न तु धात्रः । अदुग्ध । अदुग्धाः । अलीढ । अलीढाः । अबुद्ध । अबुद्धाः । अलब्ध । अलब्धाः ॥ अध इति किम् । धत्तः । धत्थः ॥

षढोः कः से ॥ ४ ॥

षढोः को भवति से परे । पेक्ष्यति । पिपिक्षति । लेक्ष्यति । लिलिक्षति ॥ स इति किम् । पिनष्टि । लेढि ॥

तवर्गस्य षटवर्गाट् टवर्गः ॥ ५ ॥

षाट्टवर्गाच्च परस्य तवर्गस्य टवर्गो भवति(२)। वपुष्टरम् । वपुष्टा । द्वेष्टि । द्विष्टः । पिण्ड्ढि(३)। कुष्णाति । ईट्टे । लीढः । अलीढ्वम् ॥ टवर्गाट्टवर्ग(४) इति किम् । वक्ता । पपक्थ । इति सिद्ध्यर्थम्॥ कथं मधुलिट् तरति । मधुलिट्तरः(५) । अन्त्यत्वात् ॥

ढे ढलोपो दीर्घश्चोपधायाः ॥ ६ ॥

ढे परे ढलोपो(६) भवति । उपधायाश्च दीर्घः । लीढः ।

---

१ B. om. परयो.

२ A. adds आन्तरतम्यात्.

३ पिण्ड्ड A. F.; पिण्ढि B.

४ गुढः । षटवर्गात् तवर्ग A.

५ कथं मधुलिट् भवति A. B.

६ ढकारस्य लोपो F.

मूढः[1] ॥ कथं लेढा। द्रोढा[2]। अन्तरङ्गत्वाद् गुणे कृते ढलोप एव स्यात् ॥ उपधाग्रहणस्य[3] संज्ञापूर्वकत्वाद् ऋतो न स्यात्। तृह्। तृढः ॥ दृह्[4]। दृढः ॥

## सहिवहोरोदवर्णस्य ॥ ७ ॥

सहिवहोर्ढे परे ढलोपो भवति। अवर्णस्यौद् भवति। सोढा। वोढा ॥ कथम् ऊढः। ऊढवान्। अन्तरङ्गत्वान्नित्यत्वात्[5] संप्रसारणम् ॥ वर्णग्रहणं[6] किम्। उदवोढाम्। सिच्यस्य[7] दीर्घत्वेऽपि न स्यात् ॥

## धुटां तृतीयश्चतुर्थेषु ॥ ८ ॥

धातूनां धुटां चतुर्थेष्वेव तृतीयो भवति। दोग्धा। द्विड्ढि। चकाद्धि। लब्धा ॥ चतुर्थेष्वेवेति नियमात्। शङ्क्यते[8]। द्विष्टः ॥

## अघोषेष्वशिटां प्रथमः ॥ ९ ॥

अघोषेषु परतो धातूनामशिटां[9] धुटां प्रथमो भवति। धोक्षि। भेत्ता। युयुत्सते[10]। आरिप्सते ॥ अशिटामेवेति किम्। अस्ति ॥

---

१ गूढः A.
२ लोढा A.; द्रोढेति F. and om. कथं.
३ उपधाया ग्रहणस्य A.
४ Sic MSS.
५ नित्यत्वात्वाच A.; नित्यत्वाद्वा B.
६ अवर्णग्रहणं A.
७ F. adds च.
८ शक्यते A.
९ °अशिटामेव A.; F. om. धुटां.
१० युयुत्सति F.; om. B.; F. adds छेत्ता.

भृजः स्वरात् स्वरे द्विः ॥ १० ॥

भृजः स्वरात् परस्य(१) स्वरे द्विर्भवति । भृजी(२) । बभ्रज्जे । बभ्रज्जाते । बभ्रज्जिरे(३) ॥ आद्यव्याकरणमतमेतत् ॥

अस्य वमोर्दीर्घः ॥ ११ ॥

अकारस्य वमोः परतो दीर्घो(४) भवति । पचामि । पचावः । पचामः । दीव्यामि(५) । दीव्यावः । दीव्यामः ॥ अस्येति किम् । दध्वः । दध्मः । यदि स्याद्दीर्घस्तदालोपो(६) न स्यात् ॥ कथं पचमानः । अपचम् । वमोर्वर्णयोराद्ययोः साहचर्यात् ॥

स्वरान्तानां सनि ॥ १२ ॥

स्वरान्तानां धातूनां सनि परे दीर्घो भवति । चिकीर्षति ॥ जुहूषति । चिचीषति ॥ शिश्रयिषति । बिभविषतीति गुणेनाघ्रातत्वात् स्वरान्तानामिति सुखार्थमेव ॥

हनिङ्गमोरुपधायाः ॥ १३ ॥

इङो गमः इङ्गमः । हन्इङ्गमोरुपधाया दीर्घो भवति सनि

---

१ परः F.; om. B.

२ Om. B.; भृजी भर्जने A.

३ बभृज्जे । बभृज्जाते । बभृज्जिरे । A. F.; भृजाव । भृजेव । भृजाते । बभृजिरे B.

४ परयोर्दीर्घो B.; अस्य वमोर्दीर्घो A.

५ Om. B. F.; B. om. दीव्यामः

६ तदा आलोपो A.

परे। जिघांसति। अधिजिगांसते॥ इङो गम इति किम्। संजिगंसते(१)॥ तितांसति। तितनिषतीति(२) वा वक्तव्यम्॥

## नामिनो र्वोरकुर्छुरोर्व्यञ्जने॥ १४॥

नात्र तदन्तविशेषणम्। र्वोरुपधाया धातोर्नामिनो दीर्घो भवति व्यञ्जने परे। न तु कुर्छुरोः। चिकीर्षति। बुभूर्षति। दीव्यति। सीव्यति। कूर्दते। खूर्दते॥ धातोरिति किम्। कुर्कुरः॥ कथं कुर्कुरीयते। नामधातुत्वात्॥ नामिन इति किम्। कर्ता। भव्यम्(३)॥ र्वोरिति किम्। नृत्यति॥ अकुर्छुरोरिति किम्। कुर्यात्। दीर्घविधिं प्रति न स्थानिवदिति(४)। कुर्यते॥ कथं री रेषणे। रिर्यतुः॥ वी प्रजने। विव्यतुरिति। अभ्यासप्रतिषेध इति॥ व्यञ्जन इति किम्। किरति। लुवति॥

## सस्य ह्यस्तन्यां दौ तः॥ १५॥

सस्य ह्यस्तन्यां दौ परे तो भवति। अचकात्। अन्वशात्(५)॥ ह्यस्तन्यामिति किम्। अभैत्सीत्। ईटस्तद्ग्रहणेन(६) ग्रहणात्॥ ह्यस्तन्यां सौ वा वक्तव्यम्। अचकास्त्वम्। अचकात्त्वम्॥

## अड् धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु॥ १६॥

ह्यस्तन्यादिषु परतो धातोरादिरडागमो भवति। अक-

---

१ संजिगांसते A.; संजिगमिषति B.
२ तितंसतीति F.
३ कर्तव्यता A.
४ स्थानिवद्भाव इति A.
५ अन्वसात् F.
६ इटस्त० B. F.

रोत्। अकार्षीत्। अकरिष्यत्॥ धातोरिति किम्। न्यविशत॥

**स्वरादीनां वृद्धिरादेः॥ १७॥**

स्वरादीनां धातूनां ह्यस्तन्यादिष्वादेः स्वरस्य वृद्धिर्भवति। आन्तरतम्यात्। ऐधत। ऐधिष्ट। ऐधिष्यत॥ कथम् ऐज्यत(१)। औप्यत। औह्यत। अन्तरङ्गत्वादडागमे यणि संप्रसारणे सन्धौ च वृद्धिः। पदान्तरङ्गा वा(२) यणादयः॥

**अवर्णस्याकारः॥ १८॥**

स्वरादीनां धातूनामादेरवर्णस्याकारो भवति ह्यस्तन्यादिषु परतः। आटत्। आटीत्। आटिष्यत्। आप्नोत्। आपत्। आप्स्यत्॥ अवर्णः सर्वमुखस्थानमित्येके। एकदेशेनान्तरतम्यात्। सर्वा वृद्धयो मा भूवन्निति वर्णग्रहणम्॥

**अस्तेः॥ १९॥**

अस्तेर्ह्यस्तन्यामगुणेऽवर्णस्याकारो भवति। आस्ताम्। आसन्। व्यत्यास्त। परोऽप्यवर्णस्याकारो लोपे न बाध्यतेऽस्तिमात्राश्रयत्वात्॥

**एतेर्ये॥ २०॥**

एतेर्ये ह्यस्तन्यनि परे ऽटो(३) ऽवर्णस्याकारो(४) भवति।

---

१ ऐप्यत B.

२ पदान्तरा B.

३ इटो F.; om. B.

४ दीर्घो A. and om. आयन्.

आयन् । अध्यायन् ॥ परापि वृद्धिरिण्आचाश्रितेन यत्नेन बाध्यते ॥ य इति किम् । अगात् ॥

न मामास्मयोगे[1] ॥ २१ ॥

मायोगे मास्मयोगे[1] च ह्यस्तन्यादिष्वडागमो न भवति । मा भवान् करोत् । मास्म करोत् । जुगुप्सत स्वैनमदुष्टभावं मैवं भवानच्युतसाधुवृत्त इति मतम्[2] ॥ मा भवान् कार्षीत्[3] । मा स्म कार्षीत् । संयुक्ते न स्यादिति मास्मग्रहणम् ॥ साहचर्यान्मदो न स्यात् । मा भवानपश्यत् ॥

नाम्यन्ताद्धातोराशीरद्यतनीपरोक्षासु धो ढः ॥ २२ ॥

नाम्यन्ताद्धातोराशीरद्यतनीपरोक्षासु यो धकारस्तस्य ढकारो भवति । चेषीढ्वम् । क्षषीढ्वम् । अध्यगीढ्वम् । समस्थिढ्वम् । तुष्टुढ्वे । चकृढ्वे ॥ अन्तग्रहणं भूतपूर्वनाम्यन्तार्थम् । तेन प्रावरिषीढ्वम् । अलविढ्वम् । लुलुविढ्वे ॥ धातोरिति संज्ञापूर्वकत्वादनित्यार्थम् । तेनासु सेट्सु विभाषा सिद्धा । प्रावरिषीढ्वम् । प्रावरिषीध्वम्[4] । अलविढ्वम् । अलविध्वम् । दिदीयिढ्वे । दिदीयिध्व इत्यपि[5] ॥

---

१ मास्वयोगे A.

२ साधुवृत्तिरिति B.; साधुवृत्तं इतीव वाचो निगृहीतकण्ठैः प्राणैररुध्यन्त महर्षिसूनोः ॥ A.

३ F. om. this example.

४ Om. B. F.

५ इत्यपि स्यात् । F.

**मर्जो मार्जिः ॥ २३ ॥**

मर्ज इत्येतस्य मार्जिरादेशो भवति । मार्ष्टा । मार्क्ष्यति । अमार्ट्[१] । मार्जो वर्तते ॥ मर्ज इति किम् । मृष्टः ॥
अगुणे स्वरे वा वक्तव्यम् । परिमृजन्ति । परिमार्जन्ति ॥

**धात्वादेः षः सः ॥ २४ ॥**

धातोराद्यवयवस्य षकारस्य[२] सकारो भवति । षह । सहते ॥ षिच् । सिञ्चति ॥ धातोरिति किम् । षट् । षण्डः ॥ आदेरिति किम् । लषितुम् ॥ कथं षण्डीयति । नामधातुत्वाद् धातोस्त्वारम्भको यिन् न षकार[३] इति ॥ ष्ठिवुक्लम्वाचमामनि [का० ३. ६. ६७] इति निर्देशात् । ष्ठीवति । ष्ठिवेरपि षकारष्ठकारपरस्थकारपरो[४] वेति मतम्[५] । तेन टेष्ठीव्यते । तेष्ठीव्यत[६] इति सिद्धम् ॥
ष्वक्केर्न स्यादिति वक्तव्यम् । ष्वक्कते । निमित्तादिकारस्यस्य सकारस्य षत्वार्थः षोपदेशो धातूनामिति । तत्र च स्वरदन्त्यपराः सादयः षोपदेशाः । [७]स्मिङ्स्विदिस्वदिस्वपयश्च सृपिसृजिस्तृस्त्यासीकृसेकृवर्जम्[८] ॥

---

१ Om. F.
२ °आद्यस्यावयवस्य° A.; °षस्य F.
३ सकार B.
४ °परस्थकारो A.; षकारपरस्थकारपरो B.
५ F. om. मतं.
६ तेस्थीव्यते A. B.
७ ष्विङ° A.; स्मिङस्विदि etc. B.
८ °वर्जनम् F.; °वर्ज्यं B.

## णो नः ॥ २५ ॥

धात्वादेर्णकारस्य नकारो भवति। णीञ् नयति। णम नमति॥ धात्वादेरिति किम्। क्वणति॥ कथं णकारीयति। नामधातुत्वात्॥ इहाप्युपसर्गादसमासे णोपदेशस्य णत्वार्थो नकारपाठः[1]॥ सर्वे नादयो णोपदेशाः। नृतिनन्दिनर्दिनक्किनाटिनटिनॄनाथृनाध्ववर्जम्॥

## निमित्तात्प्रत्ययविकारागमस्थः सः षत्वम्॥ २६॥

अन्वार्थोऽयमारम्भः। निमित्तान्नामिकरात् परः प्रत्ययविकारागमस्थः सः षत्वमापद्यते॥ नामिनस्तावत्[2]। चिचीषति। लुलूषति। सर्पिष्यति। धनुष्यति॥ कात्। शक्ष्यति। विवक्षति॥ रात्[3]। चिकीर्षति॥ विकारस्थः[4]। सिषेव। सुष्वाप॥ आगमस्थः। परिष्करोति। वचनाद् भिन्नपदेऽपिव्यपदेशिवद्भावात्॥ प्रत्ययविकारागमस्थ इति किम्। स्पृ। सिस्पृषति॥ सेक्ष। सिसेकिषते। तस्यैवापिशब्दस्यायं प्रपञ्चः॥

तथोपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतीनाम् अडन्तरो[5]

---

1 नकारः पाठः A. B.

2 नामिपरस्तावत् A.; and adds निनीषति।

3 रेफात्। A.

4 विकारागमस्थः B.

5 अतन्तरो F.; अनन्तरो B.; अडभ्यासान्तरो A.

ऽपि। अभिषुणोति। अभ्यषुणोत्। अभिषुवति। अभ्यषुवत्। अभिष्यति। अभ्यष्यत्। अभिष्टौति। अभ्यष्टौत्। अभिष्टोभते। अभ्यष्टोभत ॥

स्थासेनिसेधतिसिचसञ्जस्वञ्जाम् अड्भ्यासान्तरोऽपि। अभिष्ठास्यति। अभ्यष्ठात्। अभितष्ठौ ॥ सेनया ह्यभियाति[१]। अभिषेणयति। अभ्यषेणयत्। अभिषिषेणयिषति[२] ॥ अभिषेधति। अभ्यषेधत्[३]। प्रतिषिषेधयिषति। प्रत्यषेधत्। प्रतिषिषेधिषति ॥ अभिषिञ्चति। अभ्यषिञ्चत्। अभिषिषिक्षति ॥ अभिषजति। अभ्यषजत्। अभिषिषङ्क्षति ॥ परिष्वजते। पर्यष्वजत। परिषिष्वङ्क्षते ॥

सदेरप्रतेः ॥ निषीदति। न्यषीदत्। निषिषत्सति ॥ अप्रतेरिति किम्। प्रतिसीदति। प्रत्यसीदत्। प्रतिसिषत्सति[४] ॥

प्रतेरपि स्तम्भेः ॥ प्रतिष्टभ्नाति। प्रत्यष्टभ्नात्। प्रतितष्टम्भ[५] ॥ एवम् अभिष्टभ्नाति। अभ्यष्टभ्नात्[६]। अभितष्टम्भ[६] ॥ अवाद् और्जित्यनिकटाश्रयेषु। मल्लस्यावष्टम्भः। अवष्टब्धा सेना। दण्डमवष्टभ्यास्ते ॥ एष्विति किम्। अवस्तब्धो वृषलः। शीतेन संकुचित इत्यर्थः ॥

---

१ A. om. हि.

२ Om. F.

३ प्रतिषेधति। प्रत्यषेधत् F.; अभिषेधयति। अभ्यषेधयत् B.

४ B. F. om. the two last.

५ प्रतिष्टम्भयति। B.; प्रतिष्टम्भिषति। A.

६ F. om. this, A. the next word.

वेश्च स्वनो भोजने ॥ विष्वणति । अवष्वणति । व्यष्वणत् । अवाष्वणत् । विषष्वाण । अवषष्वाण । सशब्दं भुङ्क्त इत्यर्थः ॥ एवमन्येऽप्यनुसर्तव्याः ॥

## शासिवसिघसीनां च ॥ २७ ॥

निमित्तात्परः शासिवसिघसीनां च सः षत्वमापद्यते । शिष्यते(१) । उष्यते । जक्षतुः ॥ अविकारस्थ इत्यारम्भः(२) ॥

## स्तौतीनन्तयोरेव सनि ॥ २८ ॥

निमित्तात्परः प्रत्ययविकारागमस्थः स्तौतीनन्तयोरेव सनि षत्वभूते सः षत्वमापद्यते । तुष्टूषति । सिषेधयिषति । सुष्वापयिषति ॥ स्तौतीनन्तयोरिति किम् । सिसिक्षति । सुसूषति ॥ षत्वभूत इति किम् । तिष्ठासति । सुषुप्सति ॥ कथं सोषुपिषते(३) । चेक्रीयिते(४) षत्वं पश्चात् सन् ॥ अर्थात् प्रतीषिषति । सनोऽवयवस्थानभ्यासस्थान्निमित्तात्(५) षत्वं स्यादेव ॥

स्विदिस्वदिसहीनामिनन्तानां(६) नेष्यते । सिस्वेदयिषति । सिस्वादयिषति । सिसाहयिषति ॥ तेनैवापि शब्देनान्यदपि व्यभिचार्यते(७) । तथा सिचश्चेक्रीयिते न स्यात् । सेसिच्यते ॥ सुनोतेः स्ये ।

---

१ शिष्यति A.
२ °स्थो यमारम्भः A.
३ पिषते A.; सोषुपिषति F.
४ चेक्रीयितेति F.
५ सनोऽभ्यासस्था° A.
६ इनान्तानां षत्वं A.
७ व्यभिचर्यते A.

अभिसोष्यते ॥ सेधतेर्गतौ[1] । अभिसेधयति गाम् । गमयतीत्यर्थः ॥ एवमन्येऽप्यनुसर्तव्याः ॥

लुग्लोपे न प्रत्ययकृतम् ॥ २९ ॥

लुका लोपे सति प्रत्यये परे यत् कार्यं[2] प्रकृतेस्तन्न भवति[3] । लुका लोपो यस्येति विग्रहः[4] । अङ्गाः । वङ्गाः । कलिङ्गाः[5] । पञ्च । कति । दुग्धे । विकरणलुकि न गुणः । लुकीति न[6] कृतं लुग्लोपयोर्विशेषप्रतिपत्त्यर्थम् । तेन प्रत्ययलोपे प्रत्ययलक्षणमवधार्यते । अभित्त । अच्छित्त ॥ प्रत्ययकृतमिति किम् । परस्यान उस् । उदगुः । अदुः ॥ कतीह । पञ्चात्र[7] ॥

स्वरविधिः स्वरे द्विर्वचननिमित्ते कृते द्विर्वचने ॥ ३० ॥

द्विर्वचननिमित्ते स्वरादौ प्रत्यये परे प्रकृतेः[8] पूर्वस्मिन् परस्मिन् वा द्विर्वचने कृते[9] स्वरस्य स्थाने विधिर्भवति । पपतुः । आटिटत् । जग्मतुः । इयाय । निनाय । निनयिथ । लुलाव । लुलविथ । निन्यतुः । चक्रतुः ॥ स्वरविधिरिति किम् । असूषुपत्[10] । सपरस्वरायाः[11] संप्रसारणे पश्चाद् द्विर्वचनम् ॥ स्वर इति किम् । जेघ्रीयते ॥ द्विर्वचननिमित्त इति किम् । दुद्यूषति ॥

---

१ सेधयतेर्गतौ A.
२ यत्कृतं कार्यं B. and om. प्रकृतेः
३ स्यात् A.
४ वा विग्रहः F.
५ मगधाः । F.
६ A. om. न.
७ B. adds इति; A. सन्धिः स्यादेव।
८ कृते A.
९ F. adds पश्चात्; A. om. स्थाने.
१० असूसुपत् MSS.
११ स्वपरस्वरायाः संप्रसारणमन्त्यायाः A.

येन विना यन्न भवति तत्तस्य निमित्तम् ॥ इटो विधिना सनि द्विर्वचनमिति तेन । अरिरिषतीति सिद्धम् ॥ कथम् इयेष । उवोष । न स्थानिवत्त्वम् । असवर्ण इति वचनात् ॥

### योऽनुबन्धोऽप्रयोगी ॥ ३१ ॥

अनुबध्यत इत्यनुबन्धः । अप्रयुक्तिरप्रयोगः । अनुबन्धो यः सोऽप्रयोगी । अनुच्चारणीयो भवति(१) । इङ् । अधीते ॥ डुकृञ् । कुरुते । एवमन्येऽपि ॥

### शिडिति शादयः ॥ ३२ ॥

शादयो वर्णा हपर्यन्ताः शिडिति संज्ञिताः(२) ॥ शिट्प्रदेशाः । शिट्परोऽघोषः [का० ३. ३. १०] इत्येवमादयः ॥

### संप्रसारणं य्वृतोऽन्तःस्थानिमित्ताः ॥ ३३ ॥

इश्च उश्च ऋश्चेति द्वन्द्वः । तकारः(३) सुखनिर्देशार्थः । अन्तःस्थैव निमित्तमुत्पत्तिर्येषां तेऽन्तःस्थानिमित्ता य्वृतः संप्रसारणमिति संज्ञिताः(४) ॥ संप्रसारणप्रदेशाः । सपरस्वरायाः संप्रसारणमन्तःस्थायाः [का० ३. ४. १] इत्येवमादयः ॥ अन्तःस्थानिमित्ता इति किम् । स्थितः । स्थितवान् । तद्दीर्घमन्त्यं न स्यात् ॥

---

१ ऽप्रयोगी भवति अनुच्चारणीय इत्यर्थः A.

२ शिट्संज्ञा भवन्ति । A.

३ य्वृतस्तकारः A.

४ संज्ञा । A.

## अर् पूर्वे द्वे सन्ध्यक्षरे च गुणः ॥ ३४ ॥

अर् पूर्वे द्वे सन्ध्यक्षरे च गुण इति संज्ञिताः(१)। एकं पूर्वमेकारमपेक्ष्यापरं(२) चौकारमपेक्ष्येति ॥ गुणप्रदेशाः। नाम्यन्तयोर्धातुविकरणयोर्गुणः [का° ३. ५. १] इत्येवमादयः ॥

## आरुत्तरे च वृद्धिः ॥ ३५ ॥

आर् उत्तरे च द्वे सन्ध्यक्षरे वृद्धिरिति संज्ञिताः(३)। आर्। ऐ। औ ॥ वृद्धिप्रदेशाः। वृद्धिरादौ(४) सणे(४) [का° २. ६. ४९.] इत्येवमादयः ॥

॥ इति दौर्गसिंह्यां वृत्तावाख्यातेऽष्टमः पादः समाप्तः ॥

॥ इत्याख्यातं समाप्तम् ॥

---

१ संज्ञिते A. B.
२ °पेक्ष्यापरात्तौकार° B.
३ संज्ञिते A. B.
४ अस्योपधाया दीर्घो वृद्धिर्नामिनामिनि चटसु B.

अथ कृतः ॥

वृक्षादिवदमी रूढाः कृतिना न कृताः कृतः ।
कात्यायनेन ते सृष्टा विबुद्धिप्रतिबुद्धये ॥

## सिद्धिरिज्वद् ञ्णानुबन्धे ॥ १ ॥

ञानुबन्धे णानुबन्धे च कृत्प्रत्यये परे धातोरिचीव कार्यस्य सिद्धिरतिदिश्यते[१] ॥

इज्वद्भावेऽस्योपधाया दीर्घो वृद्धिश्च नामिनाम् ।
हन्तेर्घो जन्वधोर्ह्रस्वः कुटादीनां गुणो भवेत् ॥
स्यादादन्तानामायिश्च इनीचीति[२] निबन्धनात् ।
न ह्रस्वो मानुबन्धानामिचि वा वचनेन च ॥

पाठः । पाठकः । कारः । कारकः । घातः । घातकः । जनः । जनकः । वधः । वधकः । उत्कोटः । उत्कोटकः । पायः । पायकः ॥ सिद्धिग्रहणं भिन्नकर्तृकत्वात्मङ्गलार्थम् ॥

## हन्तेस्तः ॥ २ ॥

हन्तेर्नकारस्य तकारो भवति । ञानुबन्धे णानुबन्धे च कृत्प्र-

---

१ सिद्धिरिति दिश्यते B.  २ इनिचीति A.

त्यये परे । घातः । घातकः ॥ कथं भ्रौणहत्यमिति रूढितः सिद्धः[१] ॥

## न सेटोऽमन्तस्यावमिकमिचमाम् ॥ ३ ॥

इञ्मात्रमिह[२] स्मर्यते । सेटोऽमन्तस्य वमिकमिचमिवर्जितस्येचि कृतं कार्यं न भवति । अशमि । अतमि ॥ मानुबन्धे कृतीञ्वद्भावाच्च । शमः । शमकः । शमी । तमः । तमकः । तमी ॥ सेट इति किम् । अयामि । यामः । यामकः ॥ अवमिकमिचमामिति किम् । अवामि । अकामि । अभिधानादाङ्पूर्वस्य चमिः । आचामि । वामः । कामः । आचामः ॥ कथम् आमः । अम रोग इति चौरादिक इनि दीर्घः[३] ॥ वौ अमेर्नानिर्दिष्टस्यानित्यत्वात् । विश्रामः ॥ कथम् उद्यमः । यम चेति चौरादिको[४] मानुबन्धश्च ॥ उपरम इति च दृश्यते ॥

## प्रत्ययलुकां चानाम् ॥ ४ ॥

प्रत्यये लुग् येषां धातूनामेकदेशस्य ते प्रत्ययलुकोऽर्थात् । अनामित्यनकाराणां । प्रत्ययलुकां[५] धातूनां नलोपवर्जितानां यत् प्राप्तं तन्न भवति । अर्थात् तस्मिन्नेव प्रत्यये परे । समिधिता । समिधकः । अदृशदि । दृशदकः । यिन् ॥ लोलुवः । मरीमृजः ।

---

१ सिद्धिः B.
२ इङ्मात्र° A.; इन्मात्र° B.
३ इनदीर्घः A.
४ चुरादौ B.
५ प्रत्ययलुकाद्यानां A.

तस्य लुगचि। अस्योपधाया दीर्घो गुणश्च न स्यात्॥ प्रत्ययस्य लुग्येभ्य इत्युक्ते। भेद्यात्। वेत्तीति। इन्नर्नोर्लुकि प्रतिषेधः स्यात्॥ अनामिति किम्। इन्धेर्घञि। एधः॥ उन्देर्मनि। ओद्म॥ रञ्जेः। रागः॥ कथं कुचेर्निकुचितमिति संनिपातलक्षणत्वाद् गुणस्य॥

## सार्वधातुकवच्छे॥ ५॥

शानुबन्धे कृति परे सार्वधातुक इव कार्यं भवति। जुह्वत्। पचमानः। कृञः श च [का° ४. ५. ७७] क्रिया। यस्य यदुक्तं तस्य तदेव श्रुतत्वात्॥

## ङे न गुणः॥ ६॥

ङानुबन्धे कृति परे गुणो न भवति। बिभ्यत्। विदन्। सुन्वन्। कतीह मधु लिहानाश्चिन्वानाः॥

## के यण्वच्च योक्तवर्जम्(१)॥ ७॥

कानुबन्धे कृति परे यणीव कार्यं भवति। य उक्तं वर्जयित्वा। कृतः। कृतवान्। गृहीत्वा। इष्टिः। यण्वद्भावेऽगुणत्वं संप्रसारणं च स्यात्॥ योक्तवर्जमिति किम्। कृतः। जितः। स्मृतः। इकारागमदीर्घगुणा न स्युः॥

## जागुः कृत्यशन्तृङ्व्योः॥ ८॥

जागर्तेः कृति परे यणीव कार्यं भवति। न तु शन्तृङ्व्योः।

१ यण्वच्चोक्तवर्जं A. B.

यणाशिषोर्ये । जागरकः । जागरितः । जागर्तिः[1] ॥ क्ङतीति किम् । जागृयात् ॥ अशन्तृङ्व्योरिति किम् । जाग्रत् । जागृविः । ह्वॄजागृभ्यः क्विः[2] ॥

गुणी क्त्वा सेड् अरुदादिक्षुधकुशक्लिशगुधमृडमृदवदवसग्रहाम् ॥ ९ ॥

अरुदादिक्षुधादीनां क्त्वा सेड् गुणी भवति । यस्मिन् यो भवति स तस्येति विवक्षायामिन् । शयित्वा । देवित्वा । अंसित्वा ॥ क्त्वेति किम् । निकुचितिः ॥ शीङादीनां सेड् निष्ठेवेति नियमस्य स्यात् ॥ सेडिति किम् । कृत्वा ॥ अरुदादिक्षुधादीनामिति किम् । रुदविदमुषां सनि [का० ३. ५. १६] इत्यत्र रुदिसहचरितो[3] विदिर्ज्ञानार्थः । रुदित्वा । विदित्वा । मुषित्वा । क्षुधित्वा । कुशित्वा । क्लिश क्लिशू क्लिशित्वा । गुधित्वा । व्युपधत्वाद्वा न स्यात् ॥ मृडित्वा । मृदित्वा । वद उदित्वा । वस निवास एव यजादित्वाद् उषित्वा । क्षुधिवसोश्च [का० ४. ६. ८७] इतीट् ॥ गृहीत्वा ॥

स्कन्दस्यन्दोः क्त्वा ॥ १० ॥

अनयोः क्त्वा[4] गुणी भवति । स्कन्दिर् स्कन्त्वा । स्यन्दू स्यन्त्वा ॥ असेडर्थमिदं पुनः क्त्वाग्रहणम् ॥ यप् गुणी मा भूत् । प्रस्कद्य । प्रस्यद्य ॥

---

१ जागर्ते B.
२ ह्वगृ० A. B.
३ B. om. रुदि.
४ क्त्वासेड् A.

## व्यञ्जनादेर्य्युपधस्यावो वा ॥ ११ ॥

उश्च इश्च वी । ते उपधे यस्य स व्युपधः । व्यञ्जनादेर्धातोरु-कारेकारोपधस्यावकारान्तस्य(१) क्त्वा सेड् गुणी भवति वा । द्यु-तित्वा । द्योतित्वा ॥ लिखित्वा । लेखित्वा ॥ व्यञ्जनादेरिति किम् । एषित्वा । ओषित्वा ॥ अव इति किम् । देवित्वा ॥

संश्चेति वा वक्तव्यम् । रुरुचिषते । रुरोचिषते । लिलिखिषति । लिलेखिषति ॥

## तृषिमृषिकृशिवञ्चिलुञ्च्यृतां(२) च ॥ १२ ॥

एषां धातूनां क्त्वा सेड् गुणी भवति वा । तृषित्वा । तर्षित्वा ॥ मृषित्वा । मर्षित्वा ॥ कृश तनूकरणे । कृशित्वा । कर्शित्वा ॥ वचित्वा । वञ्चित्वा ॥ लुचित्वा । लुञ्चित्वा ॥ ऋत इति सौत्रो धातुः । ऋति-त्वा । अर्तित्वा ॥

## थफान्तानां चानुषङ्गिणाम्(३) ॥ १३ ॥

थान्तानां फान्तानां चानुषङ्गिणां(३) क्त्वा सेड् गुणी भवति वा(४) । श्रथित्वा । श्रन्थित्वा ॥ ग्रथित्वा । ग्रन्थित्वा ॥ गुफित्वा । गुम्फित्वा ॥ अनुषङ्गिणामिति किम् । कोथित्वा । रेफित्वा । व्युप-धत्वे(५) विकल्पो न स्यात् ॥

---

१ °धातोरुकारोपधस्य° A.
२ °कृषिवञ्चिलुञ्चितां B.
३ सानुसंञ्चिनां A.
४ A. om. वा.
५ व्युपधत्वे पि B.



## जान्तनशामनिटाम् ॥ १४ ॥

जान्तनशामनिटामनुषङ्गिनां क्त्वा(१) गुणी भवति वा। भक्त्वा। भङ्क्त्वा ॥ रक्त्वा। रङ्क्त्वा ॥ नष्ट्वा। नंष्ट्वा। मस्जिनशोर्धुटीति नकारागमः ॥ अनिटामिति किम्। अञ्जित्वा ॥

## शीङ्पूङ्धृषिक्ष्विदिस्विदिमिदां निष्ठा सेट् ॥ १५ ॥

शीङादीनां निष्ठा सेड् गुणी भवति। शयितः। शयितवान् ॥ पवितः। पवितवान्। पूक्लिशोर्वा [का० ४. ६. ८८] इतीट् ॥ एवं धर्षितः। धर्षितवान् ॥ क्ष्वेदितम्। मेदितम्। प्रक्ष्वेदितः। प्रस्वेदितः। प्रमेदितः। आदनुबन्धाद्(२) भावादिकर्मणोर्वा [का० ४. ६. ९२] इतीट् ॥ सेडिति किम्। पूतः। धृष्टः ॥ उत्तरत्र वावचनान्नित्यमिहेति ॥

## मृषः क्षमायाम् ॥ १६ ॥

क्षान्तौ वर्तमानान्मृषो धातोर्निष्ठा सेड् गुणी भवति। मर्षितः। मर्षितवान् ॥ क्षमायामिति किम्। अपमृषितं वाक्यमाह ॥

## भावादिकर्मणोर्वोदुपधात् ॥ १७ ॥

उदुपधाद्धातोर्भाव आदिक्रियायां(३) च निष्ठा सेड् गुणी भवति वा। द्योतितमनेन। द्युतितमनेन ॥ प्रद्योतितः। प्रद्युतितः।

---

१ क्त्वासेड् B.
२ आदनुबन्धत्वाद् B.
३ आदिक्रियां B.

आदिकर्मणि क्तः कर्तरि च । व्यवस्थितविभाषया गुणनः स्यात् ॥ गुधितम् ॥

ह्लादो ह्रस्वः ॥ १८ ॥

ह्लादो दीर्घो ह्रस्वो भवति निष्ठामात्रे । प्रह्लन्नः । प्रह्लन्नवान् ॥ प्रह्लत्तिरिति क्तौ चेष्यते ॥

छादेर्घेस्मन्त्रन्क्विप्सु ॥ १९ ॥

छादेर्घेस् मन् त्रन् क्विप् । एषु परतो दीर्घो ह्रस्वो भवति । उरश्छदः[1] । प्रच्छदः । एकोपसर्गस्यैव घे व्यवस्थितवास्मरणात्[2] । तेन समुपच्छादः ॥ अर्चिशुचिहुसृपिच्छादिछर्दिभ्य इस् । छादयतीति च्छदिः । छदिषी । छदींषि ॥ मन् । छद्म ॥ त्रन् । छाद्यतेऽनेनेति च्छत्त्रम् ॥ क्विप् । तनुच्छत् ॥

दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे ॥ २० ॥

दीर्घान्तस्योपपदस्यानव्ययस्य खानुबन्धप्रत्ययान्ते धातौ[3] परे ह्रस्वो भवति । वधुंमन्या दासी । ग्रामणिंमन्यो दासः । वृद्धंमन्या । कालिंमन्या । हरिणिंमन्येति[4] विवक्षितकर्तृकर्मैकवस्तुप्राप्तं पुम्वद्भावं बाधते परत्वात् ॥ दीर्घग्रहणं तदन्तसुखार्थमित्येके । वाङ्मन्या ॥ उपपदस्येति किम् । पट्वी[5] प्रियंवदा ॥ अनव्ययस्येति किम् । दिवामन्या रात्रिः ॥

---

१ उरच्छदः B.

२ व्यवहितवास्मरणात् A.; B. om. तेन.

३ खानुबन्धे प्रत्ययान्तधातौ B.

४ हरिंमन्येति B.; हेरिणिंमन्या A.

५ पट्वो A. B.

## नामिनो ऽम् प्रत्ययवच्चैकस्वरस्य ॥ २१ ॥

उपपदस्थानव्ययस्यैकस्वरस्य नामिनः परो ऽम्भवति । खानुबन्धप्रत्ययान्ते धातौ परे । स च प्रत्यय इव । सान्निध्याद् द्वितीयैकवचनवत् । यथा । रविकरस्तरुषु किसलयमिव । रक्त इति[१] गम्यते ॥ नावंमन्यः । नरंमन्यः । गांमन्यः । श्रियंमन्यः[२] ॥ नामिन इति किम् । ज्ञंमन्या[३] ॥ एकस्वरस्येति किम् । सेनानिंमन्यः ॥

## ह्रस्वारुषोर्मो ऽन्तः ॥ २२ ॥

उपपदस्थानव्ययस्य ह्रस्वान्तस्यारुषश्च[४] मकारो ऽन्तो भवति खानुबन्धप्रत्ययान्ते धातौ परे । नाडिंधमः । अङ्गमेजयः । अरुंतुदः । संयोगादेर्धुटः [का० २. ३. ५५] इति सलोपः ॥ अनव्ययस्येति किम् । सुकरः कटः ॥

## सत्यागदास्तूनां कारे ॥ २३ ॥

सत्यादीनां कारशब्दे परे मो ऽन्तो भवति ॥ सत्यं करोतीति सत्यंकारः । एवम् अगदंकारः । अस्तुंकारः ॥ उपोच्चारिपदानामपि कारे[५] । घञन्ते ऽपीच्छन्ति । सत्यस्य कारः सत्यंकारः । एवमन्यत्रापि मकारवर्णागमो[६] दृश्यते । लोकंप्रीणः । भ्राष्ट्रमिन्धः ।

---

१ रक्तमिति A.
२ गांमन्या । श्रियंमन्या । A.
३ ज्ञम्मन्यः O.
४ °स्यारुषश्च B.; A. om. ह्रस्वान्तस्य.
५ उपच्चारिपदानामपि B.
६ मकारागमो B.

अग्निमिन्धः। भद्रंकरणम्। उष्णंकरणम्। मध्यंदिनम्॥ श्येनंपाता[(1)] तैलंपाता क्रीडा॥

गिलेऽगिलस्य॥ २४॥

गिलादन्यस्य गिलशब्दे परे मोऽन्तो भवति। गिरतेः कप्रत्ययः॥ तिमेर्गिलः। तिमिंगिलः॥ एवं रिपुंगिलम्॥ अगिलस्येति किम्। गिलगिलः॥

अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तरः[(2)]।
तिमिंगिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः॥

उपसर्गादसुदुर्भ्यां लभेः प्राग् भात् खल्घञोः॥ २५॥

उपसर्गात्परस्य लभेर्भात् प्राङ् मकारागमो भवति। खल्घञोः परतः। न तु सुदुर्भ्याम्। ईषत्प्रलम्भः। सुप्रलम्भः। दुष्प्रलम्भः॥ घञि च। प्रलम्भः। विप्रलम्भः॥ उपसर्गादेवेति नियमात्। ईषल्लभः। लाभो वर्तते॥ असुदुर्भ्यामिति किम्। सुलभः। दुर्लभः॥ केवलाभ्यामेवेष्यते तेन। अतिसुलम्भः। अतिदुर्लम्भः॥ कथम् अतिसुलभः। अतिदुर्लभः। पश्चादतिना समासः॥

आङो यि[(3)]॥ २६॥

आङः परस्य लभेर्भात् प्राङ् मकारागमो भवति यकारादौ प्रत्यये परे[(4)]। आलम्भ्या गौः॥

---

१ शौनंपाता O.

२ O. om. this half-śloka; the Chaitrakuṭî reads अस्ति मत्स्यस्तिमिर्नाम मत्स्योऽप्यस्ति तिमिंगिलः।

३ ये Chaitr.

४ यकाराप्रत्यये परे B.; ये परे A.

### उपात् प्रशंसायाम् ॥ २७ ॥

उपात्परस्य लभेर्भात् प्राङ् मकारागमो भवति प्रशंसायां गम्यमानायां[1] ये परतः। उपलम्भ्यानि धनानि। प्रशंसनीयानीत्यर्थः॥ प्रशंसायामिति किम्। उपलब्धुं शक्यम्। उपलभ्यम्॥ कथम् आलभ्य। उपलभ्यते। लभेर्यकार इति विशेषणात्॥

### वा कृति रात्रेः ॥ २८ ॥

कृदन्ते परे रात्रेर्मोऽन्तो भवति वा। रात्रिंचरः। रात्रिचरः। रात्रिमटः। रात्र्यटः। पचादित्वादच्[2]॥ रात्रिंमन्य इति नित्यम् उपपदाश्रयत्वात्॥

### पुरंदरवाचंयमसर्वंसहद्विषंतपाश्च ॥ २९ ॥

एतेऽण्प्रत्ययान्ता निपात्यन्ते। पुरं दारयतीति पुरंदर इन्द्रः[3]। वाचं यच्छतीति वाचंयमो व्रत एव[4]। सर्वं सहते सर्वंसहः। द्विषं[5] तापयतीति द्विषंतपः॥ यल्लक्षणेनानुत्पन्नं तत्सर्वं निपातनात् सिद्धम्॥ भगं दारयतीति भगंदरो रोगो रूढित एव॥

### धातोस्तोऽन्तः पानुबन्धे ॥ ३० ॥

ह्रस्वारुषोर्मोऽन्त [४. १. २२] इत्यतो ह्रस्वोऽनुवर्तते। धातोर्ह्रस्वान्तस्य पानुबन्धे कृति परे तोऽन्तो भवति। अग्निचित्।

---

१ Om. B.
२ पचाद्यच् O.
३ शक्रः A.; मघवा Chaitr.
४ A. corr. व्रती एव; मुनिः Ch.
५ द्विषन्तं A.

सोमसुत् । प्रकृत्य । इत्वरः ॥ धातोरिति किम् । उपपदस्य मा भूत् । ग्रामणीः । सेनानि कुलम् ॥ वृत्तहभ्यामिति । अच्छिद्धं बहिरङ्गमन्तरङ्ग इति ॥ ह्रस्वान्तस्येति किम् । आनीय । आपूय ॥ कथम् उपेत्य । साधनायत्तत्वात् क्रियायाः प्रत्ययकार्यमेव ॥ अन्तग्रहणं सुखार्थम् ॥

ओदौद्भ्यां कृद्यः स्वरवत् ॥ ३१ ॥

ओदौद्भ्यां कृद्यः स्वरवद् भवति । लव्यम्[1] । अवश्यलाव्यम् ॥ ओदौद्भ्यामिति किम् । चेयम् ॥ कृद्य इति किम् । उपोयते । औयत । इह[2] कृद्ग्रहणादन्यत्र सामान्यमवगम्यते ॥

जिक्ष्योः शक्ये ॥ ३२ ॥

जिक्ष्योः शक्येऽर्थे विहितः कृद्यः स्वरवद् भवति । जेतुं शक्यं जय्यम् । क्षेतुं शक्यं क्षय्यम् ॥ शक्य इति किम् । जेयम् । क्षेयम् ॥ जिक्ष्योरिति किम् । चेतुं शक्यः । चेयः[3] ॥

क्रीञस्तदर्थे ॥ ३३ ॥

तस्यार्थो द्रव्यविनिमयः[4] । क्रीञः परस्तदर्थे वर्तमानः कृद्यः स्वरवद् भवति । क्रय्या गौः । कश्चित् क्रेष्यतीति कृत्वा हट्टेऽवतारिता[5] गौरित्यर्थः ॥ तदर्थ इति किम् । क्रेयं मे धान्यं नास्ति क्रय्यम् । न प्रसारितमित्यर्थः[6] ॥

---

१ लाव्यं B.
२ इति O.
३ O. om. from जिक्ष्योरिति किं.
४ °विनियमः B.
५ हट्टेनावतारिता A.
६ प्रसारित° A.

## वेर्लोपोऽपृक्तस्य ॥ ३४ ॥

वेः कृत्संज्ञकस्यापृक्तस्य(१) वर्णान्तरेणासंयुक्तस्य लोपो भवति। क्विप्। घृतस्पृक् ॥ विण्। अर्धभाक् ॥ विच्। कीलालपाः ॥ कृत इति(२) किम्। उपेयिवांसमाचष्टे। उपेयिवयतीति क्विप्। उपेयिवः। उपेयिवौ ॥ अपृक्तस्येति किम्। क्विबादीनां विशेषकवानुबन्धानुत्सृज्येकारोपलक्षितस्य(३) वमात्रस्य लोपार्थं तेनेह न स्यात्। जागृविः। कृगॄजागृभ्यः क्विः ॥

## य्वोर्व्यञ्जने ऽये ॥ ३५ ॥

यकारवकारयोर्व्यञ्जने परे यकारवर्जिते लोपो भवति। क्रूयी। क्रूतः। क्रूतवान्(४)। दिदिवान्। सिषिवान् ॥ व्यञ्जन इति किम्। क्ष्मायिता। देविता ॥ अय इति किम्। प्रक्नूय्य(४)। प्रदीव्य॥ कथं कण्डूः। लोलूः। वर्णाश्रयेऽपि प्रत्ययलोपलक्षणं क्वचित् ॥ लब्धा। लब्धुमित्योष्ठ्योऽयं वकारः ॥

## निष्ठेटीनः ॥ ३६ ॥

निष्ठायामिटि परे इनो लोपो भवति। हारितः। हारितवान्। लक्षितः। लक्षितवान् ॥ इटीति किम्। संज्ञपितः पशुः॥ इवन्तर्ध० [का० ३. ७. २३] इत्यादिना सनि वेट्।

वेटामेकस्वरस्मृत्या संज्ञपित इडस्ति ते।
पाचिते प्रागिनो लोप एकस्वरान्न चेट् पचेः ॥

---

१ कृत्संज्ञस्य० A.
२ कृत्संज्ञकस्येति B.
३ विशेषकवाननुबन्धानुसृज्य इका० B.
४ क्नुयी। क्नुत०। प्रक्नुय्य MSS.

नाल्विष्ण्वाय्यान्तेत्नुषु ॥ ३७ ॥

आलु । इष्णु । आय्य । अन्त । इत्नु । एषु परत इनो लोपो न भवति । स्पृहयालुः । पारयिष्णुः[१] ॥ स्पृहयाय्यः । श्रुदृक्षिस्पृहिगृहिभ्य आय्यः ॥ गण्डयन्तः । मण्डयन्तः । गण्डिमण्डिजिनन्दिभ्यो झच्[२] ॥ स्तनयित्नुः । स्तनिक्षिपुषिगदिमदिभ्य[३] इन इत्नुः ॥

लघुपूर्वोऽय् यपि ॥ ३८ ॥

लघुपूर्व इन अय् भवति यपि परे । वचनादेकवर्णव्यवधानेऽपि[४] । प्रणमय्य । विगणय्य ॥ लघुपूर्व इति किम् । संप्रधार्य गतः ॥ आपः परस्य वा वक्तव्यम् । प्राप्य गतः । प्रापय्य गतः ॥ इङादेशस्य लाक्षणिकत्वात् । अध्याप्य गतः ॥

मीनात्यादिदादीनामाः ॥ ३९ ॥

मीनातिमिनोतिदीङां[५] दामागायतिपिबतिस्थास्यतिजहातीनां च यपि पर आकारो भवति । मीञ् प्रमाय । डुमिञ्[६] परिमाय । दीङ् उपदाय ॥ दामादीनामीत्वबाधनार्थमेव । प्रदाय । प्रधाय । मेङ् माङ्[७] प्रमाय । प्रगाय । प्रपाय । प्रस्थाय । षो अवसाय । अवहाय ॥

---

१ Thus A. B.; पारयिष्णुः । धारयिष्णुः । Chaitr.; O. adds पतयालुः ।

२ गण्डिमण्डिनन्दिभ्यो° O.

३ For पुषि A. reads घुषि; B. मृषिप्रषि; O. मृषिपृषि [°पुषि?]; Chaitr. सृषिपुषि; all MSS. have क्षषि.

४ °व्यवहितेऽपि B.

५ मिनाति° A.

६ डुमिङ् A.; डमिञ O.

७ मेङ्माङोरपि B.

### क्षेर्दीर्घः ॥ ४० ॥

क्षेर्दीर्घो भवति यपि परे । प्रक्षीय । उपक्षीय ॥ कथं प्रक्षित्य गतः । क्षिष् हिंसायामिति लाक्षणिकत्वात् ॥

### निष्ठायां च ॥ ४१ ॥

निष्ठायां च[1] क्षेर्दीर्घो भवति । प्रक्षीणः । प्रक्षीणवान् । प्रक्षीयतेऽस्मिन्निति प्रक्षीणमिदं छात्रस्य ॥ दीर्घ इति संज्ञापूर्वकत्वादनित्यार्थः । तेन भावकर्मणोर्न स्यात् । क्षितमनेन[2] । प्रक्षितश्छात्रो भवता ॥ आक्रोशदैन्ययोश्च वा । क्षितायुः । क्षीणायुः ॥ दैन्ये च । क्षितकः । क्षीणकः ॥ क्षितोऽयं क्षीणोऽयं तपस्वी । कर्त्रधिकरणयोरेवात्रापि ॥

### स्फायः स्फीः ॥ ४२ ॥

निष्ठायां च स्फायः स्फीरादेशो भवति । स्फीतः । स्फीतवान्[3] ॥ स्फायीति । इदनुबन्धबलादादेशोऽयमनित्य इति । स्फातः । स्फातवान् । इडेट् प्रतिषिध्यते ॥

### प्यायः पीः स्वाङ्गे ॥ ४३ ॥

स्वमङ्गं स्वाङ्गम् । स्वाङ्गे वर्तमानस्य प्यायतेर्धातोर्निष्ठायां च पीर्भवति । पीनं मुखम् । पीनवन्मुखम् ॥ स्वाङ्ग इति किम् । प्यानः स्वेदः । प्याना बुद्धिः । प्यानं मुखं शालायाः । प्यानः शोथः ॥

---

१ निष्ठायां परतः O.
२ प्रक्षितमनेन O.
३ स्फितः । स्फितवान् B.

कथं पीनो बाहू रथ्यायां पतितः । कथं पीनं मुखं प्रतिमायाः ॥ स्यादेव

अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं च तेन चेत् तत् तथायुतम् ॥

पीनाङ्गयोगात् पीनो वटुरिति । पीनः श्लेष्मा । पीनो वायुरित्युपमानात् ॥ आपीनोऽन्धुः । आपीनमूधः । आङो ऽन्धूधसोरेव ॥

शृतं पाके ॥ ४४ ॥

श्रातेः श्रपयतेश्च शृतमिति निपात्यते । पाके ऽर्थे । क्षीरहविषोरेव निपातनस्येष्टविषयत्वात् । शृतं क्षीरम् । शृतं हविः ॥ अन्यहेतौ न स्यात् । क्षीरं श्रपितं देवदत्तेन यज्ञदत्तेनेति ॥ क्षीरहविषोरिति किम् । श्राणा यवागूः । श्रपिता यवागूः ॥

प्रस्त्यः संप्रसारणम् ॥ ४५ ॥

प्रपूर्वस्य स्त्यायतेर्निष्ठायां[१] संप्रसारणं भवति । प्रस्तीतः । प्रस्तीतवान् ॥ प्रेण स्त्या इति समासात् । प्रसंस्तीमः । प्रसंस्तीमवान् । अन्तरङ्गत्वात् कृते संप्रसारणे मत्वं तु स्यात् पक्षे[२] ॥

द्रवघनस्पर्शयोः श्यः ॥ ४६ ॥

द्रवघने स्पर्शे चार्थे श्यायतेर्निष्ठायां च संप्रसारणं भवति । शीनं घृतम् । शीतो वायुः । द्रवीभूय घनं कठिनमित्यर्थः । लगि-

---

१ B. om. निष्ठायां.　　　　२ स्यादेव पक्षे O.

न्द्रियग्राह्यो गुणविशेषः स्पर्श इति ॥ द्रवघनस्पर्शयोरिति किम् । संश्यानो वृश्चिकः । शीतेन संकुचित इत्यर्थः[1] ॥

प्रतेश्च ॥ ४७ ॥

प्रतिपूर्वस्य श्यायतेर्निष्ठायां संप्रसारणं भवति । प्रतिशीनः । प्रतिशीनवान् । प्रतिपूर्वोऽयं रोग एव वर्तते ॥

वाभ्यवाभ्याम् ॥ ४८ ॥

अभ्यवाभ्यां परस्य श्यायतेर्निष्ठायां संप्रसारणं भवति वा । अभिशीनः । अभिश्यानः । अवशीनः । अवश्यानः । उभयत्र विभाषेयम् ॥

न वेञ्ज्योर्यपि[2] ॥ ४९ ॥

वेञ् । ज्या । इत्येतयोर्यपि परे संप्रसारणं न भवति । प्रवाय । प्रज्याय ॥ एतौ यजादिग्रहादी ॥

व्यश्च[3] ॥ ५० ॥

व्येञश्च यपि परे संप्रसारणं न भवति । प्रव्याय । उपव्याय ॥ यजादिरयम् ॥

संपरिभ्यां वा ॥ ५१ ॥

संपरिभ्यां परस्य व्येञः[4] संप्रसारणं भवति वा । यपि परे । संव्याय । संवीय । परिव्याय । परिवीय ॥ समो न विभाषेत्यन्ये ॥

---

१ O. om. from द्रव० इति किम् ।
२ वाज्योर्यपि MS. Chaitr.
३ व्येञश्च O.
४ वेञः B. and om. परस्य.

## तद् दीर्घमन्त्यम् ॥ ५२ ॥

तत्संप्रसारणं दीर्घमापद्यते। अन्त्यं चेत्। ऊतः। संवीतः। प्रस्तीतः। मित्रह्वः। संवीय। अन्तरङ्गत्वात् तकारागमं[1] बाधते ॥ अन्त्यग्रहणमाख्यातार्थं च। तद्ग्रहणमभिन्नबुद्ध्यर्थम्। तेन सपरस्वरायाः स्थाने संप्रसारणं सिद्धम् ॥

## वः क्वौ ॥ ५३ ॥

वेञः क्वावेव संप्रसारणं दीर्घमापद्यते। ऊः। उवौ। उवः ॥ क्वाविति किम्। उतः। उतवान् ॥

## ध्याप्योः[2] ॥ ५४ ॥

ध्याप्योः संप्रसारणं क्वौ परे दीर्घमापद्यते। धीः। आपीः ॥ वचनात्[3] संप्रसारणं सिद्धम् ॥

## पञ्चमोपधाया धुटि चागुणे ॥ ५५ ॥

पञ्चमान्तस्योपधाया दीर्घो भवति क्वौ धुट्यगुणे[4]। प्रशान्। प्रतान्। शान्तः। शान्तवान्। शान्तिः। शान्त्वा ॥ धुटीति किम्। अवमत्य ॥ अगुण इति किम्। गन्ता ॥ दीर्घ इति संज्ञापूर्वकत्वात् क्रमेः क्त्वाप्रत्यये वा। क्रन्त्वा। क्रान्त्वा ॥

---

१ गत्यन्तरङ्गत्वाद्कारागमं A.
२ The *Chaitr.* om. this *sûtram.*
३ वचनादेव O.
४ धुटि चागुणे प्रत्यये परे O.; भवति सिद्धौ धुटि चागुणे। B.

## छ्वोः शूठौ(१) पञ्चमे च ॥ ५६ ॥

छकारवकारयोः स्थाने(२) श्। ऊठ्(१)। इत्येतौ भवतो यथासंख्यम्। क्वौ धुट्यगुणे पञ्चमे च। विछ् गोविट्। प्रछ् पथिप्राट्। दिव् अक्षद्यूः। पृष्टः। पृष्ट्वा। द्यूतः। द्यूला। दुद्यूषति। विश्नः। प्रश्नः॥ सर्वधातुभ्यो मन्। स्योमा। अन्तरङ्गत्वाद् यत्वमेव॥ छस्य द्विःपाठो नैमित्तिकस्याप्यभावो वा॥

## श्रिव्यविमविज्वरित्वरामुपधया(३) ॥ ५७ ॥

एषामुपधया सह वकारस्योड् भवति। क्वौ धुट्यगुणे पञ्चमे च। श्रिवु। श्रूः। श्रुवौ। श्रुवः॥ अव। ऊः। उवौ। उवः॥ मव। मूः। मुवौ। मुवः॥ ज्वर। जूः। जुरौ। जुरः॥ त्वर। तूः। तुरौ। तुरः॥ श्रूतः। श्रूतवान्। श्रूतिः॥ ऊतिः। मूतिः। जूर्तिः॥ तूर्तिः॥ मन्। ओमा॥ अवतेरन्त्यस्वरादिलोपः। ओम्॥

## राल्लोप्यौ ॥ ५८ ॥

रेफात् परौ छकारवकारौ लोप्यौ भवतः। क्वौ धुट्यगुणे पञ्चमे च। मुर्छा। मूः। मुरौ। मुरः॥ धुर्वी। धूः। धुरौ। धुरः॥ मूर्तिः। मूर्तः। निष्ठानत्वं(४) नेष्यते॥ इहागुणपञ्चमानुवृत्तिर्न प्रयोजयति॥

---

१ MS. Chaitr. corr. शूठौ °ऊठ्; cf. Pâṇ. vi. 4, 132.

२ Om. A.

३ °उपधाया B.; °उपधयापि। MS. Ch.

४ °णत्वं A.; रान्निष्ठातो न इति न स्यात्। निष्ठानत्वं O.

वनतितनोत्यादिप्रतिषिद्धेटां(१) धुटि पञ्चमोऽच्चातः ॥ ५९ ॥

वनतेस्तनोत्यादेः(२) प्रतिषिद्धेटश्च पञ्चमो लोप्यो भवति धुट्यगुणे यथासंभवम् आतश्चाद् भवति। वनु(३)। वतः। वतवान्। वतिः। वत्वा ॥ तनोत्यादिर्मनुबोधनेपर्यन्तः। ततः। ततवान्। ततिः। तत्वा ॥ प्रतिषिद्धेटश्च। हतः। हतवान्। यतः। यतवान् ॥ क्षणुघृणुहृणु। एषां न दीर्घः(४)। क्षतम्। घृतम्। हृतमिति पक्षे येषामिडस्ति तेऽप्यनिट उच्यन्ते ॥

यपि च ॥ ६० ॥

वनतितनोत्यादिप्रतिषिद्धेटां यपि च परे(५) पञ्चमो लोप्यो भवति। वनु प्रवत्य। तनु प्रतत्य। षनु प्रसत्य(६)। हन प्रहत्य। मन प्रमत्य ॥ एषामिति किम्। प्रभण्य ॥

वा मः ॥ ६१ ॥

प्रतिषिद्धेटां वा मकारो लोप्यो भवति यपि परे। प्राप्ते विभाषा। प्रयम्य। प्रयत्य। प्रणम्य। प्रणत्य ॥

न तिकि दीर्घश्च ॥ ६२ ॥

वनतितनोत्यादिप्रतिषिद्धेटां तिकि दीर्घो न भवति न च

---

१ वनोति° B.

२ वनोतेस्तनोत्यादेश्च B.

३ वन B.; and om. वतः। वतवान्। वत्वा।

४ O. adds संज्ञापूर्वकत्वात्.

५ A. om. च; B. om. परे।

६ सनु° B.; °प्रषत्य A.

पञ्चमो लोप्यो भवति । वन्यात् । वन्तिः । तन्यात् । तन्तिः । यन्यात्(१) । यन्तिः । वध्यात् । हन्तिः ॥

उन्देर्मनि(२) ॥ ६३ ॥

उन्देर्मनि(२) पञ्चमो लोप्यो भवति । ओद्म । ओद्मनी ॥

घञीन्धेः ॥ ६४ ॥

इन्धेर्घञि पञ्चमो लोप्यो भवति । एधः ॥

स्यदो जवे(३) ॥ ६५ ॥

स्यन्देर्घञि स्यद इति दीर्घाभावो निपात्यते वेगेऽर्थे । स्यन्दू । स्यदः ॥

अवोदहिमश्रथप्रश्रथाश्च । इति निपातयितव्याः । अवपूर्वस्य उन्देः । अवोदः ॥ हिमपूर्वस्य प्रपूर्वस्य च श्रन्थेः(४) । हिमश्रथः । प्रश्रथः ॥

रञ्जेर्भावकरणयोः ॥ ६६ ॥

रञ्जेर्भावकरणयोर्विहिते घञि पञ्चमो लोप्यो भवति । रञ्जनं रागः ॥ भावे घञ्(५) । रज्यतेऽनेनेति रागः ॥ भावकरणयोरिति किम् । रजत्यस्मिन्निति रङ्गः ॥

---

१ यन्यात् B.
२ °मणि A. B.
३ स्यन्दो° A.
४ A. om. प्रपूर्वस्य च.
५ O. om. भावे घञ्.

वुषघिनिणोश्च[1] ॥ ६७ ॥

रञ्जेर्वुषि घिनिणि[2] च पञ्चमो लोप्यो भवति । शिल्पिनि वुष् । रजकः । रजकी ॥ युजभजेत्यादिना घिनिण्[2] । रागी ॥ चकारोऽनुक्तसमुच्चयार्थः । तेन युव्यपि[3] । रजनम् । रजनी ॥

वृंहेः स्वरेऽनिटि वा ॥ ६८ ॥

वृंहेः स्वरादावनिटि पञ्चमो लोप्यो भवति वा । वर्हकः । वृंहकः । वर्हणम् । वृंहणम् । वर्हति । वृंहति ॥ अनिटीति किम् । वृंहितव्यम् ॥ स्वर इति किम् । वृंहेर्मन् दृश्यते । परिवृंह्मा । परिवृढिः । स्त्रियां क्तिः ॥ कथं वृह्यते । वृंह्यते[4] । वर्हिता । वृंहिता । येषां प्रकृत्यन्तरमस्ति तेषां मते व्यञ्जनादावित्यपि स्यात् ॥

यममनतनगमां क्वौ ॥ ६९ ॥

एषां पञ्चमो लोप्यो भवति क्वौ परे । आतस्तात् भवति । यम । संयत् ॥ मन । संमत् ॥ तनु । परीतत् । ह्रस्वस्य दीर्घता ॥ गम्लृ । जगत् ॥

हनेः सिच्यात्मने दृष्टः सूचनार्थे यमेरपि ।
विवाहे तु विभाषैव सिजाशिषोर्गमेस्तथा[5] ॥

आहत ॥ उपायत । उपायंस्त कन्यां छात्रः[6] ॥ समगत । समगंस्त ॥ संगसीष्ट । संगंसीष्ट ॥

---

१ वुषघिणिनोश्च A. B. O.; वुषिघुनोश्च Chaitr.

२ घिणिनि ॰घिणिन् MSS. cf. iv. 4, 21.

३ युटि च A.; धुव्यपि B.

४ कथं विह्यते B.

५ ॰गमस्तथा O.

६ छात्र A.; देवदत्त B.; O. adds उदायत.

## विड्वनोरा ॥ ७० ॥

विटि वनि च प्रत्यये परे पञ्चमस्याकारो भवति । विट् । अब्जाः । गोषाः । सनोतेः षत्वम् ॥ वनिप् । विजावा । अग्रेगावा । ओणृ अवावरी । वनो र च ॥ घुण[1] घ्यावा । क्वनिप् । सानुनासिकमप्याकारमिच्छन्ति ॥

## धुटि खनिसनिजनाम् ॥ ७१ ॥

धुडादौ प्रत्यये पर एषां पञ्चमस्याकारो भवति । खातः । खातिः । सातः । सातिः । जातः । जातिः ॥ सनि च । सिषासति ॥

## ये वा ॥ ७२ ॥

एषां पञ्चमस्याकारो भवति वा ये परे । प्रखाय । प्रखन्य । प्रसाय । प्रसन्य । प्रजाय । प्रजन्य ॥ एवं खायते[2] । खन्यते[2] । चाखायते । चंखन्यते ॥

जा जनेर्विकरणे नित्यम् । जायते ॥ व्यवस्थितविभाषया घ्यणि ये न स्यात्[3] । खान्यम् । सान्यम् । जन्यम्[4] ॥ तनोतेर्यणि वा वक्तव्यम् । तायते । तन्यते ॥

## सनस्तिकि वा[5] ॥ ७३ ॥

सनोतेस्तिकि परे पञ्चमस्याकारो भवति वा । सनुतात् । सातिः । सन्तिः ॥ पुनर्वावचनाल्लोपस्य । सतिः ॥

---

१ घुन A. B.
२ Om. A.
३ ०वा स्यात् A.; घ्यणि यो न स्यात् । B.
४ A. adds अगुणं स्मरन्त्येके ।
५ The Chaitr. om. this Sûtram.

स्फुरिस्फुल्योर्घञ्योतः ॥ ७४ ॥

अनयोर्घञि पर ओत आकारो भवति वा[१]। विस्फारः। विस्फोरः। विस्फालः। विस्फोलः॥

इज्जहातेः क्त्वि ॥ ७५ ॥

वा न वर्तते। क्त्वाप्रत्यये परे जहातेरिद् भवति[२]। हित्वा गतः॥ जहातेरिति किम्। हाङ् हात्वा॥

द्यतिस्यतिमास्थां त्यगुणे ॥ ७६ ॥

एषां तकारादावगुण इद् भवति। दो। दितः। दितवान्। दितिः। दित्वा॥ सो। अवसितः। अवसितवान्[३]॥ मा। मितः। मितवान्॥ स्था। स्थितः। स्थितवान्॥ अगुण इति किम्। दाता। माता। स्थाता[४]॥ तिपा निर्देशः॥ किं धेट्[४]। धीतः। धीतवान्॥ सनु। सातः। सातवान्॥

वा छाशोः ॥ ७७ ॥

छाशोस्तकारादावगुण इद् भवति वा। अवच्छितः। अवच्छातः। अवच्छितिः। अवच्छातिः। निशितः। निशातः। निशितिः। निशातिः॥ श्यतेर्व्रते[५] नित्यं व्यवस्थितविभाषया। संशितो ब्राह्मणः। अन्यथा शिता[६] सिद्धमेव॥

---

१ स्फुरिस्फुल्योर्घञि A.; °ओकारस्याकारो° B.; A. om. विस्फारः। विस्फोरः

२ जहातेरन्तस्य इर्भवति A.

३ A. adds अवसितिः। अवसित्वा।

४ Om. B.

५ श्यतेर्व्रतेश्च O.

६ शिङा A.

दधातेर्हिः ॥ ७८ ॥

दधातेस्तकारादावगुणे हिर्भवति । हितः । हितवान्[१] । हितिः[१] । हित्वा ॥ दधातेरिति किम् । धेट् । धीतः । धीतवान् ॥ वा न वर्तते[२] धात्वन्तरबलात् ॥

चरफलोरुदस्य ॥ ७९ ॥

अनयोरस्य[३] तकारादावगुण उद् भवति । चूर्तः । चूर्तिः । प्रफुल्तः ॥ प्रफुल्तिः ॥

दद् दोऽधः ॥ ८० ॥

दासंज्ञकस्य धेड्वर्जितस्य[४] तकारादावगुणे दद् भवति । दत्तः । दत्तवान् । दत्तिः । दत्त्वा ॥ दासंज्ञकस्येति किम् । अवदातः ॥ अध इति किम् । धेट् । धीतः । धीतवान् ॥ दान्ते तस्य[५] नत्वं धान्ते धत्वं स्यात् संनिपातलक्षणस्य वर्णग्रहणे निमित्तत्वात् ॥

स्वरादुपसर्गात् तः ॥ ८१ ॥

उपसर्गात् स्वरान्तात् परस्य[६] दासंज्ञकस्य धेड्वर्जितस्य तकारादावगुणे प्रत्यये परे तकारो भवति । प्रत्तम् । नीत्तम् । परीत्तम् । दस्ति[७] क्वचिन्नामिनो ह्रस्वस्य दीर्घता ॥ स्वरादिति[८] किम् । निर्दत्तम् । दुर्दत्तम् । सस्वरोऽस्वरो वायमादेशो

---

१ Om. B.
२ स्मर्यते A.
३ अनयोरकारस्य B.
४ दासंज्ञकस्याधेतस् B.
५ दस्य A.
६ परो A.; स्वरात्परस्य B.
७ अस्ति A.
८ स्वराणामिति A.; B. om. दुर्दत्तम्.

न कश्चिद्दोष इति ॥ कथं निदत्तम् । अवदत्तम् । प्रदत्तमिति वादिकर्मणि प्रादिसमासो निपातो वा ॥

यपि चादो जग्धिः ॥ ८२ ॥

तकारादावगुणे यपि च परेऽदो जग्धिर्भवति । जग्धः । जग्धवान् । जग्धिः । जग्ध्वा । प्रजग्ध्य गतः ॥ कथम् अन्नम् । अदोऽनन्न इति ज्ञापकात् ॥ अगुण इति किम् । अत्तव्यम् ॥

जग्धौ सिद्धेऽन्तरङ्गत्वाद् यपि चेति यदुच्यते ।

ज्ञापयत्यन्तरङ्गानां यपा भवति बाधनम् ॥ इत्यन्ये ॥

प्रणम्य । आपृच्छ्य । प्रदीव्य । पञ्चमोपधाप्रभृतीनां[1] दीर्घादयो न भवन्ति ॥

घञलोर्घस्लृः ॥ ८३ ॥

अदेर्घञि । अलि च घस्लृर्भवति । लृकार[2] उच्चारणार्थः । घासः ॥ उपसर्गेऽदेरल् । विघसः । प्रात्तीति प्रघसः । अचि वक्तव्यम् ॥

क्तक्तवन्तू निष्ठा ॥ ८४ ॥

क्तक्तवन्तू निष्ठासंज्ञकौ भवतः । शब्दस्य नित्यत्वादन्वाख्याने भाविनोर्नेतरेतराश्रयदोष इति । शीर्णः । शीर्णवान् । भिन्नः । भिन्नवान् ॥ निष्ठाप्रदेशाः । निष्ठा [का॰ ४. ३. ९२] इत्येवमादयः ॥ क्त्वा नकारान्तस्य कत्वभावादसंख्यमित्यव्ययमेव ॥

॥ इति दौर्गसिंह्यां वृत्तौ कृत्सु प्रथमः पादः समाप्तः ॥

---

१ पञ्चमोपधायाप्र॰ B.; इत्यादिषु पञ्च॰ A.   २ चकार O.

धातोः ॥ १ ॥

धातोरिति[1] पञ्चम्यन्तोऽनुक्तोऽविशेषे[2]। धातोरित्ययमधिकारो वेदितव्यः। कर्तव्यम्। करणीयम्॥ धातोरिति किम्। कुम्भता॥ कुम्भं करोतीति भावकर्मणोर्न तव्यादयः॥ युष्मदि मध्यमः [का० ३. १. ६] इति सप्तम्युक्तं नोपपदम्॥ उत्सर्गः सिच्सन्विषये न स्यात्। अथ धातोस्तोऽन्तःपानुबन्धः [का० ४. १. ३०] इत्यतो धातोरनुवर्तते[3]। दुद्यूषतीत्यूड् न सिध्यति॥

सप्तम्युक्तमुपपदम् ॥ २ ॥

धात्वधिकारोऽत्र सूत्रे सप्तम्या निर्दिष्टमुपपदसंज्ञं भवति। कर्मण्यण् [का० ४. ३. १] नाम्नि स्थश्च [का० ४. ३. ५] इत्येवमादयः॥ उक्तमिति किम्। सप्तम्यन्तमात्रे मा भूत्। स्तम्बेरमः। कुरुचरः॥

तत्र प्राङ् नाम चेत् ॥ ३ ॥

तदुपपदं नाम चेद् धातोः प्राग् भवति। कुम्भकारः। ग्रामस्थः॥ नामेति किम्। भोक्तुमिच्छति॥

तस्य तेन समासः ॥ ४ ॥

तस्य नामोपपदस्य तेन कृदन्तेन धातुना सह समासो भवति। गोदः। जलजम्। क्रोधजम्॥ यथा[4] हि प्रादयः क्रियायो-

---

१ Om. B.
२ ऽविशेषधातो० O.
३ धातुरनुवर्तते O.; तर्हि दुद्यूष० A.
४ तथा A.

तका उपसर्गा इति धातोः प्रागेव सिद्धास्तथोर्यादयोऽपि क्रियायोगे कृभ्वस्तिभ्य एव प्राक् सिद्धाः । प्रकृत्य । उरीकृत्य(१) । उररीकृत्य ॥ तथा शुक्लीकृत्य । पटपटाकृत्य । नाम्नां युक्तार्थत्वात् समासोऽपि सिद्ध एव ॥ यथाभिधानमेते त्रयोऽपि योगा(२) वक्ष्यमाणाभ्यां सह प्रपञ्चार्था एव । धातोरित्ययमपि वासरूपे(३) कृत्संबन्धादिति ॥

नाव्ययेनानमा ॥ ५ ॥

तस्य नामोपपदस्याव्ययकृदन्तेनामन्तवर्जितेन प्राग्भावसमासौ न भवतः । कृत्वालम् । अलं कृत्वा । भोक्तुं कालः । कालो भोक्तुम् ॥ तस्येति किम् । प्रकृत्य ॥ अनमेति किम् । निमूलकाषं कषति ॥

तृतीयादीनां वा ॥ ६ ॥

तृतीयायामुपदंशेः [का० ४. ६. ३१] इत्यारभ्य यान्युपपदानि तानि तृतीयादीनि(४) । तेषाममन्तेनापि प्राग्भावसमासौ न भवति वा । मूलकेनोपदंशं भुङ्क्ते । मूलकोपदंशं भुङ्क्ते । भ्राष्ट्रादपकर्षं भ्राष्ट्रापकर्षं धाना भक्षयति ॥ तृतीयादीनामिति किम् । समर्थो भोक्तुम् ॥

कृत् ॥ ७ ॥

अधिकारोऽयम् । साध्यैरेव संबध्यते प्रथमान्तत्वात् । तेन

---

१ ऊरीकृत्य O.
२ यथाभिधानमेते प्रयोगा B.
३ °इत्ययवासरूपे B.
४ O. adds वेदितव्यानि.

वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञका वेदितव्याः । कर्तरि कृतः [का° ४. ६. ४६] । पाचकः । पक्ता । एवमन्येऽपि ॥

## वासरूपोऽस्त्रियाम् ॥ ८ ॥

न विद्यते समानं रूपं(१) यस्येति विग्रहः । स्त्र्यधिकारविहितं वर्जयित्वाऽसरूपकृत्प्रत्ययो बाधको वा भवति ॥

विकल्पिते(२)ऽपवादेऽपि बाधनं तदवस्थितम् ।

उत्सर्गे न च लाभस्तद्बाधकत्वं(३) विकल्प्यते ॥

स्वराद्यो [का° ४. २. १०] ऽपवादस्तद्विषये तव्यानीयौ । चेयम् । चेतव्यम् । चयनीयम् ॥ एवं नन्द्यादेर्युः । नन्दनः । नन्दकः । नन्दयिता । एवमन्येऽपि ॥ असरूप इति किम् । घ्यणि(४) यो न स्यात् । कार्यम् । कविषयेऽण् न स्यात् । गोदः । अनुबन्धोऽप्रयोगीति सारूप्यमेव ॥ अस्त्रियामिति किम् । चिकीर्षा । क्तिर्न स्यात् । तथा । ईषणा(५) । अन्यना । युरेव ॥ वाशब्दो(६) व्यवस्थावाचीति क्त्युट्तुम्खलर्थेषु वासरूपविधिर्नास्तीति ॥

## तव्यानीयौ ॥ ९ ॥

धातोः परौ तव्यानीयौ कृत्संज्ञकौ भवतः । कर्तव्यम् । करणीयम् ॥ कृत्यत्वाद् भावे कर्मणि च स्यात् । केलिमः । कर्मकर्त-

---

१ समानरूपं O.
२ A. corr. विकल्प्यते.
३ लाभे स्त्रि बाधकत्वं A.
४ घ्यणि विषये A.
५ ईश्नना O.
६ Om. A.

रीष्यते। भिदेलिमा माषाः। पचेलिमास्तण्डुलाः॥ वास्तव्य इति कर्तरि दीर्घस्य रूढित्वात्॥



स्वराद् यः॥१०॥

स्वरान्ताद् धातोर्यो भवति। चेयम्। चेतव्यम्॥ स्वरादिति सुखार्थमेव॥

शकिसहिपवर्गान्ताच्च॥११॥

शकिसहिपवर्गान्ताच्च धातोर्यो भवति। शक्यम्। सह्यम्। जप्यम्। लभ्यम्(१)॥

आत्खनोरिच्च(२)॥१२॥

आकारान्ताद् धातोः खनेश्च यो भवति। अनयोरन्तस्ये-कारो भवति। देयम्। धेयम्। खेयम्॥ अत एत्वे कृतेऽसिद्धं बहिरङ्गमन्तरङ्ग इत्यनित्येयम्॥

यमिमदिगदां त्वनुपसर्गे॥१३॥

एषामुपसर्गाभावे तु(३) यो भवति। यम्यम्। मद्यम्। गद्यम्॥ अनुपसर्ग इति किम्। प्रयाम्यम्। प्रमाद्यम्। प्रगाद्यम्॥ यमो नियमार्थं वचनम्॥

---

१ लप्यं A.
२ MS. Chaitr. corr. ०दिच्च.
३ ऽपि A.; om. B.

चरेराङि चागुरौ ॥ १४ ॥

अनुपसर्गे चरेर्यो भवति । आङि चागुरौ । चर्यम् । आचर्यो देशः ॥ आङीति किम्[1] । अभिचार्यम् ॥ अगुराविति किम् । आचार्यो गुरुः ॥

पण्यावद्यवर्या विक्रेयगर्ह्यानिरोधेषु[2] ॥ १५ ॥

पण्यमिति निपात्यते विक्रेये[2]ऽर्थे । पण्यं विक्रेयद्रव्यम् । पाण्यमन्यत् ॥ नञ्पूर्वस्य वदेरवद्यमिति निपात्यते गर्ह्येऽर्थे । अवद्यं गर्ह्यम् । अनुद्यमन्यत् ॥ नाम्नि वदः क्यप् च ॥ वृङो[3] वर्या । इत्यनिरोधे गम्यमाने । वृत्याऽन्या ॥ स्त्रीलिङ्गनिर्देशादिति मतम् । वार्या ऋत्विजः ॥

वह्यं करणे ॥ १६ ॥

वह्यमिति निपात्यते करणेऽर्थे । वह्यं शकटम् ॥ वाह्यमन्यत् ॥

अर्यः स्वामिवैश्ययोः ॥ १७ ॥

अर्य इति निपात्यते स्वामिनि वैश्ये चार्थे । अर्यः स्वामी । अर्यो वैश्यः ॥ आर्योऽन्यः ॥

उपसर्या काल्या प्रजने ॥ १८ ॥

प्राप्तः कालो यस्याः सा काल्येति संज्ञिता । प्रजनं प्रजनो

---

१ चार्यं । आचार्यों देशः । अनुपसर्ग इति किं O.

२ विक्रय॰ विक्रयि O.

३ वृञो A.

गर्भग्रहणम्[१]। प्रजने प्राप्तकाला चेत्। उपसर्येति निपात्यते। उपस्थियत इत्युपसर्या गौः। ऋतुमतीत्यर्थः॥ उपसार्याऽन्या॥

अजर्यं संगते च॥ १९॥

अजर्यमिति निपात्यते संगते कर्तरि। न जीर्यतीत्यजर्यं संगतम्॥ संगत इति किम्। अजरिता कम्बलः॥

नाम्नि वदः क्यप् च॥ २०॥

नाम्न्युपपदे वदेः क्यब् भवति। चकाराद् यश्च। ब्रह्मणो वदनं ब्रह्मोद्यम्। ब्रह्मवद्यम्। ब्रह्मणोद्यते कथा। ब्रह्मोद्या। ब्रह्मवद्या॥ नाम्नीति किम्। वाद्यम्। अनुवाद्यम्॥

भावे भुवः[२]॥ २१॥

नाम्न्युपपदे भावे भुवः क्यब् भवति। ब्रह्मभूयं गपः। ब्रह्मत्वं गत इत्यर्थः॥ नाम्नीति किम्। भव्यम्। प्रभव्यम्॥ भावग्रहणमुत्तरार्थमिह सुखार्थं च[२]॥

हनस् त च॥ २२॥

नाम्न्युपपदे हन्तेर्भावे क्यब् भवति। तकारश्चान्तादेशः। ब्रह्मणो हननम्। ब्रह्महत्या॥ भाव इति किम्। अघात्यो मृगः॥ नाम्नीति किम्। घातः। उपघातः॥ हन्तेर्भावे घ्यण् न दृश्यते। यपि सति तोऽन्तो नास्ति क्यपो ह्यनुबन्धकत्वात्॥

---

१ प्रजनं प्रथमगर्भग्रहणं Chaitr. २ O. om. text and com. of this sûtra.

वृञ्दृङ्जुषीण्शासुस्तुगुहां क्यप् ॥ २३ ॥

नाम्नि भावे चेति निवृत्तम् । एषां क्यब् भवति । वृञ् वृत्यः । वृङस्तु वार्या ऋत्विजः ॥ दृङ् आदृत्यः ॥ जुषी जुष्यः ॥ इण् इत्यः । इङस्तु । उपेयम् ॥ शासोऽदनुबन्धः सुखार्थः । शिष्यः ॥ स्तुत्यः । गुह्यः ॥ अवश्यस्तुत्य इति पुनः क्यब्ग्रहणात् ॥ कथम् । अनिवार्यो गजैरन्यैः स्वभाव इव देहिनाम् । इति संभक्तेरन्यत्रापि वृङ इनन्तो वा ॥

ऋदुपधाच्चाक्लृपिचृतेः ॥ २४ ॥

ऋदुपधाद् धातोः क्लृपिचृतिवर्जितात् क्यब् भवति । वृत्यम् । वृध्यम् ॥ अक्लृपिचृतेः किम् । विकल्प्यम् । विचर्त्यम् ॥ ऋदिति तपरः सुखार्थः ॥

भृञोऽसंज्ञायाम् ॥ २५ ॥

भृञोऽसंज्ञायां(१) क्यब् भवति । भरणम् । भृत्यम् । भ्रियत इति वा भृत्यः ॥ असंज्ञायामिति किम् । भार्या नाम क्षत्रिया । भार्या वधूः ॥ ननु च संज्ञायामपि स्त्रियां क्यबस्ति न तस्य भावे विधानात् ॥

ग्रहोऽपिप्रतिभ्यां(२) वा ॥ २६ ॥

अपिप्रतिभ्यां(२) पराद्(३) ग्रहेः क्यब् भवति वा । अपिगृह्यम् । अपिग्राह्यम् । प्रतिगृह्यम् । प्रतिग्राह्यम् ॥

---

१ °गम्यमानायां O.; भृञो धातोः संज्ञायां A.

२ अभिप्रतिभ्यां Chaitr.

३ परस्य A.

पदपक्ष्ययोश्च ॥ २७ ॥

पक्षे भवः पक्ष्यो वर्गः। पदपक्ष्ययोरर्थयोर्ग्रहेः क्यब् भवति ॥ ग्रगृह्यं पदं यत् स्वरेण न संधीयते(१)। अवगृह्यं पदं यस्यावग्रहः क्रियते ॥ पक्षेऽर्जुनगृह्या सेना ॥ चकारात् अस्वैरिणि बाह्यायां चार्थे। गृह्यका इमे। अवरुद्धका इत्यर्थः ॥ ग्रामगृह्या स्त्री। ग्रामवाह्येत्यर्थः ॥

वौ नीपूञ्भ्यां(२) कल्कमुञ्जयोः ॥ २८ ॥

वावुपपदे नीपूञ्भ्यां(२) कल्कमुञ्जयोरर्थयोः क्यब् भवति यथासंख्यम्। विनीयः कल्कः। विनेयमन्यत् ॥ विपूयो मुञ्जः। विपव्यमन्यत् ॥

कृवृषिमृजां वा ॥ २९ ॥

कृञादिभ्यो विभाषया क्यब् भवति। कृत्यम्। कार्यम्। वृष्यम्। वर्ष्यम्(३)। मृज्यम्। मार्ग्यम् ॥
दुहिशंसिभ्यां क्यबपि। दुह्यम्। दोह्यम्। शस्यम्। शंस्यम्। कृत्यल्युटोऽन्यत्रापि [का° ४. ५. ९२] इति वचनात् ॥ तथा मृषोद्यमिति क्यबेव ॥ तथा पाणिसमवाभ्यां सृजो घ्यणेव। पाणिसर्ग्या। समवसर्ग्या रज्जुः ॥ तथा समो वा भृञः क्यप्। संभृत्यः। संभार्यः॥ तथा तकिचतिपतिशसियजिभ्यो य एव। तक्यम्। चत्यम्। पत्यम्।

---

१ संबन्धीयते A.; B. om. न.
२ नीपूङ्भ्यां B.; [नीपुम्भ्यां Chaitr.].
३ वार्ष्यं O.

भ्रस्यम् । यज्यम् ॥ तथा गुहो घ्यण्यपि । गुह्यम् । गोह्यम् ॥ तथा जयतेर्हलौ क्यबेव । जित्या हलिः । महद्धलं हलिरुच्यते ॥

सूर्यरुच्याव्यथ्याः कर्तरि ॥ ३० ॥

एते निपात्यन्ते कर्तरि । षु प्रेरणे । सुवति लोकान् सरति वेति सूर्यः । रोचत इति रुच्यः । न व्यथत इत्यव्यथ्यः ॥

भिद्योद्ध्यौ नदे ॥ ३१ ॥

एतौ नदे कर्तरि निपात्यन्ते । भिनत्ति कूलानीति भिद्यो नदः । उज्झत्युदकमित्युद्ध्यो नदः ॥ कथं भेद्यो नदः । इति कर्मविवक्षायाम् ॥

पुष्यसिध्यौ नक्षत्रे ॥ ३२ ॥

एतौ निपात्येते नक्षत्रे कर्तर्यधिकरणे वा । पुष्णाति कार्याणि पुष्यन्त्यस्मिन्निति वा । पुष्यः । साधयति कार्याणि सिध्यन्त्यस्मिन्निति वा । सिध्यः । पुष्य एव ॥

युग्यं पत्रे ॥ ३३ ॥

युग्यमिति निपात्यते पत्रे वाहनेऽर्थे । युज्यतेऽनेनेति युज्यत इति वा[1] । युग्यम् ॥

---

1 B. om. युज्यत इति; A. om. वा.

कृष्टपच्यकुप्ये संज्ञायाम् ॥ ३४ ॥

एतौ निपात्येते संज्ञायाम्। कृष्टे पच्यन्ते स्वयमेव। कृष्टपच्या व्रीहयः॥ गुप्यत(१) इति कुप्यम्। सुवर्णरजताभ्यामन्यत्॥

ऋवर्णव्यञ्जनान्ताद् घ्यण् ॥ ३५ ॥

ऋवर्णान्ताद् व्यञ्जनान्ताच्च धातोर्घ्यण् भवति। कृ कार्यम्। मृज् मार्ग्यम्। पाक्यम्। वाक्यम्॥ णकार इज्वद्भावार्थः। घकारः सामान्याभिधानार्थः॥

आसुयुवपिरपिलपित्रपिदभिचमां च ॥ ३६ ॥(२)

आङ्पूर्वात् सुनोतेर्यौत्यादिभ्यश्च घ्यण् भवति। आसाव्यम्। याव्यम्। वाप्यम्। राप्यम्। लाप्यम्। अपत्राप्यम्। दम्भेरिह कृतनलोपः। अवदाभ्यम्(३)। आचाम्यम्॥

उवर्णादावश्यके ॥ ३७ ॥

अवश्यं भाव आवश्यकम्। उवर्णान्ताद् धातोरवश्यं भावे गम्यमाने घ्यण् भवति। नाव्यम्। लाव्यम्। लाव्यमवश्यम्। अवश्यलाव्यम्। अवश्यमः कृत्ये मस्य(४) लुक्। लव्यमन्यत्॥

पाधोर्मानसामिधेन्योः ॥ ३८ ॥

पा। धा। इत्येतयोर्मानसामिधेन्योरर्थयोर्यथासंख्यं घ्यण्

---

१ कुप्यत A.

२ The Chaitr. inserts sûtra 45 between 35 and 36; in sûtra 36 it adds कमि after दभि.

३ अपदाभ्यं O.; [Chaitr. adds काम्यम्].

४ B. om. मस्य.

भवति। पाय्यं मानम्। वचनात् स्वार्थं त्यजति। पेयमन्यत्॥ द-धात्यग्निमिति धाय्या सामिधेनी समिदाधानमन्त्रः॥ उपचाराद् ऋग्विग्विषयेऽपि वर्तते। धाय्याः शंसन्ति। धेयमन्यत्॥

प्राङोर्नियोऽसंमतानित्ययोः स्वरवत्॥ ३९॥

प्राङोरुपपदयोर्नियो धातोरसंमतानित्ययोर्यथासंख्यं घ्यण् भवति स च स्वरवत्। प्रणाय्यश्चौरः[१]। असंमत[२] इत्यर्थः॥ आनाय्यो दक्षिणाग्निः। यो गार्हपत्यादानीय प्रणीयते[३] स चा-नित्यो रूढितः॥ कथं ज्येष्ठाय पुत्राय पिता ब्रह्म ब्रूयात् प्रणाय्याय चान्तेवासिन इत्यन्यत्रापीति वचनात्॥

संचिकुण्डपः क्रतौ॥ ४०॥

संपूर्वाच्चिनोतेः कुण्डपूर्वाच्च पिबतेः क्रतावभिधेये घ्यण् भव-ति। स च स्वरवत्। संचीयतेऽसौ। संचाय्यः क्रतुः॥ कुण्डैः पी-यते असौ[४]। कुण्डपाय्यः क्रतुः। स सोमको हि यागः क्रतुर-र्थात्। सोमः पीयतेऽस्मिन्नित्यभिधानादधिकरणे वा॥

राजसूयश्च॥ ४१॥

क्रतावभिधेये राजसूयश्च निपात्यते। षुञ् अभिषवे। राज्ञा सोतव्यो राजा वास्मिन् सूयत इति[५] राजसूयः क्रतुः॥

---

१ प्राणाय्य° O.
२ गर्ह्य B.
३ °आनीय दक्षिणाग्निः प्रतीयते O.
४ पीयत इति B.; पीयते A.
५ B. om. इति; A. om. वा.

## सांनाय्यनिकाय्यौ हविर्निवासयोः ॥ ४२ ॥

एतौ हविर्निवासयोर्यथासंख्यं निपात्येते। सांनाय्यम् । हविः विशिष्टमेव यत् । संनेयमन्यत् ॥ निकाय्यो निवासः । निचेयमन्यत्(१) ॥

## परिचाय्योपचाय्यावग्नौ ॥ ४३ ॥

एतावग्नावर्थे निपात्येते। परिचीयतेऽसौ। परिचाय्योऽग्निः॥ उपचीयत इत्युपचाय्योऽग्निः ॥

## चित्याग्निचित्ये च ॥ ४४ ॥

एतावग्नावर्थे निपात्येते । चीयत इति चित्योऽग्निः । अग्नेश्चयनम् अग्निचित्या भावे ॥ समूह्य इत्यूहिना सिद्धम् । अस्यापि क्वचिद् वहत्यर्थे प्रयोगः(२) । संवाह्य इति चाग्नौ भवत्येव ॥

## अमावस्या वा ॥ ४५ ॥(३)

अमेह सहार्थे । अमापूर्वाद् वसतेर्ण्यणि कालाधिकरणे दीर्घाभावो निपात्यते(४) वा । सहवसतोऽस्यां चन्द्रार्काविति । अमावस्या । अमावास्या तिथिः । यल्लक्षणेनानुत्पन्नं तत् सर्वं निपातनात् सिद्धम् ॥

---

१ Om. O.
२ प्रयोगात् O.
३ See p. 333, footnote 2; also Notes.
४ निपातो A.

## ते कृत्याः ॥ ४६ ॥

ते तव्यादयः कृत्यसंज्ञका भवन्ति[1] ॥ कृत्यप्रदेशाः । भावकर्मणोः कृत्यक्तखलर्थाः [का० ४. ६. ४७] इत्येवमादयः ॥

## वुणतृचौ ॥ ४७ ॥

धातोः परौ वुण्तृचौ[2] भवतः । कर्तरि कृतः । पाचकः । पक्ता ॥ कथं गले चुप्यत इति गलेचोपकः । पादाभ्यां ह्रियते । पादहारकः ॥

## अच् पचादिभ्यश्च ॥ ४८ ॥

सर्वे धातवः पचादिषु[3] पठ्यन्ते । तेभ्यः पचादिभ्योऽज् भवति ।[4] पचः । पठः । भवः ॥ पचादिग्रहणं बाधकबाधनार्थम् । तेन श्वपचः । जारभर इत्यण् न स्यात् ॥ देवः । सर्पः । मेष इति को न स्यात् । एवमन्येऽप्यनुसर्तव्याः ॥

## नन्द्यादेर्युः ॥ ४९ ॥

नन्द्यादेर्नामगणनिर्दिष्टाद् युर्भवति । नन्दिवासिमदिदूषिसाधिशोभिवर्धिभ्य इनन्तेभ्योऽसंज्ञायाम्[5] । नन्दयतीति नन्दनः । एवं वासनः । मदनः । दूषणः । साधनः । शोभनः । वर्धनः ॥ सहितपिदमः संज्ञायामनिनन्तात् । सहनः । तपनः । दमनः ॥

---

१ वेदितव्याः O.
२ B. adds कृत्संज्ञकौ.
३ O. adds नामगणेषु.
४ B. om. from अच् पचादिभ्यश्च ।
५ See Notes.

एवं जल्पनः । दर्पणः । रमणः । चन्दनः । संहर्षणः । संकर्षणः । जनार्दनः[१] । मधुसूदनः । पवनः । लवणः । नामगणनिपातनात्त्वम् ।[२] विभीषणः । चित्तविनाशनः[२] । कुलदमनः ॥ कर्मपूर्वाणामण्विषयेऽपि स्यात्[३] ॥

## ग्रहादेर्णिन् ॥ ५० ॥

ग्रहादेर्नामगणनिर्दिष्टाण्णिन् भवति[४] । गृह्णातीति ग्राही । स्थायी । निरक्षी । विश्रावी ॥ याचिव्रजवदवसो[५] नञ्पूर्वात् । अयाची । अव्राजी । अवादी । अवासी ॥ स्वरान्तादचि तु कर्तृकात् । अकारी घर्मस्य बालातपः । विषयी देशे । विभावी । अभिभावी भूतेऽर्थे । परिभवी । परिभावी । पक्षे ह्रस्वत्वं निपातनात् ॥ कथम् उत्साही । उद्वाही[६] । संमर्दी[७] । निवेशी । अस्त्यर्थ इणा सिद्धम् ॥ एवम् अध्याहारी । संव्याहारी । अपराधी[८] । उपराधी[९] ॥

## नाम्युपधप्रीकृगृज्ञां कः ॥ ५१ ॥

नाम्युपधात् प्रीणातेः किरतेर्गिरतेर्जानातेश्च को भवति । विक्षिपः । विलिखः । प्रियः । उत्किरः । गिरः । गिलः । ज्ञः ॥

---

१ O. om. from सहितपिद्मः.
२ A. adds जवनः °अतिमदनः ।.
३ दृश्यते O.
४ °णिनिर्भवति A.
५ याचिव्रजि° A.
६ उद्वासी B.
७ संसर्गी A.; सर्दी O.; A. adds संपर्की.
८ अवराधी A.
९ उपरोधी B.; O. adds इति सिद्धं.

उपसर्गे त्वातो डः ॥ ५२ ॥

उपसर्ग उपपदे त्वाकारान्ताद्धातोर्डो भवति। सुग्लः। सुम्लः॥ प्रज्ञः। डे सति संप्रसारणमुव् च न स्यात्। गोसंदाय इति परत्वादण्। एस्यापवादो(१)ऽयम् ॥

घेड्दृशिपाघ्राध्मः शः(२) ॥ ५३ ॥

उपसर्ग उपपद एभ्यः शो भवति। उद्धयः। उत्पश्यः। उत्पिबः। साहचर्यात् पिबतेः(३)। धेटष्टकारः सुखार्थः। उज्जिघ्रः। उद्धमः॥ कथं पश्यः। अन्यत्रापीति वचनात् ॥ तथा व्याजिघ्रतीति व्याघ्रः ॥

साहिसातिवेद्युदेजिचेतिधारिपारिलिम्पविन्दां(४) त्वनुपसर्गे ॥ ५४ ॥

एषामुपसर्गाभावे शो भवति। साहयतीति साहयः। एवं सातयः। विदिसामान्यं(५) वेदयः। उदेजृ उदेजयः। चेतीति चेतयः। धृञ् धृङ् धारयः(६)। पृ पारयः। लिम्पतीति लिम्पः। विन्दतीति विन्दः। साहचर्यान्न विदि अवयवे। विन्दुरिति निपातनाद्वा॥ कथं निलिम्पा नाम देवाः। अन्यत्रापीति वचनात्॥

---

१ णापवादो O.; परत्वादणस्यापवादो A.
२ शृङ् Chaitr.
३ पिबतेरेव O.
४ A. and Chaitr. om. चेति (A. not in com.); Chaitr. adds साधि before साहि [साधयः com.]
५ विदिः सा° O.
६ धृञ धारयः A.; धृङ धा° B.; धृङ वा धारयः O.

तथा गां विन्दतीति गोविन्दः । अरविन्द इत्यण् न स्यात् ॥
ददः । दधः । इति ददधोरचा सिद्धम् ॥

## वा ज्वलादिदुनीभुवो णः ॥ ५५ ॥(१)

ज्वलादिभ्यो दुनोतेर्नयतेर्भवतेश्चानुपसर्गे णो भवति वा ।
ज्वलः । ज्वालः । चलः । चालः । कसपर्यन्ता ज्वलादयो वृत्करणात् । दवः । दावः । नयः । नाय इति केचिन्नेच्छन्ति । भवः । भावः ॥ अनुपसर्ग इति किम् । प्रज्वलः । प्रदवः । प्रणयः । प्रभवः ॥

## समाङोः स्रुवः ॥ ५६ ॥

समाङोरुपपदयोः स्रवतेर्णो भवति । वा न स्मर्यते । संस्रावः । आस्रावः ॥ समाङोरिति किम् । स्रवः । परिस्रवः ॥

## अवे हृसोः(२) ॥ ५७ ॥

अव उपपदे हरतेः स्यतेश्च णो भवति । अवहारः । अवसायः ॥
अव इति किम् । हरः । विहरः ॥

## दिहिलिहिश्लिषिश्वसिव्यध्यतीण्श्यातां च ॥ ५८ ॥

एषां णो भवति । देहः । लेहः । श्लेषः । के प्राप्ते वचनम् ।
श्वासः । व्याधः । अत्यायः । उपसर्गे ऽबाधकं श्याग्रहणम्(३) ।

---

१ For another sûtra before 55 in Chaitr. see Notes.

२ हृषोः B. ; हृशोः Ch.

३ उपसर्गे उपधानार्थं श्याग्रहणं B.

अवश्याय: । दाय: । धाय: ॥ प्रत्याय इत्यपि दृश्यते ॥ अवतार इति चकारात् ॥

**ग्रहेर्वा ॥ ५९ ॥**

ग्रहेर्वा णो भवति । ग्राहो जलचर: । ग्रह: सूर्यादि: ॥

**गेहे त्वक् ॥ ६० ॥**

ग्रहेर्गेहेऽभिधेये त्वग् भवति । गृह्णातीति गृहम् । गृहा: ॥

**शिल्पिनि वुष् ॥ ६१ ॥**

शिल्पिन्यभिधेये वुष् भवति । अभिधानाद् नृतिखनिरञ्जिभ्य एव । नर्तक: । नर्तकी । खनक: । खनकी । रजक: । रजकी ॥ शिल्पं विज्ञानकौशलम् । इनन्तस्य निकृष्टेऽभिधानात् ॥

**गस्थक: ६२ ॥**

गायते: शिल्पिन्यभिधेये थक: प्रत्ययो भवति । गाथक: ॥

**ण्युट् च ॥ ६३ ॥**

गायते: शिल्पिन्यभिधेये ण्युट् च भवति । गायन: । गायनी ॥ एतौ प्रत्ययावशिल्पिन्यपि दृश्येते ॥

**ह: कालव्रीह्यो: ॥ ६४ ॥**

जहाते: काले व्रीहौ चार्थे ण्युड्[1] भवति । जहाति भावा-

---

१ कालव्रीह्योरर्थयोर्ण्युट् O.

निति हायनः संवत्सरः । जहत्युदकमिति हायना व्रीहयः ॥ कालव्रीह्योरिति किम् । हाता ॥

आशिष्यकः ॥ ६५ ॥

आशंसायां गम्यमानायां धातोरकः प्रत्ययो[1] भवति । जीवतात् । जीवकः ॥ नन्दतात् । नन्दकः ॥

प्रुसृल्वां साधुकारिणि ॥ ६६ ॥

एषां साधुकारिण्यर्थेऽकः प्रत्ययो[1] भवति । साधु प्रवते । साधुप्रवकः । स्रवकः । सरकः । लवकः ॥ साधुकरणं शिल्पमेव ॥ एतत् स्त्रियामाद्यप्रपञ्चार्थम् ॥ साधुकारिणीति किम् । प्रोता ॥

॥ इति दौर्गसिंह्यां वृत्तौ कृत्सु द्वितीयः पादः समाप्तः ॥

---

कर्मण्यण् ॥ १ ॥

कर्मसंज्ञोपपदे धातोरण् भवति । कुम्भं करोतीति कुम्भकारः । एवं काण्डकारः । शरलावः । वेदाध्यायः ॥ आदित्यं पश्यति । हिमवन्तं शृणोति । ग्रामं गच्छतीत्यनभिधानाद्वाक्यमेव ॥

---

१ °अक्प्रत्ययो A.

महान्तं घटं करोतीति सापेक्षत्वात् ॥ अघटं घटं करोतीति घटीकार इति च्व्यन्ते प्रागवस्थार्थमात्रापेक्षे(१) त्वण् विधीयते ॥

## ह्वावामश्च ॥ २ ॥

एभ्यः कर्मण्युपपदेऽण् भवति ॥ कापवादः ॥ स्वर्गह्वायः । तन्तुवायः । धान्यमायः ॥ वातिरकर्मकः ॥ मीनातिमिनोत्योः के वृद्धिस्थे मारूपाभावः ॥

## शीलिकामिभक्ष्याचरिभ्यो(२) णः ॥ ३ ॥

एभ्यः कर्मण्युपपदे णो भवति । शीलिभक्षी चुरादाविनन्तौ । कमेरिनङ्(३) । मांसशीला । मांसकामा । मांसभक्षा ॥ कल्याणमाचरति । कल्याणाचारा स्त्री । अणि हि स्त्रियामी स्यात् ॥ शील्यत इति शीलम् । मांसं शीलमस्याः । मांसशीला(४) ॥ कल्याणप्रतीक्षा । दुःखक्षमेति यथाभिधानादण् नास्ति तथेहापि(५) ॥ यद्येवम् अश्वोऽभिगमोऽस्याः । अश्वोऽभिगमेति स्यात् । अश्वोऽभिगामी चेष्यते । समासेऽप्यभिधानं चेत् कष्टमिति वचनम् ॥

## आतोऽनुपसर्गात् कः ॥ ४ ॥

कर्मण्युपपद आकारान्तादनुपसर्गाद्धातोः को भवति ।

---

१ °मात्रोपेक्षे O.; A. om. इति.

२ °भक्षा° A.B.O.; शीलिकामिचरिभक्षिभ्यो Chaitr.

३ कमेरिणङ् B.; °इनिङ् Tril. F.

४ मांसशीलमस्या° A., and adds मांसभक्षा.

५ तथेहेति O.

गोदः । अङ्गुलित्रः ॥ अनुपसर्गादिति किम् । गोसंदायः । उपसर्गैरव्यवधानतेत्यण् ॥ ब्रह्मज्यः । मित्रङ्कः । अन्यतोऽपि चेति डः ॥

नाम्नि स्थश्च ॥ ५ ॥

नाम्न्युपपदे तिष्ठतेराकारान्ताच्च धातोः को भवति । अनुपसर्गादिति न वर्तते । कच्छेन पिबतीति कच्छपः । द्वाभ्यां पिबतीति द्विपः । समे तिष्ठतीति समस्थः । ग्रामे संतिष्ठतीति ग्रामसंस्थः ॥

तुन्दशोकयोः परिमृजापनुदोः ॥ ६ ॥(१)

तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुदिभ्यां को भवति यथासंख्यम् । तुन्दं परिमार्ष्टि । तुन्दपरिमृजः । अलस एवाभिधीयते । तुन्दपरिमार्जोऽन्यः ॥ शोकमपनुदति । शोकापनुदः । आनन्दकर एव । अन्यत्र शोकापनोदो धर्मकथक एव ॥

प्रे दाज्ञः ॥ ७ ॥

कर्मणि प्रे चोपपदे दाज्ञाभ्यां को भवति । प्रपाप्रदः । पथिप्रज्ञः ॥ दारूपमिह गृह्यते न संज्ञा साहचर्यात् । तेन स्तनौ प्रधायतीति स्तनप्रधायः ॥

समि ख्यः ॥ ८ ॥

कर्मणि समि चोपपदे चचिङो(२) धातोः को भवति । गां

१ Chaitr. om. this sûtra; see Notes on s. 2.

२ चचिङ A.; चिङो O.; चचिञो B.; ख्याञो Chaitr.

संचष्टे। गोसंख्यः। सोपसर्गत्वाद्[1] वचनम् ॥ मूलानि विभुजतीति मूलविभुजो रथः। नखमुचानि धनूंषि। अभिधानात् प्राक्तन एव कः ॥ तथा काकेभ्यो गुहितव्याः। काकगुहास्तिलाः। कर्मण्यपि दृश्यते ॥

गष्टक् ॥ ९ ॥

कर्मण्युपपदेऽनुपसर्गाद् गायतेष्टग् भवति। मधुरं गायतीति मधुरगी। सामगी ॥ अनुपसर्गादिति किम्। सामसंगायः ॥ षडनुबन्धो[2] नदादेः प्रपञ्चार्थः ॥

## सुरासीध्वोः[3] पिबतेः ॥ १० ॥

सुरासीध्वोः[3] कर्मणोरुपपदयोरनुपसर्गात् पिबतेष्टग् भवति। सुरापी। सीधुपी[4] ॥ सुरासीध्वोरिति[3] किम्। चीरपा ब्राह्मणी ॥ पिबतेरिति किम्। सुरापा स्त्री ॥ अनुपसर्गादिति किम्। सुराप्रपायः ॥

## हञोऽज् वयोऽनुद्यमनयोः ॥ ११ ॥

अनुपसर्गादिति न स्मर्यते। कर्मण्युपपदे हरतेर्वयसि गम्यमानेऽनुद्यमने च वर्तमानाद् अज् भवति। ऊर्ध्वं नयनम् उद्यमनम्। ततोऽन्यद् अनुद्यमनम्। वयोग्रहणमुद्यमनार्थं[5] संभा-

---

१ सोपसर्गार्थं A.

२ Thus A. B.; MSS. Tril.; टानुबन्धो O.

३ सुराशीध्वोः O.

४ शीधुपी O.

५ तेन संभाव्य° O.

व्यमानं चात्र वयो गम्यते ॥ कवचहरः क्षत्रियकुमारः । अस्थिहरः श्वा । अंशहरो दायादः । वातहरं तैलम् ॥ उद्यमने तु । भारहारः ॥ अणोऽपवादोऽयम् ॥

आङि ताच्छील्ये ॥ १२ ॥

कर्मण्युपपद आङि ताच्छील्ये गम्यमाने हृञोऽज् भवति । फलनिरपेक्षा प्रवृत्तिस्ताच्छील्यम् । पुष्पाण्याहर्तुं शीलमस्येति पुष्पाहरो विद्याधरः ॥ ताच्छील्य इति किम् । भाराहरः ॥

अर्हश्च ॥ १३ ॥

ताच्छील्यमाङ् च न स्मर्यते । कर्मण्युपपदेऽर्हतेरज् भवति । पूजार्हा स्त्री ॥

धृञः प्रहरणे चादण्डसूत्रयोः ॥ १४ ॥

दण्डसूत्रवर्जिते प्रहरणवाचके कर्मण्युपपदे धृञोऽज् भवति । वज्रं धरतीति वज्रधरः । एवं(१) चक्रधरः ॥ अदण्डसूत्रयोरिति किम् । दण्डधारः । सूत्रधारः ॥ सूत्रप्रतिषेधादप्रहरणेऽपि । भूधरः । जटाधरः ॥

धनुर्दण्डत्सरुलाङ्गलाङ्कुशयष्टितोमरेषु ग्रहेर्वा ॥ १५ ॥

एषु कर्मसूपपदेषु ग्रहेरज् भवति वा । धनुर्गृह्णातीति धनुर्ग्रहः । धनुर्ग्राहः । दण्डग्रहः । दण्डग्राहः । त्सरुग्रहः । त्सरुग्राहः ।

---

१ चक्रं धरतीति B.

लाङ्गलग्रहः । लाङ्गलग्राहः । अङ्कुशग्रहः । अङ्कुशग्राहः । यष्टिग्रहः । यष्टिग्राहः । तोमरग्रहः । तोमरग्राहः ॥ घटग्रहः । घटीग्रहः । पचादित्वादच् । घटग्राहः । घटीग्राह इत्यण्यपि ॥ तथा सूत्रग्रह इति धारणे । अन्यत्र सूत्रग्राहः । पचादिप्रपञ्चार्थं प्रकरणमिदम् ॥

स्तम्बकर्णयो रमिजपोः(१) ॥ १६ ॥

स्तम्बकर्णयोर्नाम्नोरुपपदयो रमिजपिभ्यां(२) यथासंख्यमज् भवति । स्तम्बे रमते । स्तम्बेरमो हस्ती । कर्णे जपतीति कर्णेजपः(२) सूचक एवाभिधीयते । तथा सप्तम्यास्त्वालुक् ॥

शंपूर्वेभ्यः संज्ञायाम् ॥ १७ ॥

शंपूर्वेभ्यो धातुभ्यः संज्ञायां गम्यमानायामज् भवति । शं करोतीति शंकरः । शं भवतीति शंभवः । शंवरः । शंवदः ॥ शं पूर्वो येभ्यो धातुभ्य इति बहुव्रीहिणा हञो हेत्वादिष्वपि टो बाध्यते(३) । तेन शंकरा नाम परिव्राजिका ॥

शीङोऽधिकरणे च(४) ॥ १८ ॥

अधिकरणे च नाम्न्युपपदे शेतेरज् भवति । खे शेते । खशयः ॥

---

१ स्तम्ब॰ O.; ॰रमियपोः B.; Chaitr. om. this sútra; see Notes on iv., 3, 14.

२ ॰यपिभ्यां॰ यपतीति कर्णेयपः B.

३ टो वा वाध्यते B.

४ Chaitr. om. च.

चकारात् पार्श्वादौ करणे । पार्श्वेण शेते । पार्श्वशयः । एवं पृष्ठ-शयः । उदरशयः ॥ दिग्धेन सह शेते । दिग्धसहशयः । इति(१) समासद्वयम् ॥ उत्तानादिषु कर्तृषु(२) । उत्तानः शेते । उत्तानशयः ॥

चरेष्टः ॥ १९ ॥

अधिकरणे नाम्न्युपपदे चरेष्टो भवति । कुरुषु चरतीति कुरुचरः । कुरुचरी ॥ चकारादन्यत्रापि भवति । भिक्षां चरतीति(३) भिक्षाचरः । भिक्षाचरी । सेनया चरतीति सेनाचरः । सेनाचरी । आदाय चरतीति(४) आदायचरः ॥

पुरोऽग्रतोऽग्रेषु सर्तेः ॥ २० ॥

एषूपपदेषु सर्तेष्टो भवति । पुरः सरतीति पुरःसरः । पुरःसरी । अग्रतःसरः । अग्रतःसरी । आद्यादित्वात् तस्(५) ॥ अग्रेसरः । अग्रेसरी । एकारान्तमव्ययं निपातनादलुग् वा ॥

पूर्वे कर्तरि ॥ २१ ॥

पूर्वशब्दे कर्तृवाचिन्युपपदे सर्तेष्टो भवति । पूर्वः सरतीति पूर्वसरः । पूर्वसरी । कस्मात् पूर्व इत्यविवक्षैव ॥ कर्तरीति किम् । पूर्वं(६) सरतीति पूर्वसारः ॥

---

१ इह O.
२ कर्तृषु च । A.
३ °अन्यत्रापि च । भिक्षया चरतीति O.
४ A. om. from आदाय.
५ A. adds अग्रसरः । अग्रसरी.
६ पूर्वदिशं Chaitr.

कृञो हेतुताच्छील्यानुलोम्येष्वशब्दश्लोककलहगाथा-वैरचाटुसूत्रमन्त्रपदेषु ॥ २२ ॥

अशब्दादिषु कर्मसूपपदेषु हेतौ ताच्छील्य आनुलोम्ये च गम्यमाने कृञष्टो भवति। प्रतीतशक्तिकं(१) कारणं हेतुरिह गृह्यते कृञोऽनिनन्तत्वात्(२)। विद्या यशस्करी॥ ताच्छील्ये। आद्धकरः॥ आनुलोम्यमनुकूलता । वचनकरः ॥ अशब्दादिष्विति किम् । शब्दकारः। श्लोककारः। कलहकारः। गाथाकारः। वैरकारः। चाटुकारः। सूत्रकारः। मन्त्रकारः। पदकारः ॥ हेत्वानुलोम्ययोरविवक्षा(३) स्थितैव । ताच्छील्ये स्यादिति वर्जनम् ॥ कथं कुम्भादिकरणशीलाः कुम्भकारादय इत्यभिधानात् ॥

तदाद्याद्यन्तानन्तकारबहुबाह्वहर्दिवाविभानिशाप्रभाभाश्चित्रकर्तृनान्दीकिंलिपिलिबिबलिभक्तिक्षेत्रजङ्घा-धनुरुरुःसंख्यासु च(४) ॥ २३ ॥

अहेत्वाद्यर्थमिदम् । तदाद्यादिषु(५) कर्मसूपपदेषु कृञष्टो भवति। त्यच्छब्दश्छान्दसोऽयम् । तत्करोतीति तत्करः। तस्कर इति रूढित्वात् तस्य सकारः(६)। एवं यत्करः । आदिकरः। अन्तकरः। अनन्तकरः। कारकरः। बहुकरः। बाहुकरः।

---

१ प्रतीतिशक्तिकं A.

२ ऽनिनन्तात् A.; ऽनिनन्तात्वात् हेतौ O.

३ °अविवक्षता A.; अविवक्षा O.

४ त्यदादिकाराद्यन्तानन्तबहुबाहु-दिवानिशाविभाप्रभाभाश्चित्र° भक्तिक्षेत्रसंख्यासु च ॥ Chaitr.

५ तदादिषु.

६ O. om. from इति रू°.

अहस्करः। दिवाकरः। विभाकरः। निशाकरः। प्रभाकरः। भास्करः। चित्रकरः। कर्तृकरः। नान्दीकरः। किंकरः। लिपिकरः। लिविकरः। बलिकरः। भक्तिकरः। क्षेत्रकरः। जङ्घाकरः। धनुष्करः। अरुष्करः॥[1] एककरः। द्विकरः। त्रिकरः। चतुष्करः। किंयत्तद्बहुषु स्त्रियामादैव कर्तव्यः॥ चकाराद् रजनीकरः। क्षपाकरः। क्षणदाकरः। इत्यादयोऽप्यनुसर्तव्याः॥

## भृतौ कर्मशब्दे॥ २४॥

कर्मशब्दे कर्मण्युपपदे कृञष्टो भवति भृतौ गम्यमानायाम्। भृतिः कर्ममूल्यम्[2]। कर्मकरो भृतकः। कर्मकरी दासी॥ भृताविति किम्। कर्मकारः॥ शब्दग्रहणं प्रत्ययार्थम्। कर्म स्यादिति॥

## इः स्तम्बशकृतोः॥ २५॥

स्तम्बशकृतोः कर्मणोरुपपदयोः[3] कृञ इर्भवति। स्तम्बकरिर्व्रीहिरेव। स्तम्बकारो[4]ऽन्यः॥ शकृत्करिर्वत्स एवाभिधानात्। शकृत्कारोऽन्यः॥

## हरतेर्दृतिनाथयोः पशौ॥ २६॥

दृतिनाथयोः कर्मणोरुपपदयोर्हरतेरिर्भवति। पशौ कर्तरि। दृतिहरिः पशुः। नाथहरिः पशुः॥

---

१ B. adds संख्यायां तु.
२ भृतिर्वेतनाविशेषः। Chaitr.
३ °शकृतोर्नाम्नोरुपपदयोः O.
४ स्तम्बकरि° स्तम्बकारो O.

फलेमलरजःसु ग्रहेः ॥ २७ ॥

एषु कर्मसूपपदेषु ग्रहेरिर्भवति । फलानि गृह्णातीति फलेग्रहिः । सूत्रनिपातनादेत्वम् ॥ मलं गृह्णातीति मलग्रहिः । रजो गृह्णातीति रजोग्रहिः ॥

देववातयोरापेः ॥ २८ ॥

देववातयोः कर्मणोरुपपदयोराप्नोतेरिर्भवति । देवानाप्नोतीति देवापिः । वातानाप्नोतीति वातापिः । विशिष्ट एव रूढित्वात्[१] ॥

आत्मोदरकुक्षिषु[२] भृञः खिः ॥ २९ ॥

एषु कर्मसूपपदेषु भृञः खिर्भवति । आत्मानमेव बिभर्ति । आत्मंभरिः । एवम् उदरम्भरिः । कुक्षिंभरिः ॥

एजेः खश् ॥ ३० ॥

कर्मण्युपपद एजयतेः खश् भवति । अङ्गमेजयः । जनमेजय. । खानुबन्धान्मोऽन्तः । शानुबन्धे सार्वधातुकत्वाद्[३] विकरण इणो गुणः स्यात् ॥

शुनीस्तनमुञ्जकूलास्यपुष्पेषु धेटः ॥ ३१ ॥

एषु कर्मसूपपदेषु धेटः खश् भवति । शुनीं धयतीति शुनिं-

---

१ एवाभिधानात् B.

२ आत्मोदरयोर् Chaitr.; [and Vârttika कुक्षौ चेति वक्तव्यम्].

३ सार्वधातुकेवद्भावाद् O.

धयः। स्तनौ धयतीति[1] स्तनंधयः। एवं मुञ्जंधयः। कूलंधयः। आस्यंधयः। पुष्पंधयः॥ मुञ्जादिषु केचिन्नेच्छन्ति॥ प्रकृतावानर्थक्याद्[2] धेटष्टकारो नदाद्यर्थो विज्ञायते। शुनिंधयी। स्तनंधयी॥

## नाडीकरमुष्टिपाणिनासिकासु ध्मश्च॥ ३२॥

एषु कर्मसूपपदेषु धमतेर्धेटश्च खश् भवति। नाडिंधमः। नाडिंधयः। करंधमः। करंधय इति नेच्छन्त्येके[3]। मुष्टिंधमः। मुष्टिंधयः। पाणिंधमः। पाणिंधय इति नेच्छन्त्येके। नासिकंधमः। नासिकंधयः॥ शुनीस्तनघटीखरीवातेषु[4] धमतेरित्येके। शुनिंधमः। स्तनंधमः। घटिंधमः। खरिंधमः[5]। वातंधमः॥

## विध्वरुस्तिलेषु[6] तुदः॥ ३३॥

एषु कर्मसूपपदेषु तुदतेः खश् भवति। विधुंतुदः। अरुंतुदः। तिलंतुदः॥

## असूर्योग्रयोर्दृशः॥ ३४॥

असूर्योग्रयोः कर्मणोरुपपदयोर्दृशः खश् भवति। न सूर्यं पश्यन्ति। असूर्यंपश्यानि मुखानि। असूर्यंपश्या राजदाराः।

---

१ प्रधयतीति O.
२ प्रकृतावनर्थकत्वाद् A.
३ केचिन्नेच्छन्ति O.
४ °खरवातेषु O.
५ खारिंधमः A.
६ वहविध्वरुस्तिलेषु O.

सूर्यमपि न पश्यन्तीत्यर्थः । दृशिना सह संबद्धस्य नञः सूर्येण सह समासो गमकत्वात् ॥ उग्रंपश्यः ॥

ललाटे तपः ॥ ३५ ॥

ललाटे कर्मण्युपपदे तपतेः खश् भवति । ललाटं तपतीति ललाटंतपः ॥

मितनखपरिमाणेषु पचः ॥ ३६ ॥

एषु कर्मसूपपदेषु पचतेः खश् भवति । मितंपचा ब्राह्मणी । नखंपचा यवागूः । प्रस्थंपचो माणवकः । द्रोणंपचा स्थाली । प्रस्थादय एव परिमाणान्यत्राभिधीयन्ते ॥ न कालः संख्या च । तेन मासं पचति । एकं पचतीति वाक्यमेव ॥

कूल उद्रुजोद्वहोः[१] ॥ ३७ ॥

कूले कर्मण्युपपद उद्रुजोद्वहोः[२] खश् भवति । कूलमुद्रुजा[२] नदी । कूलमुद्वहः समुद्रः ॥

वहंलिहाभ्रंलिहपरंतपेरंमदाश्च[३] ॥ ३८ ॥

एते खश्प्रत्ययान्ता निपात्यन्ते । वहंलिहा गौः । अभ्रंलिहो वायुः । परं तापयतीति परंतपः । इरया माद्यतीति । इरंमदो

---

१ उद्रजोद्वहोः A.; कूलमुद्रजो॰ Chaitr.

२ ॰उद्रज॰ A. Chaitr.

३ Chaitr. om. परंतप; see next page, note 2.

हस्ती॥ चकाराद् वातमजन्तीति वातमजा मृगाः। शर्धं जहतीति शर्धंजहा माषाः[1]॥

## वदेः खः प्रियवशयोः[2]॥ ३९॥

प्रियवशयोः कर्मणोरुपपदयोर्वदेः खो भवति। प्रियंवदः। वशंवदः॥ उत्तरार्थमिह प्रक्रियालाघवार्थं च खः[3] क्रियते॥

## सर्वकूलाभ्रकरीषेषु कषः[4]॥ ४०॥

एषु कर्मसूपपदेषु कषतेः खो भवति। सर्वंकषः खलः। कूलंकषा नदी। अभ्रंकषो गिरिः। करीषंकषा वात्या॥

## भयर्तिमेघेषु कृञः॥ ४१॥

एषु कर्मसूपपदेषु कृञः खो भवति। भयं करोतीति भयंकरः। अभयंकरः। भयेन तदन्तविधिरिष्टः। ऋतिंकरः। मेघंकरः॥

## क्षेमप्रियमद्रेष्वण् च[5]॥ ४२॥

एषु कर्मसूपपदेषु कृञः खो भवति। अण् च। क्षेमंकरः। क्षेमकारः। प्रियंकरः। प्रियकारः। मद्रंकरः। मद्रकारः॥ वेति

---

१ सर्धं॰ सर्धंजहा मासाः A.

२ Between rules 39 and 40 the Chaitr. inserts the sûtra: शत्रु-परयोस्तापेः।

३ उत्तरर्थ इह॰ लाघवार्थः खः A.

४ कषः [कशतेः॰] Chaitr.

५ क्षेमप्रियभद्रमद्रेषु च Chaitr.

सिद्धेऽण्ग्रहणं हेत्वादिष्वपि टो बाधनार्थम् ॥ एष्विति किम् । भद्रकारः[1] ॥

भावकरणयोस्त्वाशिते भुवः ॥ ४३ ॥

आशितशब्द उपपदे[2] भवतेर्भावे करणे च[3] खो भवति। आशनमाशितम् । आशितस्य भवनम् । आशितंभवम् ॥ आशितं भवत्यनया । आशितंभवा पञ्चपूली ॥

नाम्नि तॄभृवृजिधारितपिदमिसहां संज्ञायाम् ॥ ४४ ॥

नाम्न्युपपद एभ्यः[4] संज्ञायां खो भवति । रथेन तरतीति रथंतरं साम ॥ विश्वं बिभर्ति । विश्वंभरा । अवनिः ॥ पतिं वृणीते। पतिंवरा कन्या ॥ धनं जितवान् । धनंजयोऽर्जुनः । वसु धारयतीति वसुंधरा पृथ्वी । अभिधानाद् ह्रस्वः ॥ शत्रुं तपतीति[5] शत्रुंतपः ॥ अरिं दाम्यति दमयति वा । अरिंदमः ॥ शत्रुं सहते । शत्रुंसहः ॥ नाम कर्म च यथासंभवं संज्ञात्वाद् गम्यते । नाम्नीति सुखार्थमेव ॥

गमश्च ॥ ४५ ॥

नाम्न्युपपदे संज्ञायां गमश्च खो भवति । सुतंगमः । भुजा-

---

१ एष्विति किम् । सुखकारः । Chaitr.
२ आशितशब्दोपपदे B. O.
३ भावकरणयोः O.
४ एभ्यो धातुभ्यः B.
५ तापयतीति A. B.

भ्यां गच्छतीति भुजंगमः । मितं गच्छतीति मितंगमो हस्ती । पूर्वंगमाः पन्थानः । हृदयंगमा वाचः ॥

## उरोविहायसोरुरविहौ च ॥ ४६ ॥

उरोविहायसोरुपपदयोर्गमस्य संज्ञायां खो भवति । तयोरुरविहौ च यथासंख्यं भवतः । उरसा गच्छतीत्युरंगमः । विहायसा गच्छतीति विहंगमः ॥

## डोऽसंज्ञायामपि ॥ ४७ ॥

नाम्न्युपपदे गमेर्डो भवति संज्ञायामसंज्ञायामपि[1] । उरोविहायसोरुरविहौ च यथासंख्यं भवतः । भुजगः । तुरगः । प्लवगः । पतंगः । अन्तगः । अत्यन्तगः । अध्वगः । दूरगः । पारगः । सर्वगः । सर्वत्रगः । पन्नगः । ग्रामगः । गुरुतल्पगः । सुगः[2] । दुर्गः । निर्गो देशः । अगः । तीरगः । पीठगः । उरगः । विहगः ॥

## विहंगतुरंगभुजंगाश्च ॥ ४८ ॥

एते डप्रत्ययान्ता निपात्यन्ते । संज्ञायामेव । विहायसा गच्छतीति विहंगः । तुरो गच्छतीति तुरंगः । भुजाभ्यां गच्छतीति भुजंगः ॥ चकारात् । पतो गच्छतीति पतंगः । प्लवेन गच्छतीति प्लवंगः । प्रवेण गच्छतीति प्रवंगः[3] ॥

---

१ संज्ञायामपि A.
२ स्वर्गः O.
३ A. om. from प्रवेण.

अन्यतोऽपि च ॥ ४९ ॥

गमेरन्यस्मादपि संज्ञायामसंज्ञायामपि[१] नाम्न्युपपदे डो भवति । वारि चरतीति वार्चो हंसः ॥ गिरौ शेते । गिरिशः ॥ वरानाहन्ति । वराहः ॥ परिखन्यते । परिखा ॥ कर्मण्यपि दृश्यते ॥

हन्तेः कर्मण्याशीर्गत्योः ॥ ५० ॥

कर्मण्युपपद आशिषि गतौ च वर्तमानाद्[२] हन्तेर्डो भवति। शत्रुं वध्यात् । शत्रुहः ॥ क्रोशं हन्ति । क्रोशहः ॥ कर्मण्येव निरपेक्षत्वात् कर्मग्रहणं सुखार्थम् ॥

अपात् क्लेशतमसोः ॥ ५१ ॥

क्लेशतमसोः कर्मणोरुपपदयोरपात्परस्य हन्तेर्डो भवति[३]। क्लेशापहः । तमोऽपहः ॥ कथं सुखापहः । दुःखापहः । ज्वरापहः । वातपित्तकफापहः । विषाग्निदर्पापहः । अन्यतोऽपि चेति सिद्धं प्रपञ्चार्थं डविधानम् ॥ कथं दार्वाघाटः । चार्वाघाटः । वर्णसंघाटः । घटतेर्भविष्यति । चार्वाहन्ति । चार्वाघाटः । एवं वर्णसंघाटः॥ दार्वाघाटोऽपि तर्हि स्यात् । असंज्ञायामिष्यत एव॥

कुमारशीर्षयोर्णिन् ॥ ५२ ॥

शिरःपर्यायः शीर्षशब्दः । कुमारशीर्षयोः कर्मणोरुपपदयोर्हन्तेर्णिन् भवति । कुमारघाटी । शीर्षघाटी ॥

---

१ संज्ञायामपि B.
२ गम्यमानाद् A.
३ A. adds क्लेशमपहन्ति and om. परस्य.

## टग् लक्षणे जायापत्योः ॥ ५३ ॥

लक्षणयोगाल्लक्षणम् । जायापत्योः कर्मणोरुपपदयोर्हन्तेर्लक्षणवति कर्तरि टग् भवति । जायाघ्नो ब्राह्मणः[१] । पतिघ्नी वृषली ॥

## अमनुष्यकर्तृकेऽपि च ॥ ५४ ॥

कर्मण्युपपदेऽमनुष्यकर्तृकेऽपि धात्वर्थे[२] वर्तमानाद् हन्तेष्टग् भवति । जायाघ्नस्तिलकः । पतिघ्नी पाणिरेखा । श्लेष्मघ्नं त्रिकटुकम् । पित्तघ्नं घृतम् । वातघ्नं तैलम् ॥ अमनुष्यकर्तृक इति किम् । आखुघातः शूद्रः । ब्राह्मणघातो वृषलः ॥ कथं चौरघातो गजः । शत्रुघातो वृषभः[३] । अपिशब्दात् ॥ कृतघ्नः खलः । शत्रुघ्नः शूर इति च भवति[४] ॥

## हस्तिबाहुकपाटेषु[५] शक्तौ ॥ ५५ ॥

एषु कर्मसूपपदेषु शक्तौ गम्यमानायां हन्तेष्टग् भवति । हस्तिघ्नः । बाहुघ्न इति मतम् । कपाटघ्नः[६] ॥ नगरे त्वहस्तिन्यपिवचनात्[७] । नगरघ्नोऽग्निः । नगरघातो हस्ती चेत् ॥

---

१ वृषलः A.
२ Om. O.; B. om. अपि.
३ कथं चौरघातो वृषभः । O.; कथं शत्रुघातो वृषभः B.
४ इत्यपि । O.
५ कवाटेषु A.; the Chaitr. om. this sûtra, but has the vârttika शक्तौ हस्तिकपाटयोरिति वक्तव्यम (Pâṇ. III. 2, 54).
६ कवाटघ्नः A.
७ नगरे हस्तिन्यपि° O.

पाणिघताडघौ शिल्पिनि ॥ ५६ ॥

एतौ शिल्पिनि कर्तरि निपात्येते । पाणिभ्यां पाणी वा हन्ति । पाणिघः ॥ ताडं हन्ति । ताडघः ॥ शिल्पिनीति किम् । पाणिघातः । ताडघातः ॥ राजानं हन्ति । राजघ इत्यप्यधिकारात् ॥

नग्नपलितप्रियान्धस्थूलसुभगाढ्येष्वभूततद्भावे कृञः ख्युट् करणे ॥ ५७ ॥

अभूततद्भावे वर्तमानेषु नग्नादिषूपपदेषु कृञः ख्युड् भवति । करणे कारके । अनग्नो नग्नः क्रियतेऽनेनेति नग्नंकरणं द्यूतम् । एवं पलितंकरणं तैलम् । प्रियंकरणं शीलम् । अन्धंकरणः शोकः । स्थूलंकरणं दधि । सुभगंकरणं रूपम् । आढ्यंकरणं वित्तम् ॥ अनग्नंकरणमित्यादि तदन्तविधिना ॥ अभूततद्भाव इति किम् । आढ्यं करोति तैलेनाभ्यञ्जयतीत्यर्थः । उत्पादार्थे[1]ऽप्यभूततद्भावस्याविवक्षितत्वात्[2] । व्यक्तेर्विवक्षितत्वाच्च्व्यन्तेषु न भवति । उत्तरत्राप्येवं नग्नीकरोत्यनेन युडपि नैवाविशेषात् ॥

भुवः खिष्णुखुकञौ[3] कर्तरि ॥ ५८ ॥

अभूततद्भावे नग्नादिषूपपदेषु भुवः खिष्णुखुकञौ कर्तरि भवतः । नग्नंभविष्णुः । नग्नंभावुकः ॥ पलितंभविष्णुः । पलितंभावुकः ॥ प्रियंभविष्णुः । प्रियंभावुकः ॥ अन्धंभविष्णुः । अन्धंभावुकः ॥

---

१ उत्पादाद्यर्थे A.; उत्पादर्थे O.
२ °भावस्य विवक्षितत्वात् O.; °भावस्याविवक्षितत्वाच्च्व्यन्तेषु न भवति । A.
३ खिष्णुच्खुकञौ O.

स्थूलंभविष्णुः । स्थूलंभावुकः ॥ सुभगंभविष्णुः । सुभगंभावुकः ॥ आढ्यंभविष्णुः । आढ्यंभावुकः ॥ अनग्नंभविष्णुः । अनग्नंभावुक इत्यादि ॥ तदन्तविधिना च्व्यन्तेषु न भवति । आढ्यीभविता ॥ ताच्छीलिकत्वान्नास्यभूततद्भाव[1] इति न परावपीष्णुकञौ ॥ इकारः सुखार्थः । तथा कर्तरीति ॥

भजो विण्[2] ॥ ५९ ॥

कर्मण्युपपदे भजो विण् भवति । अर्धभाक्[3] । पादभाक् ॥ उपसर्गादपि केचित् । अर्धप्रभाक् ॥

सहश्छन्दसि[2] ॥ ६० ॥

नाम्न्युपपदे सहश्छन्दसि संज्ञायां विण् दृष्टः स च लोके प्रयुज्यत इति वचनम् । तुराषाट् । तुरासाहं पुरोधायेति ॥

वहश्च ॥ ६१ ॥

नाम्न्युपपदे वहेश्छन्दसि संज्ञायां विण् भवति[4] । प्रष्ठवाट् । प्रष्ठौही । वाहेर्वाशब्दश्चौविति । इदमपि पूर्ववत्[5] ॥

---

१ ताच्छीलत्वाद्° A.

२ Chaitr. combines sûtras 59 and 60 in one भजसहोर्विण्; to which, however, a vârttika is added, सहेश्छन्दसीति वक्तव्यम्।

३ अर्धं भजति । अर्धभाक् A.

४ दृष्टः O.

५ A. om. the comment on this sûtra.

**अनसि डश्च[१] ॥ ६२ ॥**

अनस्युपपदे[२] वहेर्विण् भवति । अनसश्च डो भवति । अनो वहतीति । अनड्वान् । अनडुही रूढित्वात् ॥

**दुहः को घश्च ॥ ६३ ॥**

कर्मण्युपपदे दुहः को भवति घश्चान्तादेशः । ब्रह्मदुघा गौः ॥

गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः ।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति[३] ॥

**विट् क्रमिगमिखनिसनिजनाम् ॥ ६४ ॥**

नाम्न्युपपद एभ्यो विड् भवति ॥

अग्रेगा उदधिक्राश्च गोषाश्च बिषखास्तथा ।
श्रियं दधतु राजेन्द्र तवाब्जा सहिता इमे ॥

छन्दसि संज्ञात्वेन विश्रुता लोके प्रयुज्यन्त इति मतम् ॥

**मन्त्रे श्वेतवहुक्थशंसपुरोडाशावयजिभ्यो विण्[४] ॥ ६५ ॥**

एभ्यो विण् भवति मन्त्रे[५] । श्वेतैरुह्यते । श्वेतवाः । इन्द्रः ॥ उक्थान्युक्थैर्वा शंसति । उक्थशाः । यजमानः ॥ पुरो दाशत्येनम्[६] । पुरोडाः । दस्य डत्वं निपातनात् । पुरो दश्यत[७] इति

---

१ Between 62 and 63 Chaitr. has two additional sûtras; see Notes.

२ नाम्न्युपपदे A.

३ B. O. om. the second half-sloka.

४ Chaitr. om. this sûtra, see Notes on 62-63.

५ मन्त्रेऽर्थे A.　　६ दशत्येनं B.

७ दाशत A.; दश्यते O.

वा । अकारान्तस्य निपात्यते । सदा पुरोडाशपविचिताधर इति ॥ अवयजते । अवयाः[१] ॥ विरामे व्यञ्जनादौ चैषामन्तस्य उस् । श्वेतवोभ्याम् । पुरोडोभ्याम् । उक्थशोभ्याम् । अदन्तपक्षे पुरोडाशाभ्याम् ॥ स्वरादौ तु । श्वेतवाहौ । उक्थशंसौ । अवयाजौ ॥ मन्त्रे रूढिलाद् यथादर्शनं गम्यते । संज्ञात्वाल्लोके[२] प्रयुज्यन्त इति मतम् ॥

## आतो मन्क्वनिब्वनिब्विचः[३] ॥ ६६ ॥

आकारान्ताद्धातोर्मन् । क्वनिप् । वनिप् । विच् । इत्येते प्रत्यया भवन्ति ॥ मन् । शोभनं ददाति । सुदामा ॥ अश्व इव तिष्ठति । अश्वत्थामा ॥ क्वनिप् । सुपीवा । सुधीवा ॥ वनिप् । घृतपावा । भूरिदावा ॥ विच् । कीलालपाः ॥

## अन्येभ्योऽपि दृश्यन्ते[४] ॥ ६७ ॥

अन्येभ्योऽपि धातुभ्य एते प्रत्यया दृश्यन्ते ॥ मन् । सुशर्मा[५] ॥ क्वनिप् । प्रातरित्वा ॥ वनिप् । विजावा ॥ विच् । रिश रुश[६] हिंसायाम् । रेट् । रोट् ॥ दृशिग्रहणं प्रयोगानुसारार्थम् ॥

## क्विप् च ॥ ६८ ॥

धातोः क्विप् च दृश्यते । उखायाः[७] स्रंसते । उखास्रत् ॥

---

१ अवजाः । विरामव्यञ्ज° A.
२ संज्ञाशब्द्ला° O.
३ In Chaitr. this sûtra is: मन्क्वनिप्वनिस्रोपसर्गेऽपि ।
४ Chaitr. om. this sûtra.
५ सुधर्मा O.
६ रिष रुष O.
७ उखायां A.

पर्णानि ध्वंसते। पर्णध्वत्॥ दिव। अक्षद्यूः॥ क्रुङ्। प्रत्यङ्। ऊः। कीः। गीः। लूः॥

वहे पञ्चम्यां भ्रंशेः(१) ॥ ६९ ॥

वहे पञ्चम्यन्त उपपदे भ्रंशेः क्विब् भवति। वहाद् भ्रश्यति। वहभ्रट्॥

स्पृशो ऽनुदके(१) ॥ ७० ॥

अनुदके नाम्न्युपपदे स्पृशः क्विब् भवति। घृतं स्पृशतीति घृतस्पृक्। मन्त्रेण स्पृशतीति मन्त्रस्पृक्॥ अनुदक इति किम्। उदकस्पर्शः॥

अदो ऽनन्ने ॥ ७१ ॥

अनन्ने नाम्न्युपपदे ऽदः क्विब् भवति। सस्यमत्ति। सस्यात्॥ आममत्ति। आमात्॥ अनन्न इति किम्। अन्नादः॥ कणाद इत्यपि दृश्यते॥

क्रव्ये च(२) ॥ ७२ ॥

क्रव्ये चोपपदे ऽदः क्विब् भवति। पुनर्वचनात् पक्वे। क्रव्यात्। अपक्वे ऽप्येव। क्रव्यादा राक्षसाः॥ चतुःसूत्रीयं प्रपञ्चार्थेति॥

---

१ Chaitr. om. sûtra 69 and has s. 70 as a vârttika.

२ Chaitr. om. this sûtra.

ऋत्विग्दधृक्स्रग्दिगुष्णिहश्च ॥ ७३ ॥

एते क्विबन्ता निपात्यन्ते । ऋतौ यजतीति । ऋत्विक् । रूढित एव[1] ॥ धृषो द्विर्वचनम् । दधृक् ॥ सृजेर्ऋतः[2] परोऽत् । कर्मणि क्विप् । सृजति तामिति स्रक् ॥ दिशेः कर्मणि क्विप् । दिशति तामिति दिक् ॥ ऊर्ध्वं स्निह्यति[3] । उष्णिक् । उदो दलोपः षत्वं निपातनात् । गत्वं च[4] दृगादित्वात् ॥

सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि[5] ॥ ७४ ॥

एषामुपसर्गेऽनुपसर्गेऽपि नाम्न्युपपदेऽपि क्विब् भवति । उपसीदति । उपसत् । सत् । सभासत् ॥ द्विषः साहचर्यात् सूरदादिः । प्रसूते । प्रसूः । सूः । अण्डसूः ॥ विद्विट् । द्विट् । मित्रद्विट् ॥ प्रध्रुक् । ध्रुक् । मित्रध्रुक् ॥ प्रधुक् । धुक् । गोधुक् ॥ प्रयुक्[6] । युङ् । अश्वयुक्[7] ॥ संवित् । वित् । वेदवित् । लाभार्थान्न दृश्यते[8]॥ प्रभित् । भित् । काष्ठभित् ॥ प्रच्छित् । छित् । रज्जुच्छित् ॥ अभिजित् । जित् । अरिजित्[9] ॥ प्रणीः । नीः । सेनानीः[10] ॥ विराट् । राट् । गिरिराट् ॥ प्रपञ्चार्थमिदम् ॥

---

१ रूढ एव O.
२ सृजो ऋतः A.; स्रजेर्ऋतः O.
३ स्निह्यते O.
४ °दलोपः सत्वं गत्वं च B.
५ Chaitr. om. this sûtra.
६ प्रयुङ् B.
७ अश्वयुङ् A.
८ लाभार्थोऽपि न दृश्यते A.
९ विश्वजित् B.; O. adds इन्द्रजित्.
१० ग्रामणीः A.

कर्मण्युपमाने त्यदादौ दृशष्टक्सकौ च ॥ ७५ ॥

त्यदादावुपमान उपपदे(१) उपमेयेऽर्थे कर्मणि दृशष्टक्सकौ च भवतः । क्विप् च । स्य इव दृश्यते(२) । त्यादृशः । त्यादृशी । त्यादृक्षः । त्यादृक् ॥ स इव दृश्यते । तादृशः । तादृशी । तादृक्षः । तादृक् ॥ एषु समानस्य स इति(३) सदृशः । सदृशी । सदृक्षः । सदृक् ॥ आ सर्वनाम्नः [का० ४. ६. ६९] । अन्यादृशः । अन्यादृशी । अन्यादृक्षः । अन्यादृक् ॥ त्यदादाविति किम् । वृक्ष इव दृश्यते ॥ उपमान इति किम् । स दृश्यते ॥ कर्मणीति(४) किम् । स इव पश्यति ॥

नाम्न्यजातौ णिनिस्ताच्छील्ये ॥ ७६ ॥

तच्छब्देन धात्वर्थो निर्दिश्यते । तदेव शीलं यस्य कर्तुरिति विग्रहः । अजातिवाचके नाम्न्युपपदे धातोस्ताच्छील्ये गम्यमाने णिनिर्भवति । उष्णभोजी । धर्मावभाषी ॥ नाम्नीति किम् । उपभोक्ता । संभोक्ता ॥ कथम् उदासारी । प्रत्यासारी । ब्रह्मवादी ॥ साधौ च । साधु ददातीति साधुदायी । साधुकारीति वक्तव्यमेव ॥ अजाताविति किम् । ब्राह्मणानामन्त्रयिता ॥

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥

---

१ त्यदादावुपपदे A.
२ क्विप् च दृश्यते । A.
३ एषु समानस्य सः समान इव दृश्यते A.
४ B. om. from आ सर्वनाम्नः to कर्म०.

प्रागुत्पत्तिविनाशाभ्यां सत्त्वस्य युगपद्गुणैः।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः॥ इत्यन्ये[१]॥

तदा कुमारवादीति भवितव्यमेवाजातित्वात्॥

कर्तर्युपमाने॥ ७७॥

उपमानेऽर्थे नाम्नि कर्तृवाचिन्युपपदे धातोर्णिनिर्भवति। जात्यर्थमताच्छील्याभीक्ष्ण्यार्थं च[२]। उष्ट्र इव क्रोशति। उष्ट्रक्रोशी॥ ध्वाङ्क्ष[३] इव रौति। ध्वाङ्क्षरावी[३]॥ कर्तरीति किम्। शालीनिव कोद्रवान् भुङ्क्ते॥ उपमान इति किम्। उष्ट्रः क्रोशति॥ उपपदवाच्यः कर्ता णिन्यर्थस्य कर्तुरुपमानं न्याय्यम्। उष्ट्रस्येव क्रोशनमस्येति वाक्ये। अन्तरङ्गसंबन्धेऽपि गौणत्वमिति[४]॥

व्रताभीक्ष्ण्ययोश्च॥ ७८॥

व्रतमिति शास्त्रविहितो नियमः। आभीक्ष्ण्यं पौनःपुन्यम् आसेवा वा॥ नाम्न्युपपदे व्रताभीक्ष्ण्ययोर्गम्यमानयोर्धातोर्णिनिर्भवति। अश्राद्धभोजी। अलवणभोजी। अर्थित्वात् प्रवृत्तौ नियमः। सति भोजनेऽश्राद्धमेव भुङ्क्ते। न श्राद्धमिति॥ आभीक्ष्ण्ये। क्षीरपायिण उशीनराः[५]। सौवीरपायिणो वाह्लीकाः। तत्रान्यत्वेयं नास्तीति रुचिं विना क्षीरे तात्पर्यमिति शीलादन्यदाभीक्ष्ण्यम्॥

---

१ Om. B.; A. O. om. तदा.
२ °ताच्छील्या आभि° O.; °ताच्छील्यमशीलाभिक्ष्णार्थाश्च B.
३ ध्माङ्क्ष° A.
४ गौणमिति B.
५ उसीनराः O.

मनः पुंवच्चात्र ॥ ७९ ॥

कर्मण्युपपदे मन्यतेर्णिनिर्भवति । अस्मिंश्च णिनिप्रत्ययान्ते धातौ पर उपपदस्य पुंवच्चोपतिष्ठते यथासंभवम् ॥ पटुं मन्यते । पटुमानी ॥ पट्वीं मन्यते । पटुमानिनी ॥ पुंवच्चेति पुंवदादिशास्त्रमत्राभिमतम् । तेन खट्वामानिनी । ब्रह्मबन्धूमानिनी । द्रोणीमानिनीति सिद्धम् ॥

खश्चात्मने[1] ॥ ८० ॥

कर्मण्युपपद आत्मार्थो यो मन्यतिस्तस्माणिनिर्भवति खश्च[2] ॥ विदुषीमात्मानं मन्यते । विद्वन्मानिनी । विदुषिंमन्या । विद्वन्मानी । विद्वन्मन्यः ॥ पट्वीमात्मानं मन्यते । पटुमानिनी । पट्विंमन्या । पटुमानी । पटुंमन्यः ॥ तुल्याधिकरणत्वाणिनि पुंवद्भावः । तादर्थ्यमत्रार्थद्वारेणात्मशब्दः[3] कर्मभूतो वाक्ये सुखार्थः । कारकशक्तिभेदाद्भेद इति । एक एव कर्ता कर्म च स्यात् । यथा पीयमानं मधु मदयति । बाह्योऽत्रात्मात्मवचनात्[4] ॥

करणेऽतीते यजः ॥ ८१ ॥

करणवाचिन्युपपदेऽतीते क्रियायां वर्तमानाद् यजतेर्णिनिर्भवति । अग्निष्टोमयाजी । वाजपेययाजी । अग्निष्टोमाख्यैर्यागैः

---

१ Thus MSS. and com.; खश्चात्ममाने Chaitr. (Pâṇ. III. 2, 83).

२ खश्चान्तादेशः B.

३ तादर्थ्यमात्रार्थ° O.

४ ऽत्रात्मा वचनात् A.

स्वर्गाख्यं फलं भावितवानित्यर्थः। स्वर्गशब्दस्तु वृत्तावन्तर्भूतो न प्रयुज्यते(१)। यदि विशेषव्यापारः सामान्यव्यापारस्य करणं(२) कथम् अग्निहोत्रं जुहुयात् स्वर्गकामः। अपौरुषेयाणि वेदवाक्यानीति॥ अतीत इति किम्। अग्निष्टोमेन यजति(३)॥ करण इति किम्। ग्रामे यजति स्म। अविवक्षितकरणात्॥

## कर्मणि हनः कुत्सायाम्॥ ८२॥

कर्मण्युपपदेऽतीते वर्तमानाद् हन्तेः कुत्सायां गम्यमानायां णिनिर्भवति। पितृघाती। मातृघाती॥ कुत्सायामिति किम्। चौरं हतवान्। दण्डेन हतवान् पितृव्यमिति सापेक्षत्वात्॥ कर्मग्रहणं सुखार्थम्॥

## क्विब् ब्रह्मभ्रूणवृत्रेषु॥ ८३॥

ब्रह्मादिषु कर्मसूपपदेष्वतीते वर्तमानाद् हन्तेः क्विब् भवति। ब्रह्महा। भ्रूणहा। वृत्रहा॥ ब्रह्मादिष्वेव हन्तेरेवातीत एव क्विबेवेति चतुर्विधोऽत्र(४) नियमः। तेन गां हतवान्॥ ब्रह्माधीतवान्। ब्रह्म हन्ति। ब्रह्म हतवान्। अतो नाण्॥ विनियमोऽपि दृश्यते। मधुहा। अहिहा। गोत्रहा॥ ब्रह्मघ्नः। वृत्रस्य हन्तुः(५)। ब्रह्मवित्॥

---

१ °भूतो वाक्ये सुखार्थो न प्रयुज्यते A.
२ सामान्याव्यापारस्वकरणं O.
३ यजति स्म A.; अकरण इति O.
४ ऽत्रापि A.
५ हन्ति A.

## कृञः सुपुण्यपापकर्ममन्त्रपदेषु ॥ ८४ ॥

एषु कर्मसूपपदेष्वतीते वर्तमानात् कृञः क्विब् भवति । सुष्ठु कृतवान् । सुकृत् ॥ पुण्यकृत् । पापकृत् । कर्मकृत् । मन्त्रकृत् । पदकृत् ॥ स्वादिषु कृञ एवातीत एव क्विबेवेति त्रिविधोऽत्र नियमः । तेन मन्त्रानधीतवान् । कर्म करोति । कर्म कृतवान् । अतो नाण्[१] ॥ शास्त्रकृत् । सूत्रकृदिति भवत्येव[२] ॥

## सोमे सुञः ॥ ८५ ॥

सोमे कर्मण्युपपदेऽतीते वर्तमानात् सुञः क्विब् भवति । सोमं सुतवान् । सोमसुत् ॥ चतुर्विधोऽत्रापि नियमः । तेन सुरां सुतवान् । सोमं विक्रीतवान् । सोमं सुनोति । सोमं सुतवान् । अतो नाण् ॥ अन्येभ्यः क्विबभावे[३]ऽण् स्यादेव ॥

## चेरग्नौ ॥ ८६ ॥

अग्नावुपपदेऽतीते वर्तमानाच्चिनोतेः क्विब् भवति । अग्निं चितवान् । अग्निचित् ॥ चतुर्विधोऽत्रापि नियमः । तेन पुष्पं चितवान् । अग्निं कृतवान् । अग्निं चिनोति । अग्निं चितवान् । अतो नाण् ॥ अग्न्यर्थे लिष्टकानां रचनाविशेषे गम्यमाने कर्मण्यपि दृश्यत एव[४] । श्येन इव चीयते स्म । श्येनचित् ॥ रथचक्रमिव चीयते स्म । रथचक्रचित् ॥ इयमपि चतुःसूत्री प्रपञ्चार्था ॥

---

१ O. adds शेषापि विनियमः
२ भवितव्यमेव O.
३ क्विब्भावे A.
४ दृष्ट एव O.; A. om. एव, B. अपि.

## विक्रिय इन् कुत्सायाम् ॥ ८७ ॥

कर्मण्युपपदे विपूर्वादतीते वर्तमानात् क्रीणातेः कुत्सायां गम्यमानायामिन् भवति । सोमं विक्रीतवान् । सोमविक्रयी ॥ तैलविक्रयी ॥ अलन्तादिना सिद्धं कुत्सायामण्बाधनार्थं वचनम् ॥

## दृशेः क्वनिप् ॥ ८८ ॥

कर्मण्युपपदेऽतीते वर्तमानाद् दृशेः क्वनिब् भवति । मेरुं दृष्टवान् । मेरुदृश्वा ॥ अतीतेक्किबादीनां बाधकमिदम् ॥

## सहराज्ञोर्युधः ॥ ८९ ॥

सहराज्ञोः कर्मणोरुपपदयोरतीते वर्तमानाद् युध्यतेः क्वनिब् भवति । सह युध्यते स्म । सहयुध्वा ॥ राजानं युध्यते स्म । राजयुध्वा ॥ अन्तर्भूतेऽनर्थः सकर्मकः । राजानं योधितवानित्यर्थः ॥

## कृञश्च ॥ ९० ॥

सहराज्ञोः कर्मणोरुपपदयोरतीते वर्तमानात् कृञः क्वनिब् भवति । सह करोति स्म । सहकृत्वा ॥ राजकृत्वा ॥

## सप्तमीपञ्चम्यन्ते(१) जनेर्डः ॥ ९१ ॥

सप्तम्यन्ते पञ्चम्यन्ते चोपपदेऽतीते वर्तमानाज्जनेर्डो भवति । जले जातम् । जलजम् । सरसिजम् । बुद्धिजम् । बुद्धिजः ।

---

१ पञ्चमीसप्तम्यन्ते Chaitr.

संस्कारजः । क्रोधजम् । ब्राह्मणजो धर्मः । क्षत्रियजं युद्धम् ॥ कथम् अश्वाज्जातः । हस्तिनो जात इति प्रायः पञ्चम्यामजातावेव दृश्यते ॥

## अन्यत्रापि च ॥ ९२ ॥

अन्यस्मिन्नुपपदेऽतीते वर्तमानाज्जनेर्डो भवति । न जातोऽजः । द्विर्जातो द्विजः । प्रजा(१) । अभिजः । परिजः । पुमांसमनुजाता कन्या पुमनुजा । स्त्रियमनुजातः स्त्र्यनुजः ॥

## निष्ठा ॥ ९३ ॥

अतीते वर्तमानाद्धातोर्निष्ठाप्रत्ययो भवति । कृतः । कृतवान् । ग्रथितः । ग्रथितवान् ॥

## ङ्वनिप् सुयजोः ॥ ९४ ॥

अतीते वर्तमानयोः सुयजोर्ङ्वनिब्(२) भवति । सुतवान् । सुत्वा ॥ इष्टवान् । यज्वा ॥ ङकारोऽगुणार्थः ॥

## जीर्यतेरन्तृन्(३) ॥ ९५ ॥

अतीते वर्तमानाज्जीर्यतेरन्तृन्(३) भवति । जरन् । जरती ॥ ऋकारो नकारस्योच्चारणार्थः ॥

॥ इति दौर्गसिंह्यां वृत्तौ कृत्सु तृतीयः पादः समाप्तः ॥

---

१ प्रकर्षेण जाता प्रजा O.
२ सुनोतेर्यजतेश्च ङ्वनिब् O.
३ ०अतृण् A. Chaitr.

क्वसुकानौ परोक्षावच्च[१] ॥ १ ॥

अतीते वर्तमानाद्धातोः क्वसुकानौ भवतः। तौ च परोक्षेव व्यपदिश्येते। पेचिवान्। पाचयांचकृवान्। ओषांबभूवान् ॥ शिश्रीवान्। दिदीर्वान्। जजागर्वान। बभञ्वान्। ररञ्वान्। यणि दृष्टत्वादेवेर् जागर्तेर्गुणोऽनुषङ्गलोपश्च ॥ व्यतिपेचानः[२]। चक्राणः ॥ अतीताधिकारः किम्। श्रुसदवसामतीतमात्रे क्वसुरभिधातव्यः। उपशुश्राव। उपाश्रौषीत्। उपाशृणोत्। उपशुश्रुवान् ॥ उपससाद। उपासदत्। उपासीदत्। उपसेदिवान् ॥ अनूवास। अन्ववात्सीत्। अन्ववसत्। अनूषिवान् ॥ तथा। इणो नञ्पूर्वाच्चाश्नातेः। ईयिवान्। समीयिवान्। उपेयिवान्। अनाश्वान् ॥ तथा। अनुपूर्वाद् वचेः कानः कर्तर्येव। अनूचानः ॥ अतीताभिधायिनोऽपि पूर्ववत् प्रयोक्तव्याः[३] ॥ शृणोत्यादय एवामी भाषायां रूढाः ॥

वर्तमाने शन्तृङानशावप्रथमैकाधिकरणामन्त्रितयोः ॥ २ ॥

वर्तमानक्रियायां वर्तमानाद्धातोः शन्तृङानशौ भवतः। अप्रथमैकाधिकरण आमन्त्रितविषये च ॥ प्रथमान्तेन चेच्छन्तृङानशोः सामानाधिकरण्यं न भवतीत्यर्थः। पचन्तं पचमानं छात्रं

---

१ Chaitr. om. च.

२ व्यतिपेठान इति पुस्तकान्तरे पाठोऽशुद्ध एव पठेः शब्दार्थत्वेन व्यावृत्तिविषयत्वात्। Tril.

३ मोक्तव्याः A.

पश्य । पचता पचमानेन च्छात्रेण कृतमित्यादि ॥ आमन्त्रितविषये च । हे पचन् । हे पचमान ॥ अप्रथमैकाधिकरणामन्त्रितयोरिति किम् । पचति च्छात्रः ॥ नञा निर्दिष्टस्यानित्यत्वात् । जुहोति । जुह्वत् ॥ तथा मायोगे त्वाक्रोशे । मा पचन् । मा[1] पचमानः[1] ॥ आनस्य क्रियापेक्षायाम् । पचन्नास्ते । पचमानस्तिष्ठति ॥ सत्तायां वा । सन् गुणः । अस्ति गुणः । विद्यमानो ब्राह्मणः । विद्यते ब्राह्मणः ॥

## लक्षणहेत्वोः क्रियायाः[2] ॥ ३ ॥

आ भूताद् [का० ४. ४. ६७] वर्तमानाधिकारः । क्रियाया लक्षणे हेतौ चार्थे वर्तमानाद्धातोः शन्तृङानशौ भवतः । तिष्ठन्तोऽनुशासति गणकाः । शयाना भुञ्जते यवनाः ॥ हेतौ च । अर्जयन् वसति । अधीयानो वसति ॥ लक्षणं चिह्नम् । जनको हेतुः ॥ लक्षणहेत्वोरिति किम् । पचति च पठति च ॥ क्रियाया इति किम् । यः कम्पते सोऽश्वत्थः । यदुत्प्लवते तल्लघु ॥

## वेत्तेः शन्तुर्वन्सुः ॥ ४ ॥

वेत्तेः परस्य शन्तुर्वन्सुर्भवति वा । विद्वान् । विद्वांसौ ॥ विदन् । विदन्तौ । तिब्निर्देशः[3] सुखार्थः । वेत्तेरेवानन्तरः[4] शन्तृङिति ॥

---

१ चलत्पताकं गृहं B. [Tril.]
२ क्रियायां A. Chaitr.
३ तिप् A.; तिपा निर्देशः O.
४ वेत्तेरेवान्तरः A.O. against Tril

आनो ऽन्यात्मने ॥ ५ ॥

अत्र। एतेषु[१] क्वन्सुप्रभृतिषु मध्ये। आन आत्मनेपदसंज्ञो भवति। इतरः[१] परस्मैपदमर्थात् ॥ अधीयमानम्। स्तीयमानम्। रोचमानः। चक्राणः। व्यतिबभूवानः ॥ आत्मनेपदत्वाद् भावकर्मणोः कर्तरि रुचादिभ्यश्च भवति[१] ॥

ई तस्यासः ॥ ६ ॥

आसः परो य आनस्तस्यादेरीर्भवति[२]। आसीनः ॥ तस्येति रूपमात्रानुकर्षणार्थम्। तेन शानङोऽपि। कतीहोदासीनाः[३] सन्ति ॥

आन्मोऽन्त आने ॥ ७ ॥

अकारात् परो य आनस्तस्मिन् परेऽकारान्तस्य मकारोऽन्तो भवति। पचमानः। यजमानः। क्रियमाणः। करिष्यमाणः ॥

पूङ्यजोः शानङ् ॥ ८ ॥

पूङो यजश्च शानङ् भवति ॥ पवते। पवमानः ॥ यजते। यजमानः ॥ आभ्यां कर्तर्येवानः स्त्रियर्थं वचनमित्येके। भावकर्मणोरानशा भाव्यमिति। प्रथमैकाधिकरणप्रपञ्चार्थमित्यन्ये[४]। बहिष्पवमानं मध्यन्दिनमित्यनवयवार्थ एवायं संज्ञाशब्दः ॥

---

१ एषु °इतरश्च° रुचादिभ्य इति ॥ A.
२ आसः परस्य तस्यानस्या° B.
३ कतीह दासीनाः A.
४ प्रथमैकाधिकरणे प्र° C.

शक्तिवयस्ताच्छील्ये ॥ ९ ॥

शक्त्यादिषु गम्यमानेषु धातोः शानङ् भवति । कतीह निघ्नानाः । कतीह कवचमुद्वहमानाः । कतीह नृत्यमानाः ॥ अभिधानाद् वासरूपः[1] शन्तृङ् न स्यात् ॥

इङ्धारिभ्यां शन्तृङ्कृच्छ्रे ॥ १० ॥

इङो धारेश्च शन्तृङ् भवति । अकृच्छ्रे गम्यमाने । अधीयन् पारायणम् । धारयन्नुपनिषदम् ॥ इङ आनशि प्राप्ते धारेरुभयप्राप्तौ वावचनम्[2] । वासरूपोऽपि नेष्टव्य एव ॥ अकृच्छ्र इति किम् । कृच्छ्रेणाधीते[3] ॥

द्विषः शत्रौ ॥ ११ ॥

द्विषः शत्रौ कर्तरि[4] शन्तृङ् भवति । द्विषन् । द्विषन्तौ ॥ शत्राविति किम् । द्वेष्टि पतिं भार्या ॥

सुञो यज्ञसंयोगे ॥ १२ ॥

यज्ञफलेन संयोगविषये वर्तमानात् सुञः शन्तृङ् भवति । सुन्वन्तो यजमानाः ॥ संयोगग्रहणं फलवत्कर्तृप्रतिपत्त्यर्थम् ॥ यज्ञसंयोग इति किम् । सुनोति सुराम् ॥

---

१ अनभिधानाद्° A.; अभिधानद्वा° O.

२ च वचनं A.

३ कृच्छ्रेणाधीयते । कृच्छ्रेण धारयति ॥ O.

४ शत्रावभिधेये O.

अर्हः प्रशंसायाम् ॥ १३ ॥

प्रशंसायां गम्यमानायामर्हतेः शन्तृङ् भवति । अर्हन् भवान् विद्याम् ॥ प्रशंसायामिति किम् । अर्हति चौरो वधम् ॥

तच्छीलतद्धर्मतत्साधुकारिष्वा क्वेः ॥ १४ ॥

आ क्वेः [का° ४. ४. ५७] क्विपमभिव्याप्य तच्छीलादिषु कर्तृष्वितः प्रत्यया वेदितव्याः ॥

तृन्(१) ॥ १५ ॥

तच्छीले तद्धर्मे तत्साधुकारिणि च कर्तरि धातोस्तृन्(१) भवति । तृजाद्यपवादः(२) । वदिता जनापवादान् । मुण्डयितारः आविष्ठायना वधूमूढाम् । साधु गच्छति गन्ता खेलम् । साधुः कुशलार्थ एवात्र(३) ॥

भ्राज्यलंकृञ्भूसहिरुचिवृतिवृधिचरिप्रजनापत्रपेनामिष्णुच्(४) ॥ १६ ॥

एभ्य इष्णुच् भवति तच्छीलादिषु कर्तृषु । तृनोऽपवादः ॥ भ्राजिष्णुः ॥ अलंकरिष्णुः(५) । अलं भूषणपर्याप्तिवारणेषु । मण्डने तुमपि बाधते ॥ भविष्णुः । सहिष्णुः । रोचिष्णुः । वर्तिष्णुः ।

---

१ तृण् A. Chaitr.
२ तृजापवादः A.
३ एव A.
४ Chaitr. om. वृति.
५ A. adds कन्यां.

वर्धिष्णुः । चरिष्णुः । प्रजनिष्णुः । अपत्रपिष्णुः ॥ इनन्तानां छन्दसीत्येके । धारयिष्णुः ॥ निराकरिष्णुरिति वक्तव्यम् ॥

मदिपतिपचामुदि ॥ १७ ॥

उद्युपपद एभ्य इष्णुज् भवति तच्छीलादिषु कर्तृषु । उन्मदिष्णुः । उत्पतिष्णुः । उत्पचिष्णुः ॥ यथासंख्यं नास्ति ॥

जिभुवोः स्नुक् ॥ १८ ॥

आभ्यां स्नुग् भवति तच्छीलादिषु कर्तृषु । जिष्णुः । भूष्णुः ॥

ग्लाम्नास्थाक्षिपचिपरिमृजां(१) स्नुः ॥ १९ ॥

एभ्यः स्नुर्भवति तच्छीलादिषु कर्तृषु । ग्लास्नुः । म्लास्नुः । स्थास्नुः । क्षेष्णुः । पक्ष्णुः । परिमार्ष्णुः(२) ॥

त्रसिगृधिधृषिक्षिपां क्नुः ॥ २० ॥

एभ्यः क्नुर्भवति तच्छीलादिषु कर्तृषु । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ॥

शमामष्टानां घिनिण्(३) ॥ २१ ॥

शमादीनामष्टानां घिनिण् भवति तच्छीलादिषु कर्तृषु ।

---

१ Chaitr. om. परि.
२ मार्ष्णुः Chaitr.
३ Thus Ch.; MSS. Tril.; घिणिन् A. B. O. throughout.

शाम्यतीति शमी । एवं दमी । तमी । श्रमी । भ्रमी । क्षमी । क्लमी । उन्मादी ॥ अष्टानामिति किम् । असिता ॥

युजभजभुजद्विषद्रुहदुहदुषाङ्क्रीडत्यजानुरुधाङ्यमाङ्-यसरञ्जाभ्याङ्हनां च ॥ २२ ॥

एभ्यो घिनिण् भवति तच्छीलादिषु कर्तृषु ॥ युजिर् युज । योगी ॥ भज । भागी ॥ भुज भुजो[१] । भोगी ॥ द्विष । द्वेषी ॥ द्रुह । द्रोही ॥ दुह । दोही ॥ दुष । दोषी ॥ आङ् क्रीड । आ-क्रीडी ॥ त्यज । त्यागी ॥ अनुरुध । अनुरोधी ॥ आङ् यम । आयामी ॥ आङ् यस । आयासी ॥ रञ्ज । रागी ॥ अभ्याङ् हन । अभ्याघाती ॥

समि सृजिपृचिज्वरित्वराम्॥ २३ ॥

सम्युपपद एभ्यो घिनिण् भवति तच्छीलादिषु । संसर्गी । संपर्की । संज्वरी । संत्वरी ॥ मानुबन्धत्वाद्[२] ह्रस्वः ॥

वौ विचकत्थस्रम्भुकषलषाम्[३] ॥ २४ ॥

वावुपपद एभ्यो घिनिण् भवति तच्छीलादिषु । विवेकी । वि-कत्थी । विस्रम्भी । विकाषी । विलाषी[४] ॥

---

१ Om. A.

२ मानुबन्धानां A.

३ सम्भु O.; °कषलसां Chaitr.

४ विसम्भी° O.; विकाशी । विला-सी Chaitr.

प्रे द्रुमथवदवसलपाम्(१) ॥ २५ ॥

प्र उपपद एभ्यो घिनिण् भवति तच्छीलादिषु। प्रद्रावी। प्रमाथी। प्रवादी ॥ वस निवास एव। प्रवासी ॥ प्रलापी ॥

परौ सृदहोः ॥ २६ ॥

परावुपपदे सृदहोर्घिनिण् भवति तच्छीलादिषु। परिसारी। परिदाही ॥ अस्तिविवक्षायामिना सिद्धम्। घिनिण् किमर्थः। यथा प्रयामोऽस्यास्तीति प्रयामी। प्रयासी। विसारी। विदाही। विवादी। अनुवादी। संवादी। विवाही। संचारी। व्यभिचारी। विघाती। विद्रावी। रोगीत्यादयः ॥ तच्छीलादिविवक्षायां तृन् मा भूदिति वचनम् ॥

क्षिपरटवदवादिदेविभ्यो वुण् च ॥ २७ ॥

परावुपपद एभ्यो वुण् भवति घिनिण् च तच्छीलादिषु ॥ परिक्षेपकः। परिक्षेपी ॥ परिराटकः। परिराटी ॥ परिवादकः। परिवादी। परिवादयतीत्यर्थेऽप्येवम् ॥ परिदेवत इति परिदेवकः। परिदेवी ॥ वादिदेविभ्यां घिनिणेवेत्येके ॥ वुण्ग्रहणं ताच्छीलिकेषु(२) वासरूपविधिर्नास्तीति ज्ञापनार्थम् ॥

निन्दहिंसक्लिशखादानेकस्वरविनाशिव्याभाषासूयां वुञ् ॥ २८ ॥

एभ्यो वुञ् भवति तच्छीलादिषु। निन्दकः। हिंसकः।

---

१ °वसवपलपां Chaitr. [प्रवापी]. २ ताच्छील्ये B.

क्लेशकः। खादकः। गणकः॥ दरिद्रायकः। अनेकस्वरान्नेच्छ-न्त्येके॥ विनाशयतीति विनाशकः। व्याभाषकः॥ असूयकः। कण्ड्वादिभ्योऽसूयादेर्वानेकस्वरादिति(१)॥ पुनर्वुञ्ग्रहणं(२) प्र-क्तोऽपि घिनिण् न स्यादिति॥

देविक्रुशोश्चोपसर्गे॥ २९॥

उपसर्ग उपपदे देवयतेः क्रुशश्च वुञ् भवति तच्छीलादिषु॥ आदेवकः। परिदेवकः। क्रीडायामेवाभिधानम्॥ आक्रोशकः॥ उपसर्ग इति किम्। देवयिता। क्रोष्टा॥

क्रुधिमण्डिचलिशब्दार्थेभ्यो युः॥ ३०॥

एभ्यो युर्भवति तच्छीलादिषु। अर्थशब्दः प्रत्येकमभिसंब-ध्यते॥ क्रुध्यर्थात्। क्रोधनः। कोपनः॥ मण्ड्यर्थात्। मण्डनः। भूषणः॥ चल्यर्थात्। चलनः। कम्पनः॥ शब्दार्थात्। शब्द इति लिङ्गमिनन्तं चौरादिकमित्येके। शब्दनः। रवणः॥ कथं पठिता विद्याम्। अभिधानाच्चलिशब्दार्थाभ्यामकर्मकाभ्यामिति॥

रुचादेश्च व्यञ्जनादेः॥ ३१॥

रुचादेर्गणाद् व्यञ्जनादेर्युर्भवति तच्छीलादिषु। येभ्य आ-त्मनेभाषः श्रूयते ते रुचप्रकारा गणे ङानुबन्धवर्जिता(३) इति। रोचनः। वर्तनः। वर्धनः॥ रुचादिरिति किम्। भविता। शयि-

---

१ ऽसूयादेरेवानेकस्वरात् A.
२ पुनर्वुञ् B.; O. om. ऽपि.
३ येभ्य आत्मनेभाषा श्रूयते ते रुच-प्रकरणे ङा° A.

ता ॥ व्यञ्जनादेरिति किम् । एधिता ॥ आदिग्रहणं किम्(१) । जुगुप्सनः । तितिक्षणः । मीमांसनः । बीभत्सन इत्यत्रापि स्यात् । एभ्योऽन्ये रुचादयो व्यञ्जनान्ता इति ॥ कथं वसिता वस्त्रम् । अभिधानादिहाप्यकर्मकेभ्य एव ॥

## जुचंक्रम्यदंद्रम्यसृगृधिज्वलशुचलषपतपदाम्(२) ॥ ३२ ॥

एभ्यो युर्भवति तच्छीलादिषु । जु इति सौत्रो धातुर्गतौ(३) । जवनः ॥ चंक्रमणः । दंद्रमणः । यस्यानरि [का० ३. ६. ४८] इति यलोपः ॥ सरणः । गर्धनः । ज्वलनः । शोचनः । अभिलषणः । प्रपतनः । प्रपदनः ॥ चलनार्थानां ग्रहणं सकर्मकार्थम् । पतिपदिभ्यामुकञा बाधितत्वाद् युप्राप्त्यर्थं वचनम्(४) । ताच्छीलिकेषु वासरूपविधिर्नास्तीति समावेशोऽपि दृश्यते चेद्(५) यथा विकत्थी । विकत्थन इति । भासुरम् । भास्वरम् । भासनमिति(६) । जागरिता । जागरूक इति । वर्धिष्णुः । वर्धन इति(७) । अपलषिता । अपलाषुकः । अपलषण(८) इति । एवं सति सकर्मकार्थमित्येके ॥

## न यान्तसूददीपदीक्षाम् ॥ ३३ ॥

यकारान्तानां(९) सूददीपदीक्षां च युर्न भवति तच्छीला-

---

१ आधिग्रहणात् O.
२ लस for लष A.; ज्वलशुचाञ्च ॥ Chaitr. [cf. Notes].
३ °गतौ वर्तते A.
४ Om. B. O.
५ इति चेत् A.
६ भासनः । O.
७ वर्धनमिति A.
८ अपलाषण B.; अभिलषण O.
९ यान्तानां A.

दिषु ॥ यान्तानां क्रुध्यादित्वात् सूददीपदीक्षां च रुचादित्वाद्युः प्राप्तः प्रतिषिध्यते(१)। क्रोयिता(२)। क्ष्मायिता। वयिता। सूदिता। दीपिता। दीक्षिता ॥ अरिसूदन इति नन्द्यादित्वात्। दीपेरो युं बाधत एव। दीपिग्रहणं वासरूपविधिरपि लक्ष्यत इति ज्ञापनार्थम्। तेन तृन्नपि स्यात्। दीपिता। दीप्र इति ॥ तथा कामुकः। कमनः। कम्र इति ॥

शृकमगमहनवृषभूस्थालषपतपदामुकञ् ॥ ३४ ॥

एभ्य उकञ् भवति तच्छीलादिषु। शारुकः। कामुकः। आगामुकः। आघातुकः। वर्षुकः। प्रभावुकः। उपस्थायुकः। अपलाषुकः। प्रपातुकः। प्रपादुकः ॥

वृङ्भिक्षिलुण्टिजल्पिकुट्टां(३) षाकः ॥ ३५ ॥

एभ्यः षाको भवति तच्छीलादिषु। वराकः। वराकी। भिक्षाकः। भिक्षाकी। लुण्टाकः। लुण्टाकी। जल्पाकः। जल्पाकी। कुट्टाकः। कुट्टाकी ॥ वृञस्तु(४)। वरिता ॥ षकारो नदाद्यर्थः ॥

प्रे जुसुवोरिन् ॥ ३६ ॥

प्र उपपदे जवतेः सवतेश्च इन् भवति तच्छीलादिषु। प्रजवी। षु प्रसवे। प्रसवी ॥

---

१ रुचादित्वात्प्राप्तः। B. O.
२ Thus MSS.; the root being क्नूयी [क्नूयते] acc. to the Kaumâras; क्नूयिता Chaitr.
३ वृञभिक्षि° O.
४ वृङस्तु O.

## जीणदृक्षिविश्रिपरिभूवमाभ्यमाव्यथां च ॥ ३७ ॥

एभ्य इन् भवति तच्छीलादिषु । जि । जयी ॥ इण् । प्रत्ययी ॥ दृङ् । आदरी ॥ चि । चयी ॥ विश्रि । विश्रयी ॥ परिभू । परिभवी ॥ टुवम[1] । वमी ॥ अभ्यम । अभ्यमी ॥ न व्यथत इति । अव्यथी ॥ तच्छीलादिविवक्षायां तृन् मा भूदिति[2] वचनम् ॥

## दयिपतिगृहिस्पृहिश्रद्धातन्द्रानिद्राभ्य आलुः ॥ ३८ ॥

एभ्य आलुर्भवति तच्छीलादिषु । दय । दयालुः ॥ पतिगृहिस्पृहयश्चुरादाविनन्ताः । पतयालुः । गृहयालुः । स्पृहयालुः ॥ श्रत्पूर्वो धाञ् । श्रद्धालुः ॥ तन्द्रा इति सौत्रो धातुः । तन्द्रालुः ॥ निपूर्वो द्रा । निद्रालुः ॥ शयालुरिति वक्तव्यम् ॥ कथं हृदयालुः । हृदयमस्यास्तीति विवक्षायामालुस्तद्धितो रूढितः ॥

## शदिसदिधेड्दासिभ्यो रुः ॥ ३९ ॥

एभ्यो रुर्भवति तच्छीलादिषु । शद्रुः । सद्रुः । धारुः ॥ ददाति दयते यच्छति द्यति वा । दारुः ॥ षिञ् बन्धने । सेरुः ॥

## सृदिघसां मरक् ॥ ४० ॥

एभ्यो मरग् भवति तच्छीलादिषु । सिसर्ति सरति वा । सृमरः । अद्मरः ॥[3] युक्करपावपिवचनात् । सरणः । सृत्वरः ॥ घस्मरः । घस्लृ प्रकृत्यन्तरम् ॥

---

१ वम B.

२ तृण्° O.; तृण स्यादिति B.

३ पक्षे यु° O.

मिदिभासिभन्जां घुरः ॥ ४१ ॥

एभ्यो घुरो भवति तच्छीलादिषु । मेद्यतीति मेदुरः । भासत इति भासुरः ॥ भज्यते स्वयमेवेति कर्मकर्तर्य्येवाभिधानात् । भङ्गुरं काष्ठम् । यस्तु परं भनक्ति ततस्तृन्नेव । भङ्क्ता ॥

छिदिभिदिविदां कुरः ॥ ४२ ॥

एभ्यः कुरो भवति तच्छीलादिषु । छिदुरम् । भिदुरम् । वेत्तीति विदुरः ॥ छिदिभिद्योः कर्मकर्तर्य्येवाभिधानात् ॥ केचिदकर्मकर्तर्यपि । दोषान्धकारभिदुरो दृप्तारिपक्षच्छिदुर इति ॥

जागुरूकः(१) ॥ ४३ ॥

जागर्तेरूको भवति तच्छीलादिषु । जागरूकः ॥

चेक्रीयितान्तानां यजिजपिदंशिवदाम् ॥ ४४ ॥

चेक्रीयितान्तानामेषामूको भवति तच्छीलादिषु । यायजूकः(२) । जंजपूकः । दंदशूकः । वावदूकः ॥ साम्प्रतं चाचलिवावदिपापतयोऽपि चेक्रीयितान्ताः किप्रत्यये सति निपात्यन्ते(३)॥

तस्य लुगचि ॥ ४५ ॥

तस्य चेक्रीयितस्य(४) लुग् भवति तच्छीलादिषु । अचि परे ।

---

१ जागरूकः Chaitr. [P. III. 2, 165].
२ याचयूकः A.
३ निपातयितव्या इति B.
४ चेक्रीयितान्तस्य A.

लोलुवः । पोपुवः ॥ व्यञ्जनान्तात् सिद्ध एव[१] ॥ केचिद्योगं विभजन्ति । तेन बोभवीति । रारटीति सिद्धम्[२] ॥

**ततो यातेर्वरः ॥ ४६ ॥**

ततश्चेक्रीयितान्ताद् यातेर्वरो भवति तच्छीलादिषु । यायावरः ॥ वरे विषयभूतेऽस्य च लोपे यस्य[३] व्यञ्जने लोपः स्यात् ॥

**कसिपिसिभासीशस्थाप्रमदां च[४] ॥ ४७ ॥**

एषां वरो भवति तच्छीलादिषु । कस्वरः । पेस्वरः[५] । भास्वरः । ईश्वरः । स्थावरः । प्रमद्वरः ॥

**सृजीण्नशां क्वरप् ॥ ४८ ॥**

एषां क्वरब् भवति तच्छीलादिषु । सृत्वरः । जित्वरः । इत्वरः । नश्वरः ॥ क्वरब् नदादौ । सृत्वरी ॥

**गमस्त च ॥ ४९ ॥**

गमः क्वरब् भवति तच्छीलादिषु तकारश्चान्तादेशः । गत्वरः । गत्वरी ॥

**दीपिकम्प्यजसिहिंसिकमिस्मिनमां रः ॥ ५० ॥**

एषां रो भवति तच्छीलादिषु । दीप्रः । कम्प्रः । नञ्पूर्वो

---

१ Viz. III. 6, 48.

२ A. om. सिद्धं.

३ अस्य B.; A. om. च; ०लोपे यलोपः स्यात् O.

४ कसिपिषि B. O.; कषिपिषि Chaitr.; ०प्रवदाञ्च A. (but प्रमद्वरः).

५ पेष्वरः B. O. Ch. [कष्वरः Ch.]

जसु मोक्षणे। अजस्रः। हिंस्रः। कस्रः[1]। स्मेरः। नम्रः॥ युरपि दृश्यते। कम्पनः। कमनः॥

## सनन्ताशंसिभिक्षामुः॥ ५१॥

सनन्तस्याशंसेर्भिक्षेश्च उर्भवति तच्छीलादिषु। चिकीर्षुः। आङः शासि इच्छायामिति न्याय्यः पाठः[2]। आशंसुः। भिक्षुः॥ अन्तग्रहणं सनु दान इति शङ्कानिरासार्थम्॥

## विन्दिच्छू च॥ ५२॥

विन्दुरिच्छुरिति निपात्येते तच्छीलादिषु। अभिधानाद् विद ज्ञाने। विन्दुः॥ इषु इच्छायाम्। इच्छुः॥ कथं विदि अवयवे। विन्दुः स्तोकपर्यायः। संज्ञाशब्द औणादिक इति॥

## आदृवर्णोपधालोपिनां किर्द्वे च॥ ५३॥

आदन्तस्य। ऋवर्णान्तस्य। उपधालोपिनश्च किर्भवति तच्छीलादिषु। तत्संनियोगे च द्वे उक्ती भवतः। डुधाञ्। दधिः॥ ऋवर्णान्तस्य। चक्रिः। सस्निः[3]॥ उपधालोपिनश्च। जनी जन। जज्ञिः॥ एते भाषायां रूढाः। अन्ये प्रयोगादनुसर्तव्याः[4]॥

## तृषिधृषिस्वपां नजिङ्॥ ५४॥

एषां नजिङ् भवति तच्छीलादिषु। तृष्णक्। धृष्णक्। स्वप्नक्॥ धृषेर्नेच्छन्त्येके[5]॥

---

१ कम्प्रः A.; om. दृश्यते.
२ Om. O.
३ शश्रिः A.; सश्रिः B.
४ अन्येभ्यः प्रयोगा अनु° B.; प्रयोगतोऽनु° A. and orig. अन्येभ्यः
५ °नेच्छन्त्यन्ये A.

शॄवन्द्योरारुः[१] ॥ ५५ ॥

शृणातेर्वन्दतेश्चारुर्भवति तच्छीलादिषु। शरारुः। वन्दारुः॥

भियो रुग्लुकौ च ॥ ५६ ॥

बिभेते रुग्लुकौ च भवतस्तच्छीलादिषु। भीरुः। भीलुः। भीरुकः। भीलुकः॥ कौ वहुलार्थ एव॥

क्विब् भ्राजिपॄधुर्वीभासाम्[२] ॥ ५७ ॥

एषां क्विब् भवति तच्छीलादिषु। विभ्राट्। विभ्राजौ॥ पूः। पुरौ॥ धूः। धुरौ॥ भाः। भासौ॥ ताच्छीलिकबाधनार्थं पुनः क्विब्वचनम्[३]॥

द्युतिगमोर्द्वे च ॥ ५८ ॥

द्युतेर्गमेश्च क्विब् भवति तच्छीलादिषु। द्वे चोक्ती भवतः। दिद्युत्। जगत्॥

भुवो डुर्विशंप्रेषु[४] ॥ ५९ ॥

विशंप्रेषूपपदेषु[४] भुवो डुर्भवति[५]। विभुः। शंभुः[४]। प्रभुः॥ डकारोऽन्त्यस्वरादिलोपार्थः॥

---

१ शॄवन्द्योरारुः A. Ch.
२ पॄधूर्वी॰ A.; ॰धुर्वि B. O.; भ्राजपॄधूर्विभाषां Ch.
३ B. om. पुनः; ताच्छीलिके तृन्वाधनार्थं पुनः क्विब्ग्रहणं A.
४ सं for शं Chaitr. [Pâṇ. III. 2, 180]
५ भवतेर्डुर्भवति B.

कर्मणि धेटः ष्ट्रन्(१) ॥ ६० ॥

कर्मणि कारके धेटो धातोः ष्ट्रन् भवति । षकारो नद्याद्यर्थः । धयति तामिति धात्री । स्तनदायिनी । आमलकी चोच्यते ॥ केचिद् दधातेरपीच्छन्ति(२) । दधाति तां भैषज्यार्थमिति धात्री । संज्ञाशब्दत्वाद्(३) विशेषाभावः ॥

नीदाप्शसुयुयुजस्तुतुदसिसिचमिहपतदंशनहां(४) करणे ॥ ६१ ॥

एषां करणे कारके ष्ट्रन् भवति । णीञ् । नेत्रम् ॥ दाप् लवने । दात्रम् ॥ शसु हिंसायाम् । शस्त्रम् ॥ यु । योत्रम् ॥ युजिर् । योक्त्रम् ॥ ष्टुञ् । स्तोत्रम् ॥ तुद । तोत्त्रम् ॥ षिञ् । सेत्रम् ॥ षिच । सेक्त्रम् ॥ मिह । मेढ्रम् ॥ पतॢ । पत्त्रम् ॥ दन्श । दंष्ट्रा । सदैव स्त्रियामादा ॥ नह । नद्ध्री ॥

हलसूकरयोः पुवः ॥ ६२ ॥

पूञः पूङो वा करणे ष्ट्रन् भवति । तच्चेत्(५) करणं हलसूकरयोरवयवः स्यात् । हलस्य पोत्रम् । सूकरस्य पोत्रम् । मुखमित्यर्थः ॥ सर्वधातुभ्यः ष्ट्रन्नित्यस्य प्रपञ्चार्थम् ॥

अर्तिलूधूसूखनिसहिचरिभ्य इत्रन्(६) ॥ ६३ ॥

एभ्यः करण इत्रन् भवति । अरित्रम् । लवित्रम् ॥ धू वि-

---

१ ष्ट्रण् A. Chaitr.
२ O. om. अपि.
३ संज्ञाशब्दाद् B.
४ Chaitr. adds पद after पत.
५ तच्च A.
६ इत्रण् Ch. throughout.

धूनने । धवित्रम् ॥ षू प्रेरणे । सवित्रम् ॥ खनित्रम् । सहित्रम् ॥ चर गत्यर्थः । चरित्रम् ॥

## पुवः संज्ञायाम् ॥ ६४ ॥

पूञः पूङो वा करण इत्रन् भवति संज्ञायां गम्यमानायाम् । पवित्रं यज्ञोपवीतम् । पवित्रा नाम नदी ॥

## ऋषिदेवतयोः कर्तरि ॥ ६५ ॥

पुव ऋषौ देवतायां च कर्तरीत्रन् भवति । पुनातीति पवित्रोऽयमृषिः । पवित्रोऽयमग्निः ॥ केचित् करणमनुवर्त्य(१) यथासंख्यसंबन्धमिच्छन्ति विवक्षायां को विशेष इति ॥

## ञ्यनुबन्धमतिबुद्धिपूजार्थेभ्यः क्तः ॥ ६६ ॥

मतिरिच्छा । बुद्धिर्ज्ञानम् । पूजा सत्कारः ॥ ञ्यनुबन्धेभ्यो मतिबुद्धिपूजार्थेभ्यश्च वर्तमाने क्तो भवति । भावे कर्मणि कर्तरि च यथासंभवम् । ञिमिदा । मिन्नः ॥ ञिक्ष्विदा । क्ष्विण्णः(२) ॥ मत्यर्थात् । राज्ञां मतः । राज्ञामिष्टः ॥ बुद्ध्यर्थात् । राज्ञां बुद्धः । राज्ञां ज्ञातः ॥ पूजार्थात् । राज्ञां पूजितः । राज्ञामर्चितः ॥ अन्यत्रापीति वचनात्(३)

शीलितो रक्षितः क्षान्त(४) आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥

---

१ ०अनुवृत्य A. B.
२ ञिच्विदा । च्विण्णः । MSS.
३ अन्यत्रापि बहुलार्थत्वात् A.
४ Thus A. O. Ch.; क्लान्त B.

हृष्टतुष्टौ तथा कान्तस्तथोभौ(१) संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत् स्मृताः ॥

तथा शुप्तः । शयितः । आशितः(२) । लिप्तः । स्निग्धः । दृप्त इत्यादयः । वर्तमाने भूतो भावी च क्रियाचणो(३)ऽस्त्येव । विवक्षा गरीयसीति वचनम् ॥

## उणादयो भूतेऽपि ॥ ६७ ॥

उणादयः प्रत्यया वर्तमाने भूतेऽपि भवन्ति(४) ॥ केचिद् वर्तमाने । करोतीति कारुः । वातीति वायुः ॥ केचिद् भूतेऽपि । वृत्तं तदिति वर्त्म । भसितं तदिति भस्म ॥ प्रकृतिप्रत्ययावगमो व्युत्पत्तावपि रूढित एव ॥

## भविष्यति गम्यादयः ॥ ६८ ॥

गमीत्येवमादयः शब्दा औणादिका(५) भविष्यति काले साधवो भवन्ति । गमादिभ्यो भविष्यत्कालवृत्तिभ्य इन् स्यादित्यर्थः(६) । ग्रामं गमी । ग्राममागामी । भावी ॥ श्वस्तनीविषयेऽपि भवन्ति । श्वो ग्रामं गमी । पदार्थश्वस्तने । श्वो ग्रामं गन्तेति प्राप्तम् ॥

## वुण्तुमौ क्रियायां क्रियार्थायाम् ॥ ६९ ॥

क्रियायां क्रियार्थायामुपपदे भविष्यत्यर्थे वर्तमानाद्धातो-

१ Thus A. B. O.; क्रान्त° Ch. [P. III. 2, 188, Schol.]
२ असितः B.
३ क्रियालचणो A.
४ साधवो भवन्ति B.
५ A. adds इति; B. om. शब्दा.
६ स्यादेव । A.

र्वुण्तुमौ भवतः। पाचको व्रजति। पक्तुं व्रजति। पक्ष्यामीति कृत्वा व्रजतीत्यर्थः॥ क्रियायामिति किम्। भिक्षिष्य इत्यस्य जटा॥ क्रियार्थायामिति किम्। धावतस्ते पतिष्यति[१] दण्डः॥ वुण्ग्रहणं तृजादिनिवृत्त्यर्थम्। तुम्भावमेवाभिधत्ते॥

भाववाचिनश्च ॥ ७० ॥

क्रियायां क्रियार्थायामुपपदे भविष्यत्यर्थे वर्तमानाद्धातोर्भाववाचिनश्च प्रत्यया भवन्ति[२]। पाकाय व्रजति। पक्तये व्रजति। पचनाय व्रजति॥ तुमि नित्यप्राप्ते वचनं वासरूपविधिरत्र प्रकरणे नास्तीति॥

कर्मणि चाण् ॥ ७१ ॥

क्रियायां क्रियार्थायां कर्मणि चोपपदे भविष्यत्यर्थे वर्तमानाद्धातोरण्[३] भवति। काण्डलावो व्रजति। गोदायो[४] व्रजति। गोसंख्यायो व्रजति। सामगायो व्रजति। सुरापायो व्रजति॥

शन्त्रानौ[५] स्यसंहितौ शेषे च ॥ ७२ ॥

शन्तृङ्सहचरित आन इह गृह्यते॥ क्रियायां क्रियार्थायां कर्मणि चोपपदे शेषे च भविष्यत्यर्थे वर्तमानाद्धातोः शन्तृङा-

---

१ पतितस्य A.
२ यथाभिधानं भवन्ति O.
३ ०आण् A.
४ गोसंदायो A.
५ शन्त्राणौ A. O. Ch.

नशौ स्वेन संहितौ भवतः । करिष्यन् व्रजति । करिष्यमाणो व्रजति ॥ कटं करिष्यन् व्रजति । कटं करिष्यमाणो व्रजति(१) ॥ शेषे च । करिष्यन् । करिष्यमाणः । हे करिष्यन् । हे करिष्यमाण ॥

॥ इति दौर्गसिंह्यां वृत्तौ कृत्सु चतुर्थः पादः समाप्तः ॥

---

पदरुजविशस्पृशोचां घञ् ॥ १ ॥

एषां घञ् भवति(२) । घानुबन्धस्त्रजोः कगौ [का॰ ४. ६. ५६] इति कलगत्वार्थः । ञनुबन्ध इज्वद्भावार्थः ॥ पद्यते । पत्स्यते । अपादि । पेदे वा । पादः ॥ एवं रोगः । वेशः । स्पर्शो नाम क्षयव्याधिश्च । ओकः ॥

सृ स्थिरव्याध्योः ॥ २ ॥

सर्तेः स्थिरे व्याधौ च कर्तरि घञ् भवति । सरति कालान्तरमिति सारः । स्थिरोऽर्थः ॥ अतीसारो व्याधिः । ह्रस्वस्य दीर्घता ॥ सरन्त्यनेनेति सारो बलम् । विसरन्त्यनेनेति विसारो मत्स्यः । संज्ञाशब्दात्(३) करण एव सिद्धः ॥ यद्येवं पद्यतेऽनेनेति(४) पादो भविष्यति । सत्यम् । प्रपञ्चार्थं पदिग्रहणम् ॥

---

१ A. om. from कटं करिष्यन्.
२ O. adds कर्तरि.
३ संज्ञाशब्दत्वात् O.
४ O. omits from यद्येवं.

## भावे ॥ ३ ॥

सर्वस्माद्धातोर्भावे(१) घञ् भवति। पाकः। पाकौ। पाकाः॥ भवत्यर्थः क्रियासामान्य इह हि सिद्धताख्यः सत्वभूत इति द्विवचनबहुवचने स्तः(२)॥

## अकर्तरि च कारके संज्ञायाम् ॥ ४ ॥

कर्तृवर्जिते कारके भावे च(३) संज्ञायां गम्यमानायां घञ् भवति। प्रकुर्वन्ति तमिति प्राकारः। प्रास्यत इति प्रासः। आहरन्ति तमित्याहारः। प्रसीदन्त्यस्मिन् नयनमनांसीति प्रासादः। दीर्यन्त एभिरिति दाराः। जीर्यतेऽनेनेति जारः॥ अकर्तरीति किम्। नदतीति नदः शोणः॥ असंज्ञायामपि। दायो दत्तः। लाभो लब्धः॥ कारकग्रहणं प्रसह्य नञ्समासज्ञापनार्थम्॥

## सर्वस्मात् परिमाणे ॥ ५ ॥

परिमेयत्वात् परिमाणम्। परिमाणविषये वर्तमानात्सर्वस्माद्धातोर्घञ् भवति। कर्तृवर्जिते कारके भावे च(३) संज्ञायां गम्यमानायाम्। संख्याप्रस्थादिर्वा परिमाणम्। एकस्तण्डुलनिश्चायः। द्वौ शूर्पनिष्पावौ। प्रस्थनिस्रायः। द्रोणावचायः। अलो बाधकत्वात् सर्वस्माद्भविष्यति। सर्वस्मादिति ज्ञापयति(४)। धात्वाश्रितः प्रत्ययो घञा बाध्यते न त्वर्थाश्रित इति।

---

१ °भावेऽर्थे A.
२ भवतः O.; om. B.
३ A. om. भावे च.
४ A. om. from सर्वस्मादिति.

तेन । एका तिलोच्छ्रितिः(१) । द्वे स्तुती(२) तैलस्य । क्तिरेव ॥ एकं स्तवणम्(३) । द्वे प्रस्थाने(४) । युट् सिद्धः ॥ कथम् एको निश्चयः । अण्यधिकारात् ॥

## इङाभ्यां च ॥ ६ ॥

इङ आकारान्ताच्च धातोर्घञ् भवति । अचोऽपवादः । भावेऽकर्तरि च कारके संज्ञायामित्यविशेषेऽधिकारो(५) द्रष्टव्यः ॥ अध्ययनम् अधीयते(६) वा । अध्यायः ॥ उपेत्याधीयते यस्मात्(७) । उपाध्यायः । उपाध्याया । उपाध्यायी । इङो घञ् नद्यादौ विभाषयेति(८) ॥ आकारान्ताच्च । दायः । धायः ॥

## उपसर्गे रुवः ॥ ७ ॥

उपसर्ग उपपदे रौतेर्घञ् भवति । संरावः । उपरावः ॥ उपसर्ग इति किम् । रवः ॥ सांराविणमित्यत्र इनुण् बाधकः(९)॥

## समि द्रुवः ॥ ८ ॥

सम्युपपदे द्रुनोतेर्घञ् भवति । संद्रावः ॥ समीति किम् । द्रवः ॥

## युद्रुवोरुदि च ॥ ९ ॥

उद्युपपदे समि च युद्रुभ्यां घञ् भवति । उद्यावः । उद्द्रावः ॥

---

१ तिलैकतिला (orig. लो) श्रुतिः A.
२ श्रुती A. O.
३ श्रवणं B. O.
४ द्वे स्थाने A.
५ ऽयमधिकारो B.; A. om. इति.
६ °अधीते A.; अध्यनमधीयते B.
७ Om. A.; यस्मादिति O.
८ विभाषेति O.; B. adds द्रष्टव्यं.
९ इनुन् बाधकत्वात् B.; इणुत्वेवास्ति बाधकः O.

संयावः। संद्राव एवेति केचित्॥ उदि चेति किम्। यवः। द्रवः॥ अप्यधिकाराद् यावः। द्रावः॥ दाव इति च स्यात्॥ तथा शारो वायुः। शारः शरलः[1]। नीशारः प्रावरणम्[2]। ह्रस्वस्य दीर्घता॥

श्रिनीभूभ्योऽनुपसर्गे ॥ १० ॥

एभ्योऽनुपसर्गे घञ् भवति। श्रायः। नायः। भावः॥ अनुपसर्ग इति किम्। प्रश्रयः। प्रणयः। प्रभवः॥ कथं प्रकृष्टो भावः। प्रभावः। अनुगतो भावः। अनुभावः। विगतो भावः। विभावः॥ अप्यधिकारात्। नय इति च[3]॥

क्षुश्रुभ्यां वौ ॥ ११ ॥

वावुपपद आभ्यां घञ् भवति। विक्षावः। विश्रावः॥

स्तृश्च प्रथनेऽशब्दे ॥ १२ ॥

प्रथनं विस्तीर्णता॥ स्तृणातेर्वावुपपदे घञ् भवति प्रथनेऽभिधेये। तच्चेत् प्रथनं शब्दविषये न स्यात्। पटस्य विस्तारः॥ अशब्द इति किम्। वाक्यस्य विस्तरः॥ प्रथन इति किम्। तृणस्य विस्तरः॥

प्रे चायज्ञे ॥ १३ ॥[4]

प्रे चोपपदे स्तृणातेर्घञ् भवति यज्ञादन्यत्र। प्रस्तारः॥ यज्ञे तु। बर्हिःप्रस्तरः॥

---

१ शारलः O.
२ प्रारणं A.
३ अप्यधिकाराच्च नय इति A. B.
४ Chaitr. om. this sûtra.

छन्दोनाम्नि च ॥ १४ ॥

छन्दसां संज्ञाविषये स्तृणातेर्घञ् भवति । प्रस्तारपङ्क्तिः । विष्टारपङ्क्तिः । आस्तारपङ्क्तिः[१] ॥

प्रे द्रुस्तुस्रुवः[२] ॥ १५ ॥

प्र उपपद एभ्यो घञ् भवति । प्रद्रावः । प्रस्तावः । प्रस्रावः ॥ कथं स्रावः[३] । अप्यधिकारात् ॥

नियोऽवोदोः ॥ १६ ॥

अवोदोरुपपदयोर्नियो घञ् भवति । अवनायः । उन्नायः ॥ कथम् उद्यतो नयः[४] । उन्नयः । अप्यधिकाराद् वा ॥

निरभ्योः पूल्वोः[५] ॥ १७ ॥

निरभ्योरुपपदयोर्यथासंख्यं पूल्वोर्घञ् भवति । निष्पावः । अभिलावः ॥

यज्ञे समि स्तुवः[६] ॥ १८ ॥

सम्युपपदे स्तौतेर्घञ् भवति यज्ञविषये । समेत्य स्तुवन्ति यस्मिन् । संस्तावो देशः[७] । संस्तवोऽन्यः ॥

---

१ प्रस्तारं पंक्तिः । विष्टारं पक्ति ॥ O.; प्रस्तारः प० । विष्टारः प० । आस्तारः प० ॥ A.

२ ०स्तुवः O.

३ प्रस्तावः कथं स्तवः O.

४ B. om. from उन्नायः; O. om. कथं.

५ निस्रुवः ॥ Ch., and vârttika: अभिलुव इति वक्तव्यम् ॥

६ Chaitr. om. this sûtra.

७ यज्ञदेशः O.

उन्योर्गिरः ॥ १९ ॥

उन्योरुपपदयोर्गिरतेर्घञ् भवति । उद्गारः । निगारः ॥ उन्योरिति किम् । गरः ॥

किरो धान्ये ॥ २० ॥

उन्योरुपपदयोर्धान्यविषये वर्तमानात्(१) किरतेर्घञ् भवति । उत्कारो धान्यस्य(१) । निकारो धान्यस्य ॥ धान्य इति किम् । पुष्पोत्करः । पुष्पनिकरः ॥ किरतेरिति किम् । कृञ् हिंसायाम् । धान्यनिकरः ॥

नौ वृञः(२) ॥ २१ ॥

नावुपपदे वृञो धातोर्घञ् भवति धान्येऽभिधेये(३) । नीवारा व्रीहयः । ह्रस्वस्य दीर्घता ॥

उदि श्रिपुवोः ॥ २२ ॥

उद्युपपदे श्रिपूङ्भ्यां(४) घञ् भवति । उच्छ्रायः । उत्पावः ॥ कथम् उच्छ्रयः । अप्यधिकारात् ॥

ग्रहश्च(५) ॥ २३ ॥

उद्युपपदे ग्रहेश्च(६) घञ् भवति । उद्ग्राहः । भाषायामपीति मतम् ॥

---

१ Om. B.
२ नौ वृ च ॥ Ch. [चकारोऽनुक्तसमुच्चयार्थः । नियाहः ॥ Com.]
३ धान्ये विषये A.
४ श्रिपुभ्यां O.
५ ग्रहेश्च O.
६ ग्रहस्य A.; ग्रहेर् B.

## अवन्योराक्रोशे ॥ २४ ॥

अवन्योरुपपदयोराक्रोशे गम्यमाने ग्रहेर्घञ् भवति। अवग्राहस्ते वृषल[1]। निग्राहस्ते वृषल॥ आक्रोश इति किम्। अवग्रहः पदस्य। निग्रहश्चौरस्य॥

## प्रे लिप्सायाम्[2] ॥ २५ ॥

प्र उपपदे लिप्सायां ग्रहेर्घञ् भवति। पात्रप्रग्राहेण चरति भिक्षुः[3]॥ लिप्सायामिति किम्। प्रग्रहः॥

## समि मुष्टौ ॥ २६ ॥

सम्युपपदे ग्रहेर्घञ् भवति मुष्टावर्थे। संग्राहो मल्लस्य॥ मुष्टाविति किम्। संग्रहः[4]॥ अङ्गुलीनां वचनाविशेषो मुष्टिरिह गृह्यते। एकः शाकसंग्राहः। सर्वस्मात्परिमाणे [का° ४. ५. ५.] इति सिद्धम्[5]॥

## परौ यज्ञे[2] ॥ २७ ॥

परावुपपदे यज्ञविषये[6] ग्रहेर्घञ् भवति। उत्तरपरिग्राहः॥ यज्ञ इति किम्। परिग्रहः॥

## वावे वर्षप्रतिबन्धे ॥ २८ ॥

अव उपपदे ग्रहेर्घञ् भवति वा वर्षप्रतिबन्धेऽर्थे[7]। अवग्राहो वर्षस्य। अवग्रहो वा[8]॥

---

१ A. adds भूयात्।
२ Chaitr. om. sûtras 25 and 27.
३ °चरति पात्रप्रग्राहो भिक्षुः A.
४ ग्रहः O.; संग्रहो धान्यस्य Ch.
५ °संग्राह इति सर्वस्मात्परिमाणसिद्धं O.
६ यज्ञे विषये O.
७ °बन्धे गम्यमाने O.
८ B. om. from वर्षप्रतिबन्धेऽर्थे अवग्रहः पदस्य Ch.

**प्रे रश्मौ ॥ २९ ॥**

प्र उपपदे ग्रहेर्घञ् भवति वा रश्मावर्थे। प्रग्राहः। प्रग्रहो वा ॥ रश्मिरिह रज्जुरुच्यते ॥

**वणिजां च[१] ॥ ३० ॥**

वणिजां च संबन्धिनि तुलासूत्रेऽर्थे प्र उपपदे ग्रहेर्घञ् भवति वा। तुलाप्रग्राहेण चरति। तुलाप्रग्रहेण वा चरति वणिक्॥

**वृणोतेराच्छादने ॥ ३१ ॥**

प्र उपपदे वृणोतेराच्छादनेऽर्थे घञ् भवति वा। प्रावारः। प्रावरः। आङ्पूर्वो[२]ऽयम् ॥

**आङि रुप्लुवोः ॥ ३२ ॥**

आङ्युपपदे रौतेः प्लवतेश्च घञ् भवति वा। आरावः। आरवः। आप्लावः। आप्लवः[३] ॥

**परौ भुवोऽवज्ञाने ॥ ३३ ॥**

परावुपपदे भवतेर्घञ् भवति वा। अवज्ञानेऽर्थे। परिभावः। परिभवः ॥ अवज्ञान इति किम्। सर्वतो भवनं[४] परिभवः ॥

**चेस्तु हस्तादाने ॥ ३४ ॥**

हस्तादानविषये[५] चिनोतेर्घञ् भवति। पुष्पप्रचायः ॥

---

१ In Chaitr. vârttika to 29.

२ आङि पूर्वो A.; प्रवारः प्रवरः आच्छादन इति किं प्रवरो गोत्रं Ch.

३ A. adds आङिति किं रवः प्लवः

४ परि सर्वतो भवनं O.

५ A. adds वर्तमानात्.

हस्तादानग्रहणं प्रत्यासन्नोपलक्षणम्[१] । तेन वृक्षाग्रे फलप्रचयं करोति ॥ अप्यधिकारात् स्तेये न स्यात् । हस्तेन फलप्रचयं करोति चौरः[२] ॥

**शरीरनिवासयोः कश्चादेः ॥ ३५ ॥**

चिनोतेः शरीरनिवासे चार्थे घञ् भवति । आदेश्च को भवति । चीयतेऽसौ । कायः शरीरम्[३] । निचीयतेऽस्मिन्निति निकायो निवासः ॥ अप्यधिकाराच्चितिराश्योरपि । आचीयतेऽसौ । आकायश्चितिः । गोमयनिकायः ॥ कथं काष्ठनिचयः । बहुत्वमात्रविवक्षयेति[४] ॥

**संघे चानौत्तराधर्ये ॥ ३६ ॥**

प्राणिनां समूहः संघ उच्यते ॥ अनौत्तराधर्ये संघे चार्थे चिनोतेर्घञ् भवति । कश्चादेः । वैयाकरणनिकायः ॥ अनौत्तराधर्य इति किम् । सूकरनिचयः ॥

**परिन्योर्नीणोर्द्यूताभ्रेषयोः[५] ॥ ३७ ॥**

परिन्योरुपपदयोर्यथासंख्यं नीइणभ्यां घञ् भवति द्यूतविषयेऽभ्रेषे चार्थे । अभ्रेषो[६]ऽचलनम् । यथाप्राप्तकरणमित्यर्थः । परिणायेन शारीन्[७] हन्ति । सर्वतो नयनेनेत्यर्थः । एषोऽत्र न्यायः ॥

---

१ हस्तादान इति प्रत्यास° A.
२ O. adds तुशब्दो विभाषानिवृत्त्यर्थः apparently from Ch.
३ Om. B.
४ काष्ठे निचयः °विवक्षेति O.
५ °द्यूताभ्रशयोः A.; Chaitrak. om. sûtras 37-40.
६ ऽभ्रशे° अभ्रशो A.; अभ्रेयो O.
७ सारीन् A.

## व्युपयोः शेतेः पर्याये(१) ॥ ३८ ॥

व्युपयोरुपपदयोः पर्यायविषये वर्तमानाच्छेतेर्घञ् भवति । तव राजविशायः । तव राजोपशायः(२) । तव राजनि शयितुं पर्याय(३) इत्यर्थः ॥ अस्मादेव ज्ञापकात् परिपूर्वादिणः क्रमेऽर्थे घञ् भवति ॥

## अभिविधौ भाव इनुण्(४) ॥ ३९ ॥

अभिविधौ गम्यमाने धातोरिनुण्(५) भवति । सांकोटिनं सांराविणं वर्तते । क्रिययैवाभिव्याप्तिः(६) । इनुणन्तात्(७) स्वार्थेऽण् । युडपि दृश्यते । संकुटनं वर्तते(८) ॥

## कर्मव्यतीहारे णच् स्त्रियाम्(९) ॥ ४० ॥

क्रियाविनिमये(१०) गम्यमाने(११) धातोर्णच् भवति स्त्रियां भावे । व्यावक्रोशी । व्यावभाषी । णजन्तात् स्वार्थेऽण् ॥ क्वचिदधिकारात् तत्र क्रियाव्यतीहारेण वृद्धिरागमः ॥ कथं व्यतीचा । व्यवक्रुष्टिरिति । अस्त्यधिकाराद् वासरूपता ॥

## स्वरवृदृगमिग्रहाम् अल् ॥ ४१ ॥

स्वरान्ताद् वृदृगमिग्रहिभ्यश्चाल् भवति । घञोऽपवादः ।

---

१ Chaitr. see note 5, p. 399.
२ राजापशयः B.
३ °निशयितुपर्यायः B.; °तुं पर्याये O.
४ इणुन् O.; Ch. see note 5, p. 399.
५ °इणुन् O.
६ क्रियैकाभिव्याप्तिः A.
७ इणुनन्तात् O.
८ O. om. वर्तते; B. om. from संकुटनं; possibly from the Panjikâ.
९ कर्मव्यतिहारे° B.; Ch. see note 5, p. 399.
१० क्रियाया विनियमे A.
११ वर्तमानाद् O.

चयः । क्रयः । भवः । लवः ॥ वृङ् वृञ् वा । वरः ॥ दृङ् । दरः ॥ गमः । ग्रहः ॥ वृद्धोरेवेति नियमादन्येभ्य ऋकारान्तेभ्यो घञेव[१]। कारः । हारः ॥ दीर्घादलेव । कृ करः । गृ गरः ॥ भीतिर्भयमित्यलेव[२] ॥ न युडादयोऽपीति । वशः । रण इति रुढित्वादल्[३] ॥

## उपसर्गेऽदेः ॥ ४२ ॥

उपसर्ग उपपदेऽदेरल् भवति । प्रघसः । विघसः ॥ घञलोर्घस्लृः ॥ उपसर्ग इति किम् । घासः ॥

## नौ ण च[४] ॥ ४३ ॥

नावुपपदेऽदेरल् भवति ण च । निघसः । न्यादः ॥

## मदेः प्रसमोर्हर्षे[५] ॥ ४४ ॥

प्रसमोरुपपदयोर्मदेरल् भवति हर्षेऽर्थे । प्रमदः कन्यानाम् । संमदः कोकिलानाम् ॥

## व्यधजपोश्चानुपसर्गे ॥ ४५ ॥

अनुपसर्गे व्यधिजपिभ्यां मदेश्चाल् भवति । व्यधः । जपः । मदः ॥ अनुपसर्ग इति किम् । आव्याधः । उपजापः । प्रमादः ॥

---

१ ऋदन्तेभ्यो० A.; घङेव O.
२ भय इत्यलेव A.
३ ०अलेव A.
४ णौ न च O.; Chaitr. om. this sûtra.
५ प्रसमो हर्षे O., Ch.

**स्वनहसोर्वा(१) ॥ ४६ ॥**

अनुपसर्गे आभ्यामल् भवति वा । स्वनः । स्वानः । हसः । हासः ॥ अनुपसर्ग इति(२) किम् । प्रस्वानः । प्रहासः ॥

**यमः संन्युपविषु च ॥ ४७ ॥**

अनुपसर्गे संन्युपविषु च(३) यमेरल् भवति वा । यमः । यामः । संयमः । संयामः । नियमः । नियामः । उपयमः । उपयामः । वियमः । वियामः ॥

**नौ गदनदपठस्वनाम् ॥ ४८ ॥**

नावुपपद एभ्योऽल् भवति वा । निगदः । निगादः । निनदः । निनादः । निपठः । निपाठः । निस्वनः । निस्वानः ॥ स्वनहसोर्वा [का० ४. ५. ४६] इति वचनादनुपसर्ग इह न वर्तते ॥

**क्वणो वीणायां च ॥ ४९ ॥**

नावुपपदेऽनुपसर्गे च वीणाविषये(४) क्वणतेरल् भवति वा । क्वणः । क्वाणः । निक्वणः । निक्वाणः ॥ चकारे सति वीणाग्रहणं सोपसर्गार्थम् । प्रक्वणो वीणायाः । प्रक्वाणः ॥

**पणः परिमाणे नित्यम्(५) ॥ ५० ॥**

पणतेरल् भवति नित्यं परिमाणेऽर्थे । पणः । शाकादीना-

---

१ Chaitr. places sûtra 51 between 45 and 46.

२ अनुपसर्गादिति A.

३ चोपपदे O.

४ O. adds वर्तमानात्; ०सर्गे वीणाविषये च A.

५ Chaitr. has two sûtras पणः ॥ परिमाणे नित्यम् ॥ see notes.

मपि परिमिता मुष्टिः पण उच्यते ॥ परिमाण इति किम् । दास्याः[१] पाणः ॥

समुदोरजः पशुषु[२] ॥ ५१ ॥

समुदोरुपपदयोः पशुषु वर्तमानादजेरल् भवति । समजः पशूनाम् । समूह इत्यर्थः ॥ उदजः पशूनाम् । प्रेरणमित्यर्थः[३]॥ पशुष्विति किम् । समाजश्छात्राणाम् । उदाजः खगानाम् ॥

ग्लहो ऽक्षेषु ॥ ५२ ॥

अक्षविषये वर्तमानाद्[४] ग्रहेरलि लत्वं निपात्यते । अक्षाणां ग्लहः । ग्लहिः प्रकृत्यन्तरमित्येके[५] । तदा प्रग्लाह इति घञि[६] प्रत्युदाहरणम् ॥

सर्तेः प्रजने ॥ ५३ ॥

प्रजने गर्भग्रहणे[७] वर्तमानात् सर्तेरल् भवति । गवामुपसरः । उपसारो ऽन्यः ॥

ह्वो हुश्चाभ्युपनिविषु च ॥ ५४ ॥

एषूपपदेषु ह्वयतेरल् भवति हुरादेशश्च । अभिहवः । उपहवः । निहवः । विहवः ॥

---

१ दस्याः O.
२ Chaitr. places sûtra 51 between 45 and 46.
३ प्रेरण इत्यर्थः A.
४ O. om. वर्तमानात्.
५ ग्लहिप्रकृत्य° O.
६ तदा ग्लाह° A.; A. B. om. घञि.
७ प्रजनं गर्भग्रहणं । गर्भग्रहणे B.

## आङि युद्धे ॥ ५५ ॥

आङ्युपपदे ह्वयतेरल् भवति युद्धेऽर्थे[1] ऊरादेशश्च। आहूयन्ते यस्मिन्[2] योद्धारः स आहवः ॥ कथम् आह्वयन्ते पानाय गावो यस्मिन् स आहावो[3] जलाधारः । अन्यत्रापीति घञि च ऊरादेशः[4] ॥

## भावेऽनुपसर्गस्य ॥ ५६ ॥

अनुपसर्गस्य ह्वयतेरल् भवति भावे ऊरादेशश्च। हवः ॥ अनुपसर्गस्येति किम् । प्रह्वायः[5] ॥

## हन्तेर्वधिश्च ॥ ५७ ॥

अनुपसर्गस्य हन्तेरल् भवति भावे वधिरादेशश्च । हननं वधः ॥ अप्यधिकाराच्च घातः ॥ अनुपसर्गस्येति किम् । विघातः ॥

## मूर्तौ घनिश्च ॥ ५८ ॥

मूर्तिः काठिन्यम् । मूर्तावर्थे हन्तेरल् भवति[6] घनिरादेशश्च। दध्नो घनः । घनं दधीत्यभेदात् ॥

## प्राद् गृहैकदेशे घञ् च[7] ॥ ५९ ॥

प्राद् हन्तेरल् भवति घञ् च[7] घनिरादेशश्च गृहैकदेशेऽर्थे।

---

१ युद्धार्थे A.
२ अस्मिन् B.
३ आहवो A.; see notes.
४ घञि ऊरादेशश्च B.; अन्यत्रापीति वचनात् घञ् ऊरादेशश्च O.
५ B. O. om. from अनुपसर्गस्येति.
६ O. adds भावे.
७ °घञि च A.

प्रघणः। प्रघाणः[१]। गृहस्य द्विधाकृतस्य द्वारप्रकोष्ठाभ्यां यो बहिर्भूतः। तत्रापीति वचनाण्णत्वम्[२]॥

## अन्तर्घनोद्घनौ देशात्याधानयोः[३]॥ ६०॥

एतावलन्तौ निपात्येते देशात्याधानयोर्यथासंख्यम्। अन्तर्हन्यते यस्मिन् सोऽन्तर्घनो[४] देशः। ऊर्ध्वं हन्यते यस्मिन् स उद्घनः। यस्योपरि काष्ठानि हन्यन्ते तदत्याधानम्॥

## करणेऽयोविद्रुषु॥ ६१॥

एषूपपदेषु हन्तेरल् भवति करणे घनिरादेशश्च। अयो हन्यतेऽनेनेति। अयोघनः। विहन्यतेऽनेनेति विघनः। एवं द्रुघणः[५]। संज्ञायां णत्वम्॥

## परौ डः॥ ६२॥

परावुपपदे हन्तेर्डो भवति करणे घनिरादेशश्च। परिहन्यतेऽनेनेति परिघः॥ लत्वे[६] पलिघः॥

## नौ निमिते[७]॥ ६३॥

नावुपपदे हन्तेर्डो भवति घनिरादेशश्च निमिते वस्तुनि। निर्विशेषेण हन्यन्ते ज्ञायन्ते वा। निघा वृक्षाः। निघाः शालयः[८]॥

---

१ प्रघनः° A. B.; प्रघानः A.
२ तत्रापीति वचनं। A.
३ Ch. has two sûtras: उद्घनोऽत्याधाने॥ अपघनोऽङ्गे॥ see notes and Vârtt. on 58.
४ अन्तर्घणो A.
५ द्रुघनः B.
६ लत्वे सति O.; लत्वे तु B.; Ch. does not mention पलिघः
७ निघो निमितं Ch. (after s. 64).
८ सालयः B.; O. om. निघाः

सर्वतो निमिता आरोहतः[१] परिणाहतश्च ॥ निमित इति किम्। निघातः ॥

समुदोर्गणप्रशंसयोः ॥ ६४ ॥

समुदोरुपपदयोर्हन्तेर्डो भवति[२] घनिरादेशश्च गणे प्रशंसायाम्[३]। संहननं संहन्यते यस्मिन्नवयवो वा। संघः ॥ उत्कृष्टं हन्यते ज्ञायत इति। उद्घो मनुष्यः। प्रशस्त[४] इत्यर्थः ॥

उपात् क आश्रये ॥ ६५ ॥

उपाद् हन्तेः को भवति। आश्रये गम्यमाने। घनिरादेशश्च। कुड्योपघ्नं वसति ॥

स्तम्बेऽच्च[५] ॥ ६६ ॥

स्तम्ब उपपदे हन्तेरज् भवति कप्रत्ययो घनिरादेशश्च। स्तम्बो हन्यतेऽनेनेति स्तम्बघ्नः। स्तम्बघ्नो दण्डः। स्तम्बघ्नो यष्टिः[६]। पुंस्त्वमेव। केचित् स्त्रियामादा[७]। स्तम्बघ्ना यष्टिरिति ॥ अथाधिकारात् स्थास्नापिबतिव्यधिहनिभ्यः[८] कः स्यात्। आवृत्त्यं[९] वर्तते। प्रस्नात्यस्मिन्निति प्रस्नः। प्रपिबन्त्यस्यामिति प्रपा। आवि-

---

१ सर्वतो मिती आरोहतः B.; °निमिता आरोह उच्छ्राय आरोहतः O.

२ O. adds यथासंख्यं.

३ A. adds गम्यमानायां; B. च गम्यमानायां.

४ मनुष्यप्रशंसा B.; मनुष्यप्रशस्त A.

५ Ch. om. this sûtra; see Vârtt. to 61.

६ O. om. दण्डः। स्तम्बघ्नो.

७ स्त्रियाम् B. (s. Kât. II. 4, 49).

८ °व्याधिहनिभ्यः O.

९ आवृत्यं A. O.

ध्यते[१]ऽनेनेत्याविधः । विहन्यतेऽनेनेति[२] विघ्नः । आयुध्यते[१]ऽनेनेत्यायुधं शस्त्रं[३] । ज्ञापकादेव ॥

## ट्वनुबन्धादथुः ॥ ६७ ॥

ट्वनुबन्धाद्धातोरथुर्भवति भाव एव । टुवेपृ । वेपथुः ॥ टुओश्वि । श्वयथुः ॥ टुदु । दवथुः ॥ टुवम । वमथुः ॥ वेपदव इति वासरूपत्वात्[४] ॥

## ड्वनुबन्धात् त्रिमक् तेन निर्वृत्ते ॥ ६८ ॥

ड्वनुबन्धाद्धातोस्त्रिमग् भवति । तेन धात्वर्थेन निर्वृत्तेऽर्थे ॥ डुपचष् । पाकेन निर्वृत्तम् । पक्त्रिमम् ॥ डुकृञ् । करणेन निर्वृत्तम् । कृत्रिमम् ॥ निर्वृत्तमिति कर्तरि कर्मणि वा[५] । तेनेति यथायोगं तृतीया ॥

## याचिविछिप्रछियजिस्वपिरक्षियतां नङ् ॥ ६९ ॥

एभ्यो नङ् भवति । याञ्ञा । विश्नः । प्रश्नः । यज्ञः । स्वप्नः । रक्ष्णः । यत्नः ॥

## उपसर्गे दः किः ॥ ७० ॥

उपसर्ग उपपदे दासंज्ञकात् किर्भवति । आदिः । निधिः ॥ अप्यधिकाराद् अन्तर्धिः ॥

---

१ आविध्यन्ते° आयुध्यन्ते A.
२ A. corr. ऽस्मिन्निति.
३ B. om. शस्त्रं.
४ वेपः दव° O.; वसरूत्वात् B.
५ वा निष्ठा A.; वा क्त O.

**कर्मण्यधिकरणे च**(१) ॥ ७१ ॥

कर्मण्युपपदे दासंज्ञकादधिकरणे च(२) किर्भवति । वालधिः । जलधिः ॥ उपसर्गैरव्यवधानतैव । पयोनिधिः(३) ॥

**स्त्रियां क्तिः** ॥ ७२ ॥

स्त्रीलिङ्गे भावेऽकर्तरि च कारके संज्ञायां क्तिर्भवति । कृतिः । बुद्धिः । दृश्यतेऽनयेति । दृष्टिः(४) । एवं श्रुतिः । स्तुतिः । करणेऽपि ॥

**सातिहेतियूतिजूतयश्च**(५) ॥ ७३ ॥

एते क्तिप्रत्यया(६) निपात्यन्ते स्त्रियाम्(६) । सिनोतेः सनोतेर्वा(७) सातिः । हिनोतेर्हेतिः । यौतेर्यूतिः । जवतेर्जूतिः ॥

**भावे पचिगापास्थाभ्यः**(८) ॥ ७४ ॥

एभ्यो भावे स्त्रियां क्तिर्भवति । पचेः षानुबन्धत्वादङि(९) प्राप्ते । पक्तिः ॥ तथा । आतश्चोपसर्गे [का० ४. ५. ८४] । संगीतिः(८) । प्रपीतिः । संस्थितिः ॥ अप्यधिकारात्(१०) संस्था । व्यवस्था ॥

---

१ Ch. om. च.
२ चार्थे O.
३ उपसर्गैरव्यधानतैव॰ O.; ॰पयोधिः A.
४ ऽनेनेति दृष्टिः A.
५ ऊतिसातिहेति॰ Chaitr.
६ Om. B.
७ सनोतेश्च B.
८ B. om. from भावे to संगीतिः
९ आङि A.; अङ् O.
१० भाव इति किं । संस्था॰ Ch.

व्रजयजोः क्यप् ॥ ७५ ॥

भावे स्त्रियामाभ्यां क्यब् भवति । व्रज्या । इज्या । इष्टिरित्यपि भावे ॥

समजासनिसदनिपतिशीङ्सुविद्यटिचरिमनिभृञिणां[1] संज्ञायाम् ॥ ७६ ॥

एभ्यः संज्ञायां भावे क्यब् भवति स्त्रियाम् । समज्या[2] । आस्या । निषीदन्त्यस्यामिति निषद्या[3] । निपतन्त्यस्यामिति निपत्या[4] । शेरतेऽस्यामिति शय्या । अधिकरणेऽपि । सवनं सुत्या । विद्या[5] । करणेऽपि । अटेस्सेक्कीयितान्ताद्देवाभिधानाद् अटाट्या । परिपूर्वादेव चरेः परिचर्या । मन्या । भृत्या । इत्या ॥ अप्यधिकारात् । आसुतिः । भृतिः । समितिः ॥ भाव इति किम् । भार्या ॥ संज्ञायामिति किम् । संवित्तिः ॥

कृञः श च[6] ॥ ७७ ॥

कृञः शो भवति[7] क्तिः क्यप् च । क्रियत इति क्रिया । भावे च । कृतिः । कृत्या ॥

सर्तेर्यश्च ॥ ७८ ॥

अभिधानात् परिपूर्वात् सर्तेर्यो भवति । परिसर्या ॥ चकाराज्जागर्तेश्च । जागर्या ॥

---

१ °भृञीनां A.
२ समजम् O.
३ निसीदन्त्य° निसद्या A. O.
४ निपात्या O.
५ विदन्त्यनेनेति विद्या O.
६ °शश्च Chaitr., where this sûtra succeeds 78 and 79.
७ कृञो धातोः शच्प्रत्ययो भवति Ch.

इच्छा ॥ ७९ ॥

इषेरिच्छेति निपात्यते । इच्छा ॥

शंसिप्रत्ययादः ॥ ८० ॥

शंसुर्निष्ठायामनिडिति वचनम् । शंसेः प्रत्ययान्ताच्च धातोरप्रत्ययो भवति स्त्रियाम्(१) । प्रशंसा । पिपतिषा(२) ॥ दृशदो थिन् । दृशदा । अटाटा । कण्डूया । कण्डूतिरपीत्येके(३) ॥

गुरोश्च निष्ठासेटः ॥ ८१ ॥

गुरुमतो धातोर्निष्ठायां सेटोऽप्रत्ययो भवति । ईहा । ईक्षा । जागरा ॥ गुरोरिति किम् । निगृहीतिः ॥ निष्ठासेट इति किम् । नीतिः । राद्धिः ॥

षानुबन्धभिदादिभ्यस्त्वङ् ॥ ८२ ॥

षानुबन्धेभ्यो भिदादिभ्यस्त्वङ् भवति । जृष् । जरा ॥ डुपचष् । पचा ॥ चिष । चिया(४) ॥ घटादयः षानुबन्धाः । घटा । व्यथा ॥ क्षप क्षपायामिति निर्देशात्(५) क्षपा । उपलब्धिरिति ज्ञापकात् । चान्तिरित्यपि स्यात् ॥(६) भिदादिभ्यो नाम गणनिर्दिष्टेभ्य इति(७) भिदा विदारणे । भित्तिरन्या ॥ छिदा द्विधाकरणे । छित्तिरन्या ॥ गुहा पर्वतैकदेशे । गूढिरन्या(८) ॥ आङ्पू-

१ अस्त्रियां O.; A. om. धातोः
२ पिपतिसा पिपासा O.
३ °अपि केचित् A.; B. om. अपि.
४ चिषा A. O.
५ वचनात् B.
६ °अपि भवति। तथा भिदाभ्यो° O.
७ गणनिपातेभ्यो भवति A.
८ A. om. from गुहा.

र्वादेर्तैः । आरा शस्त्री । अर्तिरन्या ॥ धृङ् प्रपाते । धारा । धृति-रन्या ॥ विद । विदा ॥ चिप । चिपा ॥ गुध । गोधा ॥ हृञ्[१] । हारा ॥ कृञ् । कारा ॥ लिख[२] । लेखा । रत्वं वादेः । रेखा ॥ ऊनचुदपीडमृगयतिभ्य इनन्तेभ्यो यौ प्राप्ते वचनम् । ऊना । चूडा । दीर्घत्वं डत्वं च स्यात्[३] । पीडा । मृगया ॥ वशा[४] । रुजा । मृजा । गुणवृद्ध्यादिकमर्थविशेषश्च[५] गणपाठसामर्थ्यात् ॥

## भीषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलिदोलिभ्य-श्च ॥ ८३ ॥

एभ्य इनन्तेभ्योऽङ् भवति । भियो हेतुभये षान्तः[६] । भी-षणं भीषा ॥ चिति स्मृत्याम् । चिन्ता । पूज पूजायाम् । पूजा ॥ कथ वाक्यप्रबन्धे । कथा ॥ कुवि च्छादने । कुम्बा ॥ चर्च अध्ययने । चर्चा ॥ स्पृह ईप्सायाम्[७] । स्पृहा ॥ तुल उन्मादने । तोला ॥ दुल उत्क्षेपे । दोला ॥ कथं तुला । तुलया संमित इति[८] नि-र्देशात् ॥

## आतश्चोपसर्गे ॥ ८४ ॥

उपसर्ग उपपद आकारान्ताद्धातोरङ् भवति । संस्था[९] ।

---

१ हृञ् हरणे B.
२ लिख लिखने B.
३ दस्य डत्वं च । पीड अवगाहने O.
४ वाशा B.
५ गुणवृद्ध्यादिरर्थ॰ A.
६ षस्यान्तः O.
७ इच्छायां A.
८ संमितमिति A.
९ संख्या O.; सन्ध्या संस्था B.

उपदा। उपधा(१) ॥ अन्तःपूर्वाच्च वक्तव्यम्(२)। अन्तर्धा ॥ कथं श्रद्धा। आ श्रद्धा [का॰ २. १. १०] इति निर्देशात्(३) ॥ अप्यधिकारात् प्रमितिः ॥

### ईषिश्रन्थ्यासिवन्दिविदिकारितान्तेभ्यो(४) युः ॥ ८५ ॥

एभ्यो युर्भवति ॥ ईष गतिहिंसादानेषु। ईषणा ॥ श्रन्थना। उपासना(५)। वन्दना ॥ आसिसहचरितो वेत्तिः। वेदना ॥ कारणा(६) ॥ चुरादौ घट्ट चलने। घट्टना। भौवादिकस्य क्तेरनभिधानात् ॥

### कीर्तीषोः क्तिश्च ॥ ८६ ॥

कीर्तयतेरिषेश्च(७) क्तिर्युश्च भवति। कीर्त्तिः(८)। संकीर्तना ॥ इष गतौ। इष आभीक्ष्ण्ये(९) वा। अन्विष्टिः(१०)। परीष्टिः। अन्वेषणा। पर्येषणा ॥ इषु इच्छायामिति सानुबन्धः(११)। इष्टिः ॥

### रोगाख्यायां वुञ् ॥ ८७ ॥

व्याधेराख्यायां धातोर्वुञ् भवति। प्रवाहिका(१२)। प्रच्छ-

---

१ उपधा सका संज्ञा अन्तरं। पूर्वाच्च॰ O.
२ अन्तरपूर्वाच्च॰ B.; अन्तर्पूर्वाच्च। A.
३ वचनात् B.; ज्ञापकात् O.
४ ईषिश्रान्थ्यसि॰ O.; ॰सिवदिवन्दिकारि॰ Ch.; (but वेदना। वन्दना।).
५ आसना A.
६ करणा O.
७ कीर्त्तइषु इत्येतयोर्धात्वोः॰ Ch.
८ संकीर्त्तिः B.
९ आभीक्ष्ण्ये A. B. O.
१० अन्वीष्टिः A.
११ षानुबन्धः A.; सानुबन्धत्वाद् B.
१२ प्रवाहिचा O.

र्दिका । विचर्चिका(१) ॥ अप्यधिकारात् । शिरोऽर्दनम्(२) । शि-रोऽर्त्तिः ॥

संज्ञायां च ॥ ८८ ॥

संज्ञायां च विषये(३) धातोर्वुञ् भवति । उद्दालपुष्पाणि भज्यन्ते(४) यस्यां क्रीडायां सा । उद्दालपुष्पभञ्जिका क्रीडा । क्रीडायां नित्यसमास एव(५) । पुष्पभञ्जिका क्रीडेत्येवार्थवती(६) संज्ञा । एवं वारणपुष्पप्रचायिका(७) ॥

पर्यायार्हर्णोत्पत्तिषु च ॥ ८९ ॥

एषु वर्तमानाद्धातोर्वुञ् भवति । अद्यभवतः शायिका ॥ अर्हति भवानिक्षुभक्षिकाम् ॥ ऋणे । पायसभोजिकां मे धारयसि ॥ चकारादुत्पत्तौ च । इक्षुभक्षिका(८) म उदपादि न च भवति । चिकीर्षा जिहीर्षा म उत्पद्यते ॥ भावमात्रे च दृश्यते । का नाम शायिका । अन्येष्वधीयमानेषु । का नामासिका(९) । अन्येषु गच्छत्स्विति(१०) ॥

प्रश्नाख्यानयोरिञ् च वा ॥ ९० ॥

प्रश्न आख्याने च गम्यमाने धातोरिञ् वुञ् च भवति । वा-

१ वचर्चिका.
२ शिरसोऽर्दनं B.
३ संज्ञाविषये A.; A. O. om. धातोः
४ भज्यन्ते B.
५ क्रीडायामेव समासः A.; B. om. क्रीडायां.
६ क्रीडेत्येतावती B.; पुष्पभञ्जिकेत्येताभवती O.
७ वारणप्रचायिका क्रीडा A.
८ इक्षुभक्षिकां O.
९ का नाम शायिका A.
१० व्रजत्स्विति O.; इति शायिका। A.

ग्रहणाद् यथाप्राप्तम् । कां त्वं कारिमकार्षीः कां कारिकां कां कृतिं कां क्रियां कां कृत्याम् । सर्वां कारिमकार्षं सर्वां कारिकां सर्वां कृतिं सर्वां क्रियां सर्वां कृत्याम् ॥

**नञ्यन्याक्रोशे(१) ॥ ९१ ॥**

नञ्युपपद(१) आक्रोशे गम्यमाने धातोरनिर्भवति । अकरणिस्ते(२) वृषल भूयात् । एवम् अजीवनिः ॥ नञीति(३) किम् । मृतिस्ते वृषल भूयात् ॥ संपदादिभ्यः क्विब्भावे(४) कारके चान्यत्रापीति बहुलत्वात्(५) । स एव संपत् । प्रतिपत् । विपत् । संपत्तिरित्यपि स्यात् । संपदादिराकृतिगणोऽयम् ॥ इकिश्तिपो धातोः स्वरूपे(६)ऽर्थे ज्ञापकादेव सिद्धाः ॥ अकारः ककार इत्युणादिषु कारशब्देन वा समासः । यथा । एवंकारः । ओंकारः । चीत्कारः । शीत्कारः । स्फीत्कारः । स्फुत्कारः । वषट्कारः । स्वाहाकार इत्यादि(७) ॥ रादिफः । रेफ इत्यौणादिकः ॥

**कृत्ययुटोऽन्यत्रापि च ॥ ९२ ॥**

कृत्या युट् च(८) यस्मिन्नर्थे विहितास्ततोऽन्यत्रापि च भवन्ति लक्ष्यतः(९) । स्नानीयं चूर्णम् । दानीयो ब्राह्मणः । समा-

१ नञन्याक्रोशे ॥ नञुपपदे° A.
२ अकारिणिस्ते A.
३ नञिति A.
४ O. adds स्त्रियां.
५ बहुलार्थत्वात् A.
६ इकिश्तिपो धातुस्वरूपे A. (P. III. 3, 108 V.)
७ ओँकारः हुंकारः सीत्कारः वषट्कारः ॥ O.
८ कृत्ययुटो A.
९ लक्ष्यतः B. O.; om. A.

वर्तनीयो गुरुः। प्रवचनीय उपाध्यायः। करणादिषु भवन्त्यमी। भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्याः[१] कर्तर्यपि भवन्ति। आङ्पूर्वयोः प्लुङ्पत्योर्यण्णिति॥ राजभिर्भुज्यन्ते। राजभोजनाः शालयः। राजाच्छादनानि[२] वासांसि। अवसेचनम्। अवस्रवणम्[३]। दानम्। एते कर्मणि॥ प्रस्कन्दनम्। प्रपतनमित्यपादाने॥ अपिशब्दोऽत्र बहुलार्थ इति[४]॥ ष्ठिवुषिव्वोर्दीर्घस्य[५] वा। निष्ठीवनं निष्ठेवनम्। निषीवणं निषेवणम्॥ करोतीति कारणम्॥

नपुंसके भावे क्तः॥ ९३॥

नपुंसके भावेऽर्थे क्तो[६] भवति। शयितम्। स्थितम्। भवता कृतम्। प्राप्तमनेनेत्यविवक्षितकर्मत्वात्। युटा बाधितो नपुंसके क्तो यथा स्यादिति वचनम्। वासरूपत्वाच्चेद्[७] घञादयोऽपि स्युरिति॥

युट् च॥ ९४॥

नपुंसके भावे युट् च भवति। स्थानम्। गमनम्॥

करणाधिकरणयोश्च॥ ९५॥

करणेऽधिकरणे च युड् भवति नपुंसके[८]। इध्मप्रव्रश्चनम्।

---

१ °व्योपस्थापनीयं जन्या° O.
२ राजच्छादनानि B.
३ सर्वः अवस्रवणं O.; स्रवणं B.
४ B. om. इति; A. om. अत्र.
५ ष्ठिवुसिव्योर्° A.; ष्ठिवुषिवोर्° B.
६ °भावे क्तप्रत्ययो A.
७ वासरूपत्वं चेद् A.; वासरूपत्वादिति चेत् B.
८ च युट् च भवति। B.

पलाशशातनम् ॥ अधिकरणे च । गोदोहनी घटी । सक्तुधानी स्थाली[1] ॥

## पुंसि संज्ञायां घः ॥ ९६ ॥

करणाधिकरणयोः पुंसि संज्ञायां घो भवति स्वरान्तात् । उरश्छाद्यतेऽनेनेति । उरश्छदः[2] ॥ कुर्वन्त्यनेनेति करः । शृण-न्त्यनेनेति शरः[3] ॥ अधिकरणेऽपि । लीयन्तेऽस्मिन्निति लयः । निलीयन्तेऽस्मिन्निति निलयः । विषिण्वन्त्यस्मिन्निति विषयः ॥

## गोचरसंचरवहव्रजव्यजक्रमापणनिगमाश्च ॥ ९७ ॥

एते घप्रत्ययान्ता निपात्यन्ते । गावश्चरन्त्यस्मिन्निति गोचरः । प्रत्यासत्तिरुपलक्ष्यते ॥ एवं संचरः । वहन्त्यनेनेति वहो वृषभस्य । व्रजन्त्यस्मिन्निति व्रजः ॥ विपूर्वोऽज[4] । व्यजन्त्यनेनेति व्यजः । क्रामन्त्यनेनेति क्रमः ॥ आपणायन्तेऽनेनेति[5] । आपणः ॥ नि-गच्छन्त्यनेनेति[6] निगमः ॥ चकारात् । भजन्त्यस्मिन्निति भगः । निकषन्त्यनेनेति निकषः[7] ॥

## अवे तॄस्त्रोर्घञ् ॥ ९८ ॥

अव उपपदे तॄस्तॄभ्यां घञ् भवति । घापवादः ॥ अवतरन्त्य-

---

१ Om. B. O.

२ उदरश्छाद्यते° उदरश्छदः B.

३ शॄणन्त्य° B.; शृखन्त्य° A. O.; °श्रवः O.

४ विपूर्वादजे O.

५ आपणायन्त्यनेनेति A.

६ निगच्छन्त्यस्मिन्निति O.

७ °अस्मिन्निति° O.; निकायः A.

नेनेति । अस्मिन्निति वा । अवतारः ॥ अवस्तृणन्त्यनेनेति । अस्मि-
न्निति वा । अवस्तारः ॥

व्यञ्जनाच्च ॥ ९९ ॥

व्यञ्जनान्ताच्च घापवादो घञ् भवति । लिखन्त्यनेनेति
लेखः । विदन्त्यनेनेति वेदः[१] ॥ अपमृजन्त्यनेनेति । अपामार्गः ।
ह्रस्वस्य दीर्घता ॥ आचरन्त्यनेनेति[२] । आचारः ॥ एवम् आवासः ॥
चकारात् । अध्यायः । न्यायः । उद्यावः । संहारः । आधारः ।
आधाय[३] इति च ॥

उदङ्कोऽनुदके ॥ १०० ॥

उदञ्चतेर्घञ्युदङ्क[१] इति निपात्यतेऽनुदकविषये । ऊर्ध्व-
मञ्चन्त्यनेनेति । उदङ्कः । घृतोदङ्कः[४] ॥ अनुदक इति किम् ।
उदकोदञ्चनः । घे त्वविशेषाद् युट्[५] ॥

जालमानायः ॥ १०१ ॥

आनाय इति निपात्यते जालं चेत् । आनीयन्तेऽनेनेति ।
आनायो मत्स्यानाम् ॥
आखन्यतेऽनेनेति । आखनः । घोऽपि दृश्यते । आखानः । घञपि ॥

---

१ विदः B.; O. om. from वेदः to उदङ्क in s. 100.
२ आचरन्त्यस्मिन्निति B.
३ Thus B.; अध्यायः उद्धारः संहारः नीहारः आधारः आधायः A.; Ch. see notes.
४ एवं घृ० A.; om. O.
५ घेत्वेऽवि० O.; घुट् A.

आख इत्यन्यतोऽपि चेति डः। करणेऽपि(१)। आखरः। आखनिकः। आखनिकवक(२) इति डरइकइकवका(३) औणादिका इति॥

## ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्॥ १०२॥

कृच्छ्रं दुःखं दुषोऽर्थः(४)। अकृच्छ्रं सुखमितरयोरर्थः(५)। एषूपपदेषु कृच्छ्राकृच्छ्रार्थेषु धातोः खल् भवति भावे कर्मणि च॥ ईषद् अनायासेन क्रियते। ईषत्करः कटो भवता॥ दुःखेनायासेन क्रियते(६)। दुष्करः॥ सुखेनानायासेन क्रियते(७)। सुकरः॥ कृच्छ्राकृच्छ्रार्थेष्विति किम्। ईषल्लभ्यं धनम्। कृपणान्मनागित्यर्थः(८)॥

## कर्तृकर्मणोश्च भूकृञोः॥ १०३॥

ईषदादिषूपपदेषु(९) कृच्छ्राकृच्छ्रार्थेषु कर्तृकर्मणोश्च(१०) भूकृञोः खल् भवति(११)। खानुबन्धबलात् कर्तृकर्मणोरेवानन्तर्यम्॥ ईषदाढ्येन भूयते। ईषदाढ्यंभवं भवता। दुराढ्यंभवम्। स्वाढ्यंभवम्॥ ईषदाढ्यः क्रियते। ईषदाढ्यंकरो भवान्(१२)। दुराढ्यंकरः। स्वाढ्यंकरः॥ यदेषदाढ्य एव सन् किंचित् क्रि-

---

१ A. om. करणेऽपि।
२ आखनिकरक B.; आखनिकर A.; आखुनिकः O.
३ डवइकइकवका (?) O.; °इकरका A. B.; cf. Pâṇ. III. 3, 125 Vs.
४ दुषोऽर्थः B.; om. A.
५ °इतरयोरिति B.; सुखमिति तयोरिति A.
६ दुःखेन क्रियते A.
७ सुखेन क्रियते A. O.
८ कृपणा [नां suppl.] मनागि° A.
९ ईषदादिषु O.
१० कर्तृकर्मणोरुपपदयोः A.
११ A. adds यथासंख्यं.
१२ °करोति भवान् A.

यते तदा न भवति। करोतेरिहाभूतप्रादुर्भावार्थत्वात् ॥ यथा-संख्याद् ईषदाढ्यो ऽनुभूयत इत्यत्र[1] न भवति ॥

आङ्यो युदरिद्रातेः[2] ॥ १०४ ॥

ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेष्वाकारान्तेभ्यो युर्भवति। अदरिद्रातेः[3]। ईषत्पानः। सुपानः। दुष्पानः[4] ॥ अदरिद्रातेरिति किम्। ईषद्दरिद्रः ॥

शासुयुधिदृशिधृषिमृषां वा[5] ॥ १०५ ॥

ईषदादिषूपपदेषु कृच्छ्राकृच्छ्रार्थेष्वेषां युर्भवति वा। ईषच्छासनः। ईषच्छासः ॥ दुःशासनः। दुःशासः ॥ सुशासनः। सुशासः ॥ ईषद्योधनः। ईषद्योधः ॥ दुर्योधनः। दुर्योधः ॥ सुयोधनः। सुयोधः ॥ ईषद्दर्शनः। ईषद्दर्शः ॥ दुर्दर्शनः। दुर्दर्शः ॥ सुदर्शनः। सुदर्शः ॥ ईषद्धर्षणः। ईषद्धर्षः ॥ दुर्धर्षणः। दुर्धर्षः ॥ सुधर्षणः। सुधर्षः ॥ ईषन्मर्षणः। ईषन्मर्षः ॥ दुर्मर्षणः। दुर्मर्षः ॥ सुमर्षणः। सुमर्षः ॥ वाग्रहणात् स्त्र्यधिकारात्परेषु[6] न वासरूपविधिरिति ॥

इच्छार्थेष्वेककर्तृकेषु तुम् ॥ १०६ ॥

इच्छार्थेषु धातुष्वेककर्तृकेषूपपदेषु[7] धातोस्तुमेव भवति।

---

१ अनुभूयाते इत्य° A.; अनु इत्य° B.
२ यु[र supplied by both]दरिद्रातेः A. Ch.
३ न तु दरि° B. and om. उपपदेषु.
४ दुष्पाणः B.
५ धृषिमृजां वा A.
६ स्त्र्यधिकारपरेषु A.
७ A. O. om. धातुषु.

न तु वुण्तुमौ[1] क्रियायां क्रियार्थायामिति [का० ४. ४. ६८]। इच्छति भोक्तुम्। भोक्तुं कामयते ॥ एककर्तृकेष्विति किम्। भिन्नकर्तृकेषु विधिर्मा भूत्। राज्ञो भोजनमिच्छति। इच्छन् करोतीत्यपि स्यात् ॥ इच्छार्थेष्विति किम्। पाचको व्रजति ॥

## कालसमयवेलाशक्त्यर्थेषु च ॥ १०७ ॥

एषूपोच्चारिषूपपदेषु[2] धातोस्तुमेव भवति ॥ कालो भोक्तुम्। भोक्तुं कालः। समयो भोक्तुम्। वेला भोक्तुम्। समर्थो भोक्तुम्। भोक्तुं शक्तः। प्रभुर्भोक्तुम्। पर्याप्तो भोक्तुम्। अलं भोक्तुम् ॥ भवतेर्वर्तेर्वा तादर्थ्यस्य प्रतीयमानत्वात्। यथा भोक्तुं मनः। गन्तुं कामः। श्रोतुं श्रोत्रम्। द्रष्टुं चक्षुः। योद्धुं धनुः। वक्तुं जडः ॥ उच्चारणं तु वक्तुरायत्तमिति[3] ॥ तथा शक्त्यर्थात्[4]। शक्नोति भोक्तुम्। पारयति भोक्तुम्। धृष्णोति भोक्तुम्। जानाति भोक्तुम्। ग्लायति[5] भोक्तुम्। घटते भोक्तुम्। आरभते भोक्तुम्। आलभते भोक्तुम्। प्रक्रमते भोक्तुम्। उत्सहते भोक्तुम्। अर्हति भोक्तुम्। अस्ति भोक्तुम्। विद्यते भोक्तुम्। क्रियायां क्रियार्थायामिति तुम्[6] सिद्ध एव। वुणप्यभिधानाद् द्रष्टव्यः ॥

## अर्हतौ तृच् ॥ १०८ ॥

अर्हत्यर्थविशिष्टाद्धातोस्तृज् भवति। कन्यायाः खलु भ-

---

१ न तु वुण् क्रि० B.O.; वुन्तुमौ A.
२ एषूपपदेषु A.; एषु उपोच्चारिपदेषु O.
३ प्रयोक्तुरायत्तमिति A.
४ शक्त्यर्थाद्विव O.; शक्त्यर्थत्वात् B.
५ ग्लायते O.
६ A. om. क्रियायां and तुम्.

वान् वोढा ॥ अध्येता खलु भवाञ्छास्त्रस्य । प्रयोगतश्चेति ॥ अर्हे शक्तौ च[1] सप्तमी सा बाधिका यथा स्यादिति वचनम्[2] । भवान् खलु कन्यामुद्वहेत[3] । अर्हः शक्त इत्यर्थः[4] ॥

शकि च कृत्याः[5] ॥ १०९ ॥

शकनं शक् । शक्त्यर्थविशिष्टादर्हत्यर्थविशिष्टाच्च धातोः कृत्या भवन्ति । भवता खलु कन्या वोढव्या । वहनीया । वाह्या । उह्येतेति च[6] ॥

प्रैष्यातिसर्गप्राप्तकालेषु[7] ॥ ११० ॥

प्रैष्यादिषु गम्यमानेषु धातोः कृत्या[8] भवन्ति । प्रेषितस्त्वं भवता ग्रामो गन्तव्यः । गमनीयः । गम्यः ॥ अतिसर्गोऽनुमतिः । गुरुणानुज्ञातस्त्वं भवता कटः[9] कर्तव्यः । करणीयः । कार्यः । कृत्यः ॥ प्राप्तस्ते कालः कटकरणे कर्तव्यः । करणीयः । कृत्यः । कार्यः[10] कटो भवता ॥ ऊर्ध्वं मुहूर्तात् कटः[11] कर्तव्य इत्यपि वक्तव्यम् ॥ प्रैष्यादिषु पञ्चमीसप्तम्युक्ता[12] सा बाधिका स्यादिति[13] वचनम् ॥

---

१ अर्हतौ शक्तौ च A. B.
२ B. om. यथा.
३ कन्याम्वहेत् B.
४ अर्हतः शक्तिरित्यर्थः A.
५ Chaitr. om. this sûtra.
६ उह्येति च A. (against Tr.).
७ प्रैष्यासर्गप्राप्तिकालेषु A.; प्रैष्यतिसर्ग° O.; प्रैषा° Tr. G.; प्रेष्या° (but in Com. प्रैष्या°) Ch.
८ कृत्यप्रत्यया B.; O. om. गम्यमानेषु.
९ गुरूणां न ज्ञातस्त्वं °कटं O.
१० O. om. from करणीयः.
११ ऊर्ध्वः मुहूर्त्तात् भवता कटः B.; कटं O.
१२ सप्तमी पञ्चम्युक्ता O.
१३ यथा स्यादिति B.

## आवश्यकाधमर्णयोर्णिन् ॥ १११ ॥

अवश्यं भावे गम्यमानेऽधमर्णे च कर्तरि धातोर्णिन् भवति। अवश्यं दायी। अवश्यं कारी ॥ अधमर्णे च। शतं दायी। सहस्रं दायी। दायी मे शतं भवान् ॥

## तिक्कृतौ संज्ञायामाशिषि(१) ॥ ११२ ॥

आशीर्विषये संज्ञायां गम्यमानायां धातोस्तिक्कृतौ भवतः। तनुतात्। तन्तिः(२) ॥ देवाश्चैनं देयात्। देवदत्तः। एवं यज्ञदत्तः(३) ॥ वीरो भूयादिति वीरभूतिः। मित्रभूतिः(४)। अग्निरस्य भूयादित्यग्निभूतिः(५) ॥ संज्ञाशब्दा यथाकथंचिद् व्युत्पाद्याः(६) ॥

## धातुसंबन्धे प्रत्ययाः ॥ ११३ ॥

धात्वर्थानां संबन्धे विशेषणविशेष्यभावलक्षणे स्वं कालं त्यक्त्वा विशेष्यस्य धात्वर्थस्य काले कृत्संज्ञकाः प्रत्ययाः साधवो भवन्ति न तु त्यादयः साध्यविहितत्वात् ॥ सूत्रं त्विदं सुखार्थमेव ॥ अग्निष्टोमयाजी पुत्रोऽस्य(७) जनिता। अग्निष्टोमयाजीति भूते णिनिः। जनितेत्यनेन संबन्धे भविष्यति साधुर्भवति(८)। एवं कृतः कटः श्वो भविता। भावि कृत्यमासीत्। भविष्यति विहितो णिनिर्भूते सिद्धः॥

---

१ Ch. adds च.

२ A. adds वध्यात् हन्तिः। B. सनुतात् सन्तिः.

३ A. corr. देवदत्तिः °यज्ञदत्तिः.

४ वीरभूः° । B.; वीरिभूः° O.; मित्रभूः B. O.; om. A.

५ O. adds देवभूतिः.

६ °एते यथा° O.; यज्ञाशब्दत्वात् यथा° व्युत्पद्याः B.

७ B. om. from धात्वर्थस्य काले.

८ °अनेन इति संबन्धे भविष्यति काले साधुर्भवति O.

प्रकरणात् कृतो लब्धाः । प्रत्ययग्रहणं सामान्यार्थम् ॥ गोमानासीत् । गोमान् भवितेति । गोमानिति वर्तमाने मन्तुः[१] । आसीदित्यनेन संबन्धेऽतीते सिद्धः । भवितेत्यनेन भविष्यतीति ॥

॥ इति दौर्गसिंह्यां वृत्तौ कृत्सु पञ्चमः पादः समाप्तः ॥

---

अलंखल्वोः प्रतिषेधयोः क्त्वा वा ॥ १ ॥

अलंखलुशब्दयोः प्रतिषेधार्थयोरुपपदयोर्धातोः क्त्वा भवति वा । अलं कृत्वा । खलु कृत्वा[२] ॥ अलं भोजनेन । खलु भोजनेन ॥ अलंखल्वोरिति किम् । मा कार्षीः ॥ प्रतिषेधार्थयोरिति किम् । अलंकारो निष्कस्य । खलुदानं कन्यायाः । निश्चयेऽत्र खलुशब्दः ॥

मेङः[३] ॥ २ ॥

मयतेः क्त्वा भवति वा । अपूर्वकालार्थं[४] वक्तव्यम् । अपमाय । अपमित्य याचते । यपीलं नेष्यते । न याचेः क्त्वा । अभिधानाच्च[५] । अपमातुं याचते । याचित्वापमयते ॥

एककर्तृकयोः पूर्वकाले ॥ ३ ॥

एककर्तृकयोर्धात्वर्थयोर्मध्ये यः पूर्वक्रियाकालस्तस्मिन् वर्त-

---

१ A. om. from गोमानिति.
२ अलंकृत्य खलुकृत्य A.
३ The Chaitr. om. this sûtra.
४ पूर्वकालार्थं B.
५ अनभिधानाच्च B.

मानाद्धातोः क्त्वा भवति । शक्तिशक्तिमतोरभेदविवक्षयैककर्तृकता । भुक्त्वा व्रजति । द्विवचनस्यातन्त्रत्वात् परापेक्षया वा । भुक्त्वा पीत्वा व्रजति ॥ एककर्तृकयोरिति किम् । भुक्तवति गुरौ शिष्यो व्रजति ॥ पूर्वकाल इति किम् । पचति च पठति च ॥ कथम् अक्षिणी(१) निमील्य हसति । मुखं व्यादाय स्वपिति । मुहूर्तादिकालस्य विवक्षितत्वात् ॥ कथं मृतं दृष्ट्वा दुःखं भवति । प्रियं दृष्ट्वा सुखं स्यात्(२) । भिन्नकर्तृकत्वाच्चिन्त्यमेतत् ॥

## परावरयोगे च ॥ ४ ॥

परस्यावरेण योगेऽवरस्य च परेण योगे सति धातोः क्त्वा भवति । अप्राप्य नदीं पर्वतः । परनदीयोगेनावरदेशस्थः पर्वतो विशिष्यते ॥ अतिक्रम्य पर्वतं नदी । अवरपर्वतयोगेन(३) परदेशस्था नदी विशिष्यते ॥ भवतेः सर्वत्र संभवादेककर्तृकता पूर्वकालता च दुःखप्रतिपत्तिगम्येति(४) वचनम् ॥

## णम् चाभीक्ष्ण्ये द्विश्च पदम् ॥ ५ ॥

एककर्तृकयोर्धात्वर्थयोः पूर्वकाले वर्तमानाद्धातोर्णम् भवति क्त्वा चाभीक्ष्ण्ये पदं च द्विर्भवति । भोजं भोजं व्रजति । भुक्त्वा भुक्त्वा व्रजति ॥ द्विश्च पदमिति सुखार्थमेवेदम् ॥ लुनीहि लुनीहीति लोकतो दर्शनात् ॥ यदयं भुङ्क्ते ततो व्रजति । यच्छब्दप्र-

---

१ अक्षणी B.
२ भवति । भिन्नकर्तृत्वा० B.
३ B. om. from सति धातोः क्त्वा.
४ दुःखप्रतिगम्येति B.

योगे ततःशब्देन क्रमस्याभिधानात् क्त्वा न भवति। आभीक्ष्ण्या-भावाच्च णम् न स्यात्॥ यदयं पुनः पुनर्भुङ्क्ते ततो व्रजति। पुनः-पुनःशब्देनाभीक्ष्ण्यस्याभिधानात्॥ यदयं भुक्त्वा गच्छति ततोऽधीत इति भोजनगमनयोः क्रमे क्त्वा। गमनाध्ययनयोस्तु क्रमस्य ततःशब्देनाभिधानात्(१)॥

## विभाषाग्रेप्रथमपूर्वेषु(२)॥ ६॥

एषूपपदेषु विभाषा(३) धातोर्णम् भवति। अग्रे भोजं व्रजति। अग्रे भुक्त्वा व्रजति। प्रथमं भोजं व्रजति। प्रथमं भुक्त्वा व्रजति। पूर्वं भोजं व्रजति। पूर्वं भुक्त्वा व्रजति॥ पूर्वं(४) भुङ्क्ते ततो व्रजतीति ततः-शब्देन क्रमस्याभिधानात्॥

## कर्मण्याक्रोशे कृञः खमिञ्॥ ७॥

कर्मण्युपपदे कृञः खमिञ् भवति। आक्रोशे गम्यमाने। चौरंकारमाक्रोशति। करोतिरिहोच्चारणे। आक्रोशेन क्रियय-यैव(५) कर्म॥ आक्रोश इति किम्। साधु कृत्वा स्तौति॥ खानु-बन्धो मागमार्थः॥

## स्वादौ च॥ ८॥

स्वाद्वर्थे स्वादुः। तस्मिन्नुपपदे कृञः खमिञ् भवति। स्वा-

---

१ ततः नाभिधानात् B.
२ Ch. om. this sûtra (see Vârtt. to 5).
३ विभाषया B.
४ यद्ययं पूर्वं A.
५ आक्रोशक्रियाया एव A. (Tril. has क्रियथैव).

दुंकारं भुङ्क्ते । संपन्नंकारं भुङ्क्ते । लवणंकारं भुङ्क्ते ॥ स्वादाविति किम् । रूपमिदमदीर्घान्ततां गमयति । तेन स्वादूकृत्य स्वादीं कृत्वा भुङ्क्ते यवागूम् ॥

### अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्(१) ॥ ९ ॥

एषूपपदेषु कृञः खमिञ् भवति सिद्धाप्रयोगश्चेत् करोतिर्वर्तते । यस्मादन्यथादयः शब्दाः प्रकारमाचक्षते । उक्तेष्वपि प्रयोगाविर्भावायेति करोतिः प्रयुज्यते। अन्यथाकारं भुङ्क्ते। एवंकारं भुङ्क्ते। कथंकारं भुङ्क्ते। इत्थंकारं भुङ्क्ते॥ सिद्धाप्रयोगश्चेदिति किम्। अन्यथा कृत्वा शिरो भुङ्क्ते ॥

### यथातथयोरसूयाप्रतिवचने(१) ॥ १० ॥

ओश्चेत्वं सूत्रत्वात् [आ० २. १. २०] । असूया ऽक्षमा तदर्थं प्रतिवचनम् । यथातथयोः कृञः खमिञ् भवति । असूयाप्रतिवचने गम्यमाने । सिद्धाप्रयोगश्चेत् करोतिर्भवति । यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किं तवानेन ॥ असूयाप्रतिवचन इति किम् । यथा कृत्वाहं भोक्ष्ये । तथा कृत्वाहं शिरो भोक्ष्ये किं तवानेन ॥

### दृशो णम् साकल्ये ॥ ११ ॥

साकल्यविशिष्टे कर्मण्युपपदे दृशो णम् भवति । कन्यादर्शं

---

१ Vârtt. on sûtra 8 in Chaitr.

वरयति । यां यां कन्यां पश्यति तां सर्वां[1] वरयतीत्यर्थः ॥ विदेर्वक्तव्यम् । ब्राह्मणवेदं भोजयति । यं यं ब्राह्मणं जानाति लभते विचारयति तं सर्वं भोजयतीत्यर्थः[2] ॥ साकल्य इति किम् । कंचिद् ब्राह्मणं दृष्ट्वा भोजयति ॥

## यावति विन्दजीवोः[3] ॥ १२ ॥

यावदित्यनिर्दिष्टार्थवाची । यावदित्युपपदे विन्दतेर्जीवतेश्च णम् भवति । यावद्वेदं भुङ्क्ते । यावद् यावन्तं वा लभते तावत् तावन्तं वा भुङ्क्त इत्यर्थः ॥ यावज्जीवमधीते । यावज्जीवति तावदधीत इत्यर्थः ॥

## चर्मोदरयोः पूरेः ॥ १३ ॥

पूरिरिनन्त एव सकर्मकः । चर्मोदरयोः कर्मणोरुपपदयोः पूरयतेर्णम् भवति । चर्मपूरं ददाति । उदरपूरं भुङ्क्ते ॥

## वर्षप्रमाण ऊलोपश्च वा ॥ १४ ॥

कर्मण्युपपदे पूरयतेर्णम् भवति वर्षप्रमाणे गम्यमाने । पूरयतेरूलोपश्च वा । गोष्पदपूरं वृष्टो देवः[4] । गोष्पदप्रं वृष्टो देवः ॥

## चेलार्थे क्नोपेः ॥ १५ ॥

चेलार्थे कर्मण्युपपदे क्नोपयतेर्णम् भवति । वर्षप्रमाणे गम्य-

---

१ तां तां सर्वां B.
२ तं तं भोज° A.
३ विन्दजीवयोः A.
४ B. om. from गोष्पदपूरं.

माने । चेलक्नोपं वृष्टो देवः । वस्त्रक्नोपं वृष्टो देवः । वसनक्नोपं वृष्टो देवः(१) ॥

निमूलसमूलयोः कषः(२) ॥ १६ ॥

निमूलसमूलयोः कर्मणोरुपपदयोः कषतेर्णम् भवति । निमूलकाषं कषति(२) । समूलकाषं कषति । निमूलं समूलं कषतीत्यर्थः(२) ॥

शुष्कचूर्णरूक्षेषु पिषः(३) ॥ १७ ॥

एषु कर्मसूपपदेषु पिषोर्णम् भवति । शुष्कपेषं पिनष्टि । चूर्णपेषं पिनष्टि । रूक्षपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः ॥

जीवे ग्रहः ॥ १८ ॥

जीवे कर्मण्युपपदे ग्रहेर्णम् भवति । जीवग्राहं गृह्णाति । जीवं गृह्णातीत्यर्थः ॥

अकृते कृञः(४) ॥ १९ ॥

अकृते कर्मण्युपपदे कृञो णम् भवति । अकृतकारं करोति । अकृतं(५) करोतीत्यर्थः ॥

---

१ Between 15 and 16 Chaitr. inserts the sûtra गात्रपुरुषयोः स्नः । see notes.

२ Ch. throughout कषः° काषं कषति°.

३ °रूक्षेषु पिषः Ch.

४ In Chaitr. sûtras 19 and 20 are a Vârttika on 18: समूलाकृतयोर्हनकृञोरिति वक्तव्यम् ।

५ प्रकृतं B.

समूले हन्तेः[१] ॥ २० ॥

समूले कर्मण्युपपदे हन्तेर्णम् भवति। समूलघातं हन्ति। समूलं हन्तीत्यर्थः[२] ॥

करणे[३] ॥ २१ ॥

करणवाचिन्युपपदे हन्तेर्णम् भवति[२]। पादघातं भूमिं हन्ति। पादेन हन्तीत्यर्थः ॥ मुष्टिघातं चौरं हन्ति। मुष्टिना चौरं हन्तीत्यर्थः[४] ॥ परमपि हिंसार्थाच्चैककर्मकादिति वचनं बाधते करणस्य व्यक्तित्वात् ॥

हस्तार्थे ग्रहवर्तिवृताम् ॥ २२ ॥

हस्तार्थे करण उपपद एषां णम् भवति। हस्तेन गृह्णाति। हस्तग्राहं गृह्णाति ॥ एवं करग्राहं[५] गृह्णाति ॥ हस्तेन वर्तयति। हस्तवर्तं वर्तयति ॥ हस्तेन वर्तते। हस्तवर्तं वर्तते ॥

स्वार्थे पुषः ॥ २३ ॥

स्वान्यात्मात्मीयज्ञातिवित्तानि[६]। स्वाभिधेयेषु करणेषूपपदेषु पुषो[७] णम् भवति। स्वेन पोषति[८] पुष्यति पुष्णाति वा। स्वपोषं पोषति। एवम् आत्मपोषम्। आत्मीयपोषम्। गो-

---

१ See note 4 on preceding page.
२ B. om. sûtra 20 and 21 to भवति.
३ हन्तेः करणे Ch.
४ B. om. from मुष्टिना.
५ करणग्राहं A.; कारग्राहं B.
६ स्वान्यात्मीयज्ञाति° A.
७ स्वाभिधेये करणे पुषो B.
८ पोषयति B.

पोषम् । महिषीपोषम् । पितृपोषम् । मातृपोषम् । वित्तपोषम् । रैपोषम् ॥

स्नेहने पिषः(१) ॥ २४ ॥

स्निह्यते सिच्यतेऽनेनेति स्नेहनमुदकादि(२) । स्नेहवाचिनि करण उपपदे पिषो णम् भवति । उदकेन पिनष्टि । उदपेषं पिनष्टि । एवं तैलपेषम् । घृतपेषम् ॥ उदकस्योदः पेषवासवाहनधिषु च निपात्यते ॥

बन्धोऽधिकरणे ॥ २५ ॥

अधिकरणे नाम्न्युपपदे बध्नातेर्णम् भवति । चक्रे बद्धः । चक्रबन्धं बद्धः । गुप्तिबन्धं बद्धः । हस्तबन्धं बद्धः ॥

संज्ञायां च(३) ॥ २६ ॥

अधिकरणेऽनधिकरणे चोपपदे बध्नातेर्णम् भवति संज्ञायां गम्यमानायाम् । क्रौञ्चे क्रौञ्चेन वा बद्धः । क्रौञ्चबन्धं बद्धः ॥ एवं मयूरिकाबन्धम् । अट्टालिकाबन्धम् ॥ बन्धविशेषाणामियं संज्ञा ॥

कर्त्रोर्जीवपुरुषयोर्नशिवहिभ्याम् ॥ २७ ॥

जीवपुरुषयोः कर्त्रोरुपपदयोर्नशिवहिभ्यां णम् भवति यथा-

१ In Chaitr. this sûtra is vârttika on 21.

२ स्निहमुदकादि A.

३ In Chaitr. this sûtra is vârttika on 25.

संख्यम् । जीवनाशं नष्टः । जीवो नष्ट इत्यर्थः ॥ पुरुषवाहं वहति । पुरुषो वहतीत्यर्थः ॥ कर्त्रोरिति किम् । जीवेन नष्टः । पुरुषेणोढः ॥

ऊर्ध्वे शुषिपूरोः ॥ २८ ॥

ऊर्ध्वे कर्तृवाचिन्युपपदे शुषेः पूरेश्च णम् भवति । ऊर्ध्वशोषं शुष्कः । ऊर्ध्वपूरं पूर्णः । ऊर्ध्वः सन्नित्यर्थः ॥
अन्यथाकारं भुङ्क्त इत्यादिषु किमर्थं णमो विधानम् । व्याप्यत्वाद् द्वितीया भविष्यति । यथा । ओदनपाकं शेते ॥ ग्रहेर्न घञिति कर्तव्यमेव ॥ गोष्पदं प्रातीति[1] गोष्पदप्रमिति क्रियाविशेषणत्वात् । तदयुक्तम् । तरां तमां चेष्यतेऽव्ययत्वात् पूर्वकालोऽपि यथाभिधानं प्रतिपाद्य एव । तथा च विकल्पाधिकारे क्वापि दृश्यते । अन्यथाकारं भुज्यत ओदन इति द्वितीया न स्यात् । यथा । ओदनः पक्त्वा भुज्यते । कृदव्ययो हि भावेऽभिधानात् प्रधानशक्त्यभिधाने गुणशक्तिरविहितवत् प्रकाशते ॥

कर्मणि चोपमाने ॥ २९ ॥

कर्तरि कर्मणि[2] चोपमानवाचिन्युपपदे धातोर्णम् भवति । चूडक इव नष्टः । चूडकनाशं नष्टः ॥ कर्मणि च । सुवर्णमिव निहितम् । सुवर्णनिधायं निहितम् । ओदनपाचं पक्वः ॥ उपमान इति किम् । चूडको नष्टः । सुवर्णं निहितम् ॥

---

१ प्रतीति A.　　　२ कर्तृकर्मणि A.

कषादिषु(१) तैरेवानुप्रयोगः ॥ ३० ॥

कषादिषु(१) णमो विषयभूतेषु तैरेव कषादिभिरनुप्रयोगः कर्तव्यो नान्यैरिति । अनुप्रयोगस्य पूर्वकालतामभिदधात्येव । निमूलकाषं कषति ॥ कषादिष्विति किम् । चेलक्नोपं वृष्टो देवः ॥

तृतीयायामुपदंशेः ॥ ३१ ॥

तृतीयान्त उपपद उपपूर्वाद् दन्शेर्णम् भवति । मूलकेनोपदंशं भुङ्क्ते । मूलकादिकरणतया भुजिना युक्तमप्युपदंशिना व्याप्तमित्युपपदं स्यात् । वाधिकाराद् मूलकेनोपदश्य भुङ्क्ते ॥ तृतीयायामिति किम् । मूलकमुपदश्य भुङ्क्ते ॥

हिंसार्थाच्चैककर्मकात् ॥ ३२ ॥

तृतीयान्त उपपदे हिंसार्थाद्धातोरनुप्रयोगेण समानकर्मकाणम् भवति । दण्डेनोपघातं दण्डोपघातं गाः कलयति ॥ एककर्मकादिति किम् । दण्डेनाहत्य भूमिं गोपालको गाः सादयति ॥

सप्तम्यां च प्रमाणासत्त्योः ॥ ३३ ॥

तृतीयान्ते सप्तम्यन्ते चोपपदे धातोर्णम् भवति प्रमाणे गम्यमाने प्रत्यासत्तौ च । संबन्धाविवक्षायां न यथासंख्यम् । द्व्यङ्गुलेनोत्कर्षम् । द्व्यङ्गुल उत्कर्षम् । द्व्यङ्गुलोत्कर्षं गण्डिकां(२) छिनत्ति ॥ केशैर्ग्राहम् । केशेषु ग्राहम् । केशग्राहं युध्यन्ते ॥

---

१ कशादिषु॰ Ch. (throughout श). २ Thus A. B.; दण्डिकां Ch.; खण्डिकां Pâṇ. Sch.

उपपीडरुधकर्षश्च ॥ ३४ ॥

तृतीयान्ते सप्तम्यन्ते चोपपद उपपूर्वेभ्य एभ्यो णम् भवति । पार्श्वाभ्यामुपपीडं । पार्श्वयोरुपपीडं । पार्श्वोपपीडं शेते ॥ व्रजेनोपरोधं । व्रज उपरोधं । व्रजोपरोधं गाः स्थापयति[१] ॥ पाणिनोपकर्षं । पाणावुपकर्षं । पाण्युपकर्षं धाना भक्षयति ॥

अपादाने परीप्सायाम् ॥ ३५ ॥

परि समन्तादाप्तुमिच्छा परीप्सा त्वरेत्यर्थः । अपादान उपपदे धातोर्णम् भवति परीप्सायां गम्यमानायाम् । शय्याया उत्थायं । शय्योत्थायं धावति ॥ रन्ध्रादुपकर्षं । रन्ध्रोपकर्षं पयः पिबति ॥ परीप्सायामिति किम् । आसनादुत्थाय गच्छति ॥

द्वितीयायां च ॥ ३६ ॥

द्वितीयान्ते चोपपदे धातोर्णम् भवति परीप्सायां गम्यमानायाम् । लोष्टं ग्राहं । लोष्टग्राहं[२] युध्यन्ते । एवं नाम त्वरन्ते येनायुधमपि[३] नाद्रियन्ते ॥

स्वाङ्गेऽध्रुवे ॥ ३७ ॥

स्वमङ्गं स्वाङ्गम् । स्वाङ्गसंज्ञकेऽध्रुवे द्वितीयान्त उपपदे धातोर्णम् भवति । भ्रुवौ[४] विक्षेपं । भ्रूविक्षेपं जल्पति ॥ अक्षिणी

१ सद्यति B.; स्थापयति Ch.
२ लोष्ट्रं॰ लोष्ट्र॰ A.; लोष्टानि ग्राहं॰ B.
३ एव एवं नाम त्वरावन्त आयुधमपि A.; एवं नाम योद्धारस्त्वरन्ते यदायुधमपि नाद्रियन्ते Ch.
४ भ्रुवो B.

काणं । अचिकाणं हसति ॥ अध्रुव इति किम् । उत्क्षिप्य शिरः कथयति ॥ यस्मिन्नङ्गे छिन्ने प्राणी न म्रियते तदध्रुवम् ॥

परिक्लिश्यमाने च[१] ॥ ३८ ॥

परि समन्तात् क्लिश्यमाने स्वाङ्गे च द्वितीयान्त उपपदे धातोर्णम् भवति । उरांसि[२] प्रतिपेषं । उरःप्रतिपेषं युध्यन्ते । कृत्स्नमुरः पीडयित्वा युध्यन्त इत्यर्थः ॥

विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः[१] ॥ ३९ ॥

व्याप्यमान आसेव्यमाने च[३] द्वितीयान्त उपपद एभ्यो धातुभ्यो णम् भवति ॥ श्रुतत्वाद् विश्यादिक्रियाभिः साकल्येन द्रव्याणामेव संबन्धो व्याप्तिरीप्सा । अतो द्रव्यस्य द्विर्वचनम् ॥ आसेवा तात्पर्यम् आभीक्ष्ण्यं तच्च क्रियाया एवेति ॥ विश्यादीनां णमन्तानां द्विर्वचनं भवति । गेहं गेहमनुप्रवेशमास्ते । गेहमनुप्रवेशमनुप्रवेशमास्ते ॥ गेहं गेहमनुप्रपातमास्ते । गेहमनुप्रपातमनुप्रपातमास्ते ॥ गेहं गेहमनुप्रपादमास्ते । गेहमनुप्रपादमनुप्रपादमास्ते ॥ गेहं गेहमवस्कन्दमास्ते । गेहमवस्कन्दमवस्कन्दमास्ते ॥ समास एव वीप्साभीक्ष्ण्यार्थमभिधत्ते[४] शब्दशक्तित्वात् । गेहानुप्रवेशम् । गेहानुप्रपातम् । गेहानुप्रपादम् । गेहावस्कन्दमास्ते

---

१ In the Chaitr. sûtras 38 and 39 are vârttikas to 37.

२ उरसि A.

३ व्याप्यमाने च गम्यमाने B.

४ °भीक्ष्ण्यार्थमाचष्टे B.

इति ॥ व्याप्यमानासेव्यमानयोरिति किम् । गेहमनुप्रविश्य भुङ्क्ते ॥ आभीक्ष्ण्ये णम् सिद्ध एव । उपपदसमासविभाषार्थमिदम् ॥

## तृषस्त्रोः(१) क्रियान्तरे कालेषु ॥ ४० ॥

कालेषु द्वितीयान्तेषूपपदेषु क्रियान्तरे गम्यमाने तृष्यस्त्रोर्णम् भवति। द्व्यहं तर्षं । द्व्यहतर्षं गाः पाययति ॥ द्व्यहमभ्यासं । द्व्यहाभ्यासं गाः पाययति । अद्य यत्पानं यच्च द्व्यहेऽतीते भविष्यति तन्मध्यपातिना तर्षणेनाभ्यसनेन(२) च गवां पानक्रिया व्यवधीयते ॥ तृष्यस्त्रोरिति किम् । द्व्यहमुपोष्य भुङ्क्ते ॥ क्रियान्तर इति किम् । अहरभ्यस्येषून् गतः(३) । अभ्यसनेनेषवः कालाश्च(४) व्याप्यन्ते न गतिर्व्यवधीयते ॥ कालेष्विति किम् । योजनमभ्यस्य गाः पाययति ॥ क्रियाग्रहणं सुखार्थम् ॥

## नाम्न्यादिशिग्रहोः ॥ ४१ ॥

नाम्नि स्वरूपे द्वितीयान्त उपपद आदिशेर्ग्रहश्च णम् भवति। नामान्यादेशं । नामादेशं ददाति ॥ नामानि(५) ग्राहम् । नामग्राहमाक्रयति ॥

## कृञोऽव्ययेऽयथेष्टाख्याने क्त्वा च ॥ ४२ ॥

यथेष्टमिति वीप्सायामव्ययीभावः । अव्यय उपपदे कृञो

---

१ तृष्यस्त्रोः Ch.
२ तर्षणाभ्यसनेन A.
३ ०अभ्यस्येन् गतः A.
४ कालश्च A.
५ नामनि B.

णम् भवति क्त्वा च । अयथेष्टाख्याने गम्यमाने । ब्राह्मण पुत्रस्ते जातः । नीचैःकारम् । नीचैःकृत्य । नीचैः कृत्वाचष्टे । उच्चैर्नाम प्रियमाख्येयम् ॥ ब्राह्मण कन्या ते गर्भिणी । किं तर्हि वृषल्युच्चैः-कारम् । उच्चैःकृत्य । उच्चैः कृत्वाचष्टे । नीचैर्नामाप्रियमाख्येयम् ॥ अयथेष्टाख्यान इति किम् । ब्राह्मण पुत्रस्ते जातः । उच्चैः कृत्वाचष्टे ॥ समासविकल्पार्थं क्त्वाग्रहणम् ॥

## तिर्यच्यपवर्गे[१] ॥ ४३ ॥

तिर्यक्शब्द उपपदे कृञो णम् भवति क्त्वा च । अपवर्ग गम्यमाने । तिर्यक्कारं । तिर्यक्कृत्य । तियक्कृत्वा गतः । परिसमाप्य[२] गत इत्यर्थः ॥ अपवर्ग इति किम् । तिर्यक्कृत्वा काष्ठं गतः[३] ॥

## स्वाङ्गे तसि ॥ ४४ ॥

स्वाङ्गसंज्ञके[४] तस्प्रत्ययान्त उपपदे कृञो णम् भवति । सुखतःकारम् । सुखतःकृत्य । सुखतः कृत्वास्ते ॥ स्वाङ्ग इति किम् । सर्वतः कृत्वा गतः । अव्ययाधिकारान्मुखे तस्यतीति मुखतः कृत्वा गत इति ॥

## भुवस्तूष्णीमि च ॥ ४५ ॥

स्वाङ्गे तस्प्रत्ययान्ते तूष्णीम्शब्दे चोपपदे भुवो धातोर्णम्

---

१ In Ch. this sûtra is a vârttika to 42.

२ समाप्य B.

३ A. adds (from Tril.) अनृजु कृत्वा गत इत्यर्थः.

४ स्वाङ्गसंज्ञे B.

भवति क्त्वा च ॥ मुखतोभावम्। मुखतोभूय। मुखतो भूत्वास्ते ॥ तूष्णींभावम्। तूष्णींभूय। तूष्णीं भूत्वास्ते ॥ कथं नानाकारं। नानाकृत्य। नाना कृत्वा भुङ्क्ते ॥ विनाकारं। विनाकृत्य। विना कृत्वा गत इति क्रियाविशेषणमेव। नाम्नां युक्तार्थत्वाद्वा समासः[1]। नाना कृत्वा काष्ठानि गत इति सापेक्षत्वान्न समासः। एवं नानाभावम्। नानाभूय। नाना भूत्वास्ते ॥ विनाभावं। विनाभूय। विना भूत्वा गत इति ॥ तथा। अन्वग्भावम्। अन्वग्भूय। अन्वग् भूत्वास्ते। आनुकूल्य एव समासोऽभिधानात्। तेनान्वग् भूत्वा तिष्ठति शत्रुः[2] ॥

## कर्तरि कृतः ॥ ४६ ॥

कृत्संज्ञकाः प्रत्ययाः कर्तरि[3] वेदितव्याः। करोतीति कर्ता कारकः। पचः। नन्दनः ॥ निराकाङ्क्षेषु वाक्येषु परिभाषेयं शेषभूता वा[4]। ख्युट्करणेनाघ्रातत्वाद्[5] न पाचिकी वृत्तिः ॥

## भावकर्मणोः कृत्यक्तखलर्थाः[6] ॥ ४७ ॥

पूर्वस्यापवादोऽयम्। भावे कर्मणि च कृत्याः क्तः खलर्थाश्च वेदितव्याः। शयितव्यं भवता। भोक्तव्य ओदनो भवता। आसितं भवता। कृतः कटो भवता। ईषदाढ्यंभवं[7] भवता। ईषत्करः

---

१ नानाभूतार्थत्वात् समासो वा B.
२ Ch. adds here a sûtra answering to P. III. 4, 65; cf. notes.
३ कर्तरि कारके A.; B. om. प्रत्ययाः
४ B. om. वा.
५ ख्युटः करणे° B.; °नाघ्रतत्वाद् A.
६ °खलार्थाः Ch.
७ ईषदाढ्यंभावं A

कटो भवता। ईषत्पानं भवता। ईषत्पानः सोमो भवता॥ अर्थादकर्मकेभ्यो भावे सकर्मकेभ्यश्च कर्मणीति॥

## आदिकर्मणि क्तः कर्तरि च ॥ ४८ ॥

आदिक्रियायां यः क्तो विहितः स कर्तरि कारके वेदितव्यो यथाप्राप्तं च। प्रकृतः कटं भवान्। प्रकृतः कटो भवता। प्रसुप्तो भवान्। प्रसुप्तं भवता। प्रशब्द आदिक्रियाद्योतकः। बहूनां क्रियाक्षणानामादिक्रियाक्षणोऽतीत एव। भविष्यति कटे कटशब्दस्तादर्थ्यात्॥

## गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ॥ ४९ ॥

गत्यर्थेभ्योऽकर्मकेभ्यः श्लिषादिभ्यश्च कर्तरि क्तो वेदितव्यः। चकाराद्[1] यथाप्राप्तं च॥ गतो ग्रामं भवान्। प्राप्तो ग्रामं भवान्। गतो ग्रामो भवता। प्राप्तो ग्रामो भवता। गतमनेन। प्राप्तमनेन[2]॥ अकर्मकेभ्यः। शयितो भवान्। शयितं भवता॥ श्लिषादयः सोपसर्गाः सकर्मकाः। श्लिष आलिङ्गनार्थः[3]। आश्लिष्टो गुरुं भवान्। आश्लिष्टो गुरुर्भवता॥ अधिशयितः खट्वां भवान्। अधिशयिता खट्वा भवता॥ उपस्थितो गुरुं भवान्। उपस्थितो गुरुर्भवता॥ उपासितो गुरुं भवान्। उपासितो गुरु-

---

१ Om. A.
२ Om. B.
३ आलिङ्गार्थः A.

र्भवता ॥ वस निवासार्थ एव[1]। अनूषितो गुरुं भवान्। अनूषितो गुरुर्भवता ॥ अनुजातो माणवको माणविकाम्। अनुजाता माणविका माणवकेन॥ आरूढो वृक्षं भवान्। आरूढो वृक्षो भवता ॥ अनुजीर्णो वृषलीं भवान्। अनुजीर्णा वृषली भवता ॥

दाशगोघ्नौ[2] संप्रदाने ॥ ५० ॥

एतौ संप्रदाने निपात्येते ॥ दाशृ दाने। दाशन्ते[3] यस्मै स दाशः। गां हन्ति यस्मा आगताय[3] स गोघ्नो ऽतिथिः। निपातनादचटकौ ॥ अर्घार्हौ[4] ऋत्विगादय एव तद्योग्यतयाप्युच्यन्ते ॥

भीमादयो ऽपादाने ॥ ५१ ॥

एते निपात्यन्ते ऽपादाने। बिभेत्यस्मादिति भीमः। एवं भीष्मः ॥ चरुः। प्रस्कन्दनः। प्रपतनः। समुद्रः। स्रुवः ॥ एत औणादिका व्युत्पत्तिस्तु[5] यथाकथंचित् ॥

ताभ्यामन्यत्रोणादयः[6] ॥ ५२ ॥

ताभ्यां संप्रदानापादानाभ्यामन्यत्र कारक उणादयो भवन्ति। कृत्वादुणादयः कर्तरि प्राप्ताः कर्मादिष्वपि कथ्यन्ते ॥

---

१ Om. A.
२ दासगोघ्नौ Ch.
३ दाशते॰ यस्मा अतिथये A.
४ अर्घार्हा B.
५ व्युत्पत्तिस्तु A.
६ ततोऽन्यत्रोणादयः Ch.

करोतीति कारुः । वातीति वायुः । क्षय्यत इति क्षयिः । तन्यत इति तन्तुः ॥

## क्तोऽधिकरणे ध्रौव्यगतिप्रत्यवसानार्थेभ्यः(१) ॥ ५३ ॥

ध्रुवो निश्चलः स च क्रियाविशेषणम् । तस्य भावो ध्रौव्यम् । अचलात्मकक्रियात्मकत्वाद् ध्रौव्यार्था अकर्मका उच्यन्ते । प्रत्यवसानं भोजनम् ॥ ध्रौव्यार्थेभ्यो गत्यर्थेभ्यः प्रत्यवसानार्थेभ्यश्च क्तो ऽधिकरणे वेदितव्यो यथाप्राप्तं च । इदमेषामासितम् । आसितमेभिः(२) । आसितो भवान् ॥ इदमेषां यातम् । इह तैर्यातम् । ग्रामस्तैर्यातः । ग्रामं ते याताः ॥ अधिकरणं कर्मकर्ता च नोक्तमिति लिङ्गार्थमात्रे प्रथमैव ॥ इदमेषां भुक्तं पीतम् । इह तैर्भुक्त ओदनः पीतं पयः । भोजनार्थात् कर्तर्यपि स्यादिति व्यवहितः पाठः । कथं भुक्ता विप्राः पीता गाव इति । अन्यत्रापीति वचनात् । तद्योगाद् अर्शआदित्वाद्(३) वा । देवश्चेद् वृष्टः संपन्नाः शालय इति शालिहेतवः संपन्ना इत्यतीतता ॥

## युवुझामनाकान्ताः ॥ ५४ ॥

एषां स्थानेऽन अक अन्त इत्येत आदेशा भवन्ति यथासंख्यम्(४) । नन्दनः । पाचकः । गण्डयन्तः । मण्डयन्तः । गण्डि-

---

१ क्तोऽधिकरणे च । ध्रौव्यगतिप्रत्यवहारार्थेभ्य इति वक्तव्यम् Chaitr. vârttika to 52.

२ आसितमनेन B.

३ तद्योगादर्शादित्वाद्वा B.

४ Om. A.

मण्डिजिनन्दिभ्यो[१] झच् ॥ कथं भुज्युः । मृत्युः । भुजिमृङ्भ्यां युक्त्युकावौणादिकस्य बहुलत्वात् कृदधिकाराच्च ॥ ऊर्णाः सन्त्यस्य । ऊर्णायुः ॥

## समासे भाविन्यनञः[२] क्त्वो यप् ॥ ५५ ॥

नञोऽन्यस्याव्ययस्य क्त्वान्तेनैव समासे भाविनि क्त्वाप्रत्ययस्य यबादेशो भवति । प्रणम्य । प्रदीव्य । आपृच्छ्य । अधीत्य । उपेत्य ॥ भाविग्रहणमुपदेशयबर्थमिति तेन पञ्चमोपधाप्रभृतीनां दीर्घादिकं न स्यात् तोऽन्तश्च स्यात्[३] । खाट्कृत्य । कन्यामलंकृत्य । सत्कृत्य । असत्कृत्य । अन्तर्हत्य । कणेहत्य पयः पिबति । मनोहत्य पयः पिबति । तावत्पिबति यावत्तृप्त इत्यर्थः ॥ पुरस्कृत्य । अस्तंकृत्य । अच्छगत्य । अच्छग्रज्य । अच्छोद्य । अदःकृत्य चिन्तयति । तिरोभूय । तिरस्कृत्य । उपाजेकृत्य । अन्वाजेकृत्य । साचात्कृत्य । मध्येकृत्य । पदेकृत्य । निवचनेकृत्य । उरसिकृत्य । मनसिकृत्य । हस्तेकृत्य । पाणौकृत्य । प्राध्वंकृत्य । उपनिषत्कृत्य । जीविकाकृत्य ॥ अनुकरणं च कृता भूषणादरानादरेष्वलं सदसत् । अग्रहणेऽन्तर् । हस्तौ च कणेमनसी[४] । पुरोऽस्तं च । अच्छ च गत्यर्थवदिभिः । अनुपदेशेऽदस्[५] । तिरोऽन्तर्धौ स तिरस् । उपाजेऽन्वाजे । साचात्प्रभृतीनि च कृञा वा । मध्ये पदे

---

१ गण्डिमण्डिभ्यां A.; cf. Kâ. iv. 1, 37, Vṛitti.

२ भाविन्यञः A. and orig. Ch.

३ पञ्चमोपधायाः प्रभृतीनां दीर्घादयो न स्युस्तो° A.

४ करणेमनसी A.

५ गत्यर्थवद्भिः । अनुदेशे° A.



निवचने। अनत्याधान उरसिमनसी। नित्यं हस्ते पाणावुद्वाहे। बन्धने प्राध्वम्। उपनिषदौपम्ये जीविका च। पूर्वं समस्तास्तु॥ समास इति किम्। तिरः कृत्वा। उपाजे कृत्वा॥ अनञ इति किम्। अकृत्वा॥ पर्युदासोऽयम्। तेन ससंख्यान्न स्यात्। परमकृत्वा॥

## चजोः कगौ धुड्घानुबन्धयोः॥ ५६॥

चजोः कगौ भवतः। धुटि घानुबन्धे च प्रत्यये परे। निमित्तेन तु संबन्धस्याविवक्षितत्वान्न यथासंख्यम्। पक्ता। भोक्ता। पाकः। भोगः॥ रुग्नः। भुग्न इति नित्यमपि नत्वं बाधित्वाऽन्तरङ्गत्वाच्च वर्गस्य किरस्ति॥ अघानुबन्धे कृति व्यावृत्तिः स्यादिति धुड्ग्रहणम्॥

## न्यङ्क्वादीनां हश्च घः॥ ५७॥

न्यङ्कु। इत्येवमादीनां चजोः कगौ भवतः। हश्च घो भवति॥ नावञ्चेरुः। न्यङ्कुः॥ भृमृतृचरित्सरितनिमस्जिशीङ्भ्य उः। मद्गुः॥ प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च। भृगुः॥ स्फायितञ्चिवञ्चीत्यादे(१) रक्। तक्रम्। वक्रम्॥ असुन्। उच्यतेऽस्मिन्निति। ओकः॥ व्यतिषङ्गः। अवसर्गः। सञ्जेः सृजेश्च॥ पचाद्यच्। श्वपाकः। मांसपाकः(२)। कपोतपाकः। उलूकपाकः। कर्मण्यन्। दूरे पच्यते स्वयमेव। फले पच्यते स्वयमेव। पचा-

---

१ स्फायी० A.

२ मांसपापः A.

घच् । गणनिपातनादुपधाया दीर्घत्वं सन्नम्यास्त्वालुक् । दूरेपाकः । फलेपाकः । चणेपाक इति केचित् ॥ मेहतीत्यच् । मेघो जलद एव ॥ अवदाघः । निदाघः ॥ अर्हतेः । अर्घः ॥ घञि संज्ञायाम् । अन्यत्रावदाहः । निदाहः । अर्हः ॥

## न कवर्गादिव्रज्यजाम् ॥ ५८ ॥

कवर्गादेर्व्रजेरजेश्च चजोः कगौ न भवतः । कूजः । खर्जः । गर्जः । परिव्राजः(1) । उद्राजः । आज्यं घृतम्(2) ॥

वञ्चेर्गताविति वक्तव्यम्(3) । वञ्च्यत इति वञ्च्यं गता वणिजः । गन्तव्यं गता इत्यर्थः ॥ गताविति किम् । वङ्क्यं काष्ठम् । वञ्चिरत्र कौटिल्ये ॥

## ण्यण्यावश्यके ॥ ५९ ॥

अवश्यंभावे गम्यमाने घ्यणि चजोः कगौ न भवतः । अवश्यपाच्यम् । अवश्यभोज्यम् ॥ आवश्यक इति किम् । पाक्य ओदनः ॥

## प्रवचर्चिरुचियाचित्यजाम्(4) ॥ ६० ॥

अनावश्यकार्थं वचनम् । एषां चजोः कगौ न भवतः । घ्यणि परे । प्रवाच्यः पाठविशेषः । तद्वान् ग्रन्थोऽप्युच्यत इति शब्दवि-

---

१ प्रव्राजः B.

२ अच्युघृतं B.

३ वञ्चेर्गतौ । is apparently a sûtra in the Chaitr.; cf. P. vii. 3, 63.

४ प्रवचर्चिरुचियाचियजिभ्यः and Vârtt. त्यजेश्चेति वक्तव्यम् Ch.; [thus also P. vii. 3, 66, and Vârtt.].

षयता ॥ ऋच स्तुतौ । अर्च्यः ॥ रोच्यः । याच्यः । त्याज्यः ॥ कथं शोच्यः । हेलिनन्तत्वात् ॥

## वचोऽशब्दे ॥ ६१ ॥

वचेर्घ्यणि को न भवति । अशब्दविषये । वाच्यम् ॥ अशब्द इति किम् । वाक्यं पदसमुदायः ॥ वक्रवाक्यरचनारमणीय इत्यपि स्यात् ॥

## निप्राभ्यां युजः शक्ये ॥ ६२ ॥

निप्राभ्यां परस्य[1] युजः शक्येऽर्थे घ्यणि गो न भवति । नियोक्तुं शक्यः[1] । नियोज्यो भृत्यः । एवं प्रयोज्यः ॥ शक्य इति किम् । नियोक्तुमर्हति । नियोग्यः । प्रयोग्यः प्रभुः ॥

## भुजोऽन्ने ॥ ६३ ॥

भुजो भक्षेऽर्थे घ्यणि गो न भवति । भोज्यमन्नम् । भोज्यं पयः ॥ अन्न इति किम् । भोग्यः कम्बलः[2] । भोग्या भूः ॥

## भुजन्युब्जौ पाणिरोगयोः ॥ ६४ ॥

भुजन्युब्जौ घञन्तौ पाणिरोगयोरर्थयोर्यथासंख्यं निपात्येते । भुज्यतेऽनेनेति भुजः पाणिः । न्युब्जितः शेतेऽस्मिन्निति न्युब्जो रोगविशेषः ।[3] व्यञ्जनाच्च [का० ४. ५. ८८] इति घञ् ॥ पाणिरोगयोरिति किम् । भोगः । न्युद्गः । गत्वे दोपध इष्यते ॥

---

१ निप्राभ्यां युजः ०शक्यं A.
२ कटः B.
३ रोगः । A.; ०व्यञ्जस्य घञ ।० B.

दृग्दृशदृक्षेषु समानस्य सः ॥ ६५ ॥

समानस्य दृगादिषु सो भवति । वचनात् क्विप्टक्सकः ॥ सदृक् । सदृशः । सदृक्षः ॥ योगविभागात् पक्षादिषु च । सपक्षः । सज्योतिः । इत्यादि यथेष्टं समासः । पक्ष । ज्योतिः । जनपद । रात्रि । नाभि । बन्धु । पत्नी ॥ रूपादौ वा । समानो रूपः । सरूपः । रूप । नाम[1] । गोत्र । स्थान । वर्ण । वयः[2] । धर्म । जातीय । उदर । उदर्य ॥ सब्रह्मचारीति नित्यम् ॥

इदमी ॥ ६६ ॥

इदम् दृगादिष्वीर्भवति । ईदृक् । ईदृशः । ईदृक्षः । अभेदबलात्[3] सर्वस्य ॥

किम् की ॥ ६७ ॥

किम् दृगादिषु कीर्भवति । कीदृक् । कीदृशः । कीदृक्षः ॥ इदं किं परिमाणमस्य । इयान् । कियान् । सद्यश्चाद्यलात् ॥

अदोऽमूः[4] ॥ ६८ ॥

अदो दृगादिष्वमूर्भवति । अमूदृक् । अमूदृशः । अमूदृक्षः ॥ केचिद् अमूकादृक् । अमूकादृशः । अमूकादृक्ष इति तदायत्त एव[5] ॥

---

१ रूपनामनब्रह्मन् B.
२ वयसः.
३ अभेवचनात् (!) B.
४ अदसोऽमूः Ch.
५ तदयत्त एव Tril.

आ सर्वनाम्नः ॥ ६९ ॥

सर्वनाम्नो दृगादिष्वा भवति । तादृक् । तादृशः । तादृक्षः ॥ भवादृगित्यन्तरङ्गत्वान्नलोपः ॥ अन्यादृगिति सर्वनाम्न इति वचनादन्यशब्दादपि दृशः क्विप्टक्सगिति ॥ यत्तदेतत् परिमाणमस्य । यावान् । तावान् । एतावान् । इति सद्यआद्यत्वात् । परिमाणे वन्तुवात्वं चेति ॥

विष्वग्देवयोश्चान्त्यस्वरादेरद्र्यञ्चतौ[1] क्वौ ॥ ७० ॥

विष्वग्देवयोः[1] सर्वनाम्नश्चान्त्यस्वरादेरवयवस्याञ्चतौ क्विबन्ते परेऽद्रिरादेशो भवति । विष्वगञ्चतीति विष्वद्र्यङ् । देवद्र्यङ् ॥ यद्र्यङ् । तद्र्यङ् । सर्वद्र्यङ् । अद्र्यङ् । अमुद्र्यङ् ॥

सहसंतिरसां सध्रिसमितिरयः ॥ ७१ ॥

एषां सध्रि समि तिरि । इत्येत आदेशा यथासंख्यं भवन्ति । अञ्चतौ क्विबन्ते । सहाञ्चतीति सध्र्यङ् । समञ्चतीति सम्यङ् । तिरोऽञ्चतीति तिर्यङ् ॥

रुहेर्धो वा ॥ ७२ ॥

रुहेर्धो भवति वा क्वौ परे । विरोहतीति वीरुत् । वीरुधौ । वीरुट् । वीरुहौ । वेर्ह्रस्वस्य दीर्घता ॥ व्यवस्थितविभाषया विपूर्वस्यैव । तेन भूरुट् । भूरुहौ ॥

---

१ विश्वग्देव° A.; विस्व° B.

मो नो धातोः ॥ ७३ ॥

धातोर्मकारस्य नकारो[1] भवति क्वौ परे । शमु । प्रशान् ॥ तमु । प्रतान् ॥ नोऽदन्त इत्यस्य च लोपः । क्वौ स्थानिवद्भावा-ल्लिङ्गान्तनकारस्य नलोपो न स्यात् ॥ धातुग्रहणं वानिवृत्त्यर्थम् ॥

वमोश्च ॥ ७४ ॥

वमोश्च परयोर्धातोर्मो नो भवति । जगन्वान् । गन्मा । सर्वधातुभ्यो मन् ॥

स्वरे धातुरनात् ॥ ७५ ॥

नकारान्तः स्वरे परे धातुरेव भवति । अनात् । आकारो[2] न निवर्तत इत्यर्थः । प्रशामौ । प्रतामौ । जग्मुषः । जग्मुषी ॥ तदाश्रित एव स्वरे । तेन प्रशानचेति ॥ स्वर इति किम् । प्रशा-न्भ्याम् ॥ ये चेष्यते । प्रशाममिच्छति । प्रशाम्यति । प्रशामे[3] हितम् । प्रशाम्यम् ॥

अर्तीण्घसैकस्वरातामिड् वन्सौ ॥ ७६ ॥

अर्तीण्घसैकस्वरादन्तानामेव वन्साविड् भवत्यादिः ॥ स्था-दिनियमेन परोक्षावद्भावादिट् सिद्धो नियम्यते [का० ३. ७. ३५]॥ आरिवान् । ईयिवान् । जक्षिवान् । आदिवान् । पेचिवान् । ददिवान् । पपिवान् ॥ दरिद्रांचकृवानित्यामा भाव्यम् ॥ अत्यौ-

१ नो A.
२ आरो A.
३ प्रशामो A. [अनात् viz. not प्रशा-मौ].

दिग्रहणादेव[1] वन्सौ द्विर्वचने सत्येकस्वरा ग्रहीतव्या नैकत्वं वचनादिण:[2] ॥ एषामिति किम् । बभज्वान् । जजागर्वान् ॥

गमहनविदविशदृशां वा ॥ ७७ ॥

अप्राप्ते विभाषेयम्[3] । एषां वन्सावीड् वा भवति । जग्मिवान् । जगन्वान् । जघ्निवान् । जघन्वान् । विविदिवान् । विविद्वान् । बहुभि: सविकरणै:[4] साहचर्याल्लाभार्थस्य विदेर्ग्रहणम् ॥ विविशिवान् ॥ विविश्वान् । ददृशिवान् । ददृश्वान् ॥

दाश्वान् साह्वान् मीढ्वांश्च[5] ॥ ७८ ॥

एते निपात्यन्ते ।

द्विर्वचनमनिट्त्वं च सहेर्दीर्घो मिहेरपि ।
ढत्वं च खलु तन्त्रत्वात् सर्वाणि वचनानि च ॥

न श्र्युवर्णवृतां कानुबन्धे ॥ ७९ ॥

श्रयतेरुवर्णान्तस्य वृञ्वृङोर्ऋकारान्तस्य च कानुबन्धे सार्वधातुके नेड् भवति । श्रित: । श्रितवान् । श्रित्वा ॥ युत: । युतवान् । युत्वा ॥ रुत: । रुतवान् । रुत्वा ॥ लून: । लूनवान् । लूत्वा ॥ वृत: । वृतवान् । वृत्वा ॥ कीर्ण: । कीर्णवान् । कीर्त्वा ॥ वचनाद् विकृते[6]ऽपि स्यात् । शेश्रियित: । लोलुवित इति सिद्धये ॥

---

१ अर्थादिग्रहणेनैव A.
२ वचनदिण: B.
३ विभासायां B.
४ सविकरणै B.
५ मिढ्वांश्च B.
६ वचनादिविकृते B.

एकस्वरमनुवर्तयन्त्यन्ये। तेषाम् ऊर्णोतेर्वक्तव्यमेव। प्रोर्णुतः। प्रोर्णुतवान्॥

## घोषवत्योश्च कृति॥ ८०॥

घोषवति तौ च कृत्संज्ञके नेड् भवति। ईश्वरः। दीप्रः। ग्रर्मा। दीप्तिः। जागर्तिः। वृद्धिः॥ तिक् च। तन्तिः। सन्तिः॥ कथं निगृहीतिः। निपठितिः। निकुचितिः। आलोचितिः। उपस्निहितिः। मण्डूकप्लुतिवाधिकाराद् ग्रहादेरिड् भवति॥ अपचितिरिति पूजायां निष्कृतौ च॥ कथं ग्रस्तम्। आगमस्यानित्यत्वात्॥ पक्वमिति युग्यं पक्वे [का° ४. २. २२] इति वचनात्॥

## वेषुसहलुभरुषरिषां ति(१)॥ ८१॥

एषां तकारादावसार्वधातुक इड् भवति वा(२)। एष्टा। एषिता॥ सोढा। सहिता॥ लोब्धा। लोभिता॥ रोष्टा। रोषिता॥ रेष्टा। रेषिता॥ उदनुबन्धः किम्। इष गतौ। आभीक्ष्ण्य एषिता नित्यम्॥

## रधादिभ्यश्च(३)॥ ८२॥

तीति न वर्तते पृथग्वचनात्॥ टानुबन्धलिङ्गाद् रधादिभ्यश्च परस्यासार्वधातुकस्य व्यञ्जनादेरयकारादेरिड् भवति वा(४)।

---

१ वेपुसहरुहलुभविशरुषान्ति। Ch.
२ नेड् भवति वा B.; वा प्राप्ते विभाषा। एष्टा° A.
३ Ch. om. sûtras 82 and 83, but has the following after 90: उदनुबन्धरधादिभ्यः सूक्त्य।
४ नेड् भवति वा B.; A. om. वा.

रत्स्यति । रधिष्यति ॥ नङ्क्ष्यति । नशिष्यति ॥ आत्वत्करणं रधादिः । ररन्धिव । ररन्धिम[१] । इति स्वादिनियमान्नित्यमिट् ॥

## स्वरतिसूतिसूयत्यूदनुबन्धात्[२] ॥ ८३ ॥

स्वरतेः सूतेः सूयतेरूदनुबन्धाच्च परस्यासार्वधातुकस्य व्यञ्जनादेरयकारादेरादिरिड् भवति वा । स्वर्ता । स्वरिता ॥ सोता । सविता ॥ सुवतेस्तु नित्यम् । सविता ॥ निगोढा । निगूहिता ॥ विधोता । विधवितेति धुञा धूञा च सिद्धम् ॥ स्वरिष्यतीति परत्वाद्विकल्पो न स्याद् व्यवस्थितवावचनात् ॥ तथा स्वृसूङोस्य कानुबन्धे नित्यं स्यात् । स्वृत्वा । सूत्वेति ॥ अपतिनिष्कुषोरिति [का० ४. ६. ९०] वचनाद्[३] निष्कुषोर्वेडस्तीति गम्यते ॥ असार्वधातुकस्य व्यञ्जनादेरयकारादेरिति निष्कोष्टा । निष्कोषिता ॥

## उदनुबन्धपूक्लिशां[४] क्त्वि ॥ ८४ ॥

उदनुबन्धात् पुवः क्लिशस्य[५] क्त्वीड् भवति वा । शमु । शान्त्वा । शमित्वा ॥ पूङ् पूञ् वा । पूत्वा । पवित्वा ॥ क्लिष्ट्वा । क्लिशित्वा ॥ ऊदनुबन्धस्य क्लिशस्य[६] प्राप्ते विभाषा । पुवः कानुबन्धेऽप्राप्त एव[६] ॥

---

१ ररम A.
२ See note 3 on preceding page.
३ प्रतिषेधात् B.
४ उदनुबन्धपूङ्क्लिषां Ch.
५ क्लिशेस्य A.
६ क्लिशेस्य ॰एवेति । B.

जॄव्रश्च्योः क्त्वि ॥ ८५ ॥

जॄव्रश्चिभ्यां क्त्वा इड् भवति । जरित्वा । जरीत्वा[1] । व्रश्चित्वा ॥ लाक्षणिकत्वाद् जॄष जीर्त्वा । व्रश्चेर्वचनान्नित्यमिडिति ॥ पुनरिड्ग्रहणमुत्तरत्र वानिवृत्त्यर्थम्[2] ॥

लुभो विमोहने[3] ॥ ८६ ॥

विमोहने लुभः क्त्वा इड् भवति । लुभित्वा ॥ गार्ध्ये तु । लुब्ध्वा । लुभित्वा ॥

क्षुधिवसोश्च[4] ॥ ८७ ॥

चकारेण लुभो विमोहन इत्यनुकृष्यत उत्तरार्थम् । क्षुधिवसोश्च[5] क्त्वा इड् भवति । क्षुधित्वा । उषित्वा । प्रतिषेधबाधकमिदम् ॥

निष्ठायां च ॥ ८८ ॥

क्षुधिवसिभ्यां विमोहने लुभश्च निष्ठायामिड् भवति[5] । क्षुधितः । क्षुधितवान् । उषितः । उषितवान् । लुभितः । लुभितवान् ॥ गार्ध्ये व्यावृत्त्या विभाषापि बाध्यते । लुब्धः । लुब्धवान् ॥

पूङ्क्लिशोर्वा[6] ॥ ८९ ॥

पुवः क्लिशश्च निष्ठायामिड् भवति वा । पवितः । पवितवान् ।

---

१ °भवति वा । जरित्वा जीर्त्वा A.
२ °उत्तरत्रमित्यार्थम् B.
३ Chaitr. om. this sûtra.
४ क्षुधिवशोश्च Ch.
५ B. om. from क्षुधिवसोश्च क्त्वा इड् to लुभश्च निष्ठायामिड् भवति.
६ पूङ्क्लिषोर्वा Ch.

पूतः। पूतवान्॥ क्लिश क्लिशू। क्लिशितः। क्लिशितवान्। क्लिष्टः। क्लिष्टवान्॥

## न डीश्वीदनुबन्धवेटामपतिनिष्कुषोः[1] ॥ ९० ॥

एभ्यो धातुभ्यः पतिनिष्कुषवर्जितेभ्यो[2] निष्ठायां नेड् भवति। उड्डीनः। उड्डीनवान्॥ श्वूनः। श्वूनवान्॥ दीपी। दीप्तः। दीप्तवान्॥ ओलस्जी। लग्नः। लग्नवान्॥ लस्जेरोदनुबन्धबलादिडभावे नत्वं स्याच्चेद् ईदनुबन्धः किम्। सविकल्पकं वा ज्ञापकं स्यादिति। तथा डी श्वी च कर्तव्यौ॥ विकल्पेटां च। गुहू। गूढः। गूढवान्॥ शमु। शान्तः। शान्तवान्॥ अपतिनिष्कुषोरिति किम्। पतितः। पतितवान्[3]। निष्कुषितः। निष्कुषितवान्॥ कथं दरिद्रितः। दरिद्रितवान्। एकस्वरोऽत्र स्मर्तव्यः। अपतिनिष्कुषोरिति पर्युदासाद् वा[4]॥

## आदनुबन्धाच्च ॥ ९१ ॥

आदनुबन्धाच्च धातोर्निष्ठायां[5] नेड् भवति। ञिमिदा। मिन्नः। मिन्नवान्॥ ञिक्ष्विदा। क्ष्विण्णः। क्ष्विण्णवान्॥ चकारोऽनुक्तसमुच्चयार्थः। तेन जपिवमिभ्यां वा[6]। जप्तः। जपितः। वान्तः। वमितः॥ व्याङ्भ्यां श्वसः[6]। विश्वस्तः। विश्वसितः।

---

१ °वेटामवेत्तिनिष्कुषोः। Ch.

२ पतिनिष्कुषिवर्जितेभ्यो B.

३ अवेत्तिनिष्कुषोरिति किं विदितः विदितवान् Ch.

४ For another sûtra in Ch. see p. 449, note 3.

५ B. adds परतो.

६ In Ch. जपिवमिभ्यां चेति वक्तव्यम् and व्याङः श्वस इति° are vârttikas to 92.

आश्वस्तः । आश्वसितः ॥ कर्तरि कर्मणि चायं प्रतिषेधः । भावादिकर्मणोर्वेति वक्ष्यति ॥

भावादिकर्मणोर्वा ॥ ८२ ॥

आदनुबन्धाद्धातोर्भाव आदिक्रियायां च निष्ठायामिड् भवति वा । भिन्नं मेदितमनेन । प्रभिन्नः प्रमेदितो भवान्(१) । वेट्त्वात् सिद्धो(२) योगविभागो ज्ञापयति यदर्थस्य विभाषा तदर्थस्यैव(३) प्रतिषेध इति । तेन गमहनविदविशदृशां वा [का० ४. ६. ७७] इति साहचर्याल्लाभार्थस्य विदेर्ग्रहणे ज्ञानार्थस्य प्रतिषेधो न स्यात् । विदितः । विदितवान् ॥

क्षुभिवाहिस्वनिध्वनिफणिकषिघुषां(४) क्ते नेड् मन्थभृशमनस्तमोऽनायासकृच्छ्राविशब्देषु(५) ॥ ८३ ॥

एभ्यो मन्थादिष्वर्थेषु क्ते नेड् भवति यथासंख्यम् । क्षुब्धो मन्थः । चलितो मन्थ इत्यर्थः । मन्थ इति द्रवद्रव्यालोडिताः(६) सक्तव उच्यन्ते ॥ वाहृ प्रयत्ने । वाढं भृशम् । अत्रात्यन्तातिशयो ऽभ्युपगमस्य गृह्यते । न तु शीघ्रार्थः ॥ स्वान्तं मनः । वाह्येष्वविक्षिप्तमित्यर्थः(७) ॥ ध्वान्तं तमः ॥ फण गतौ । फाण्टम् । अना-

---

१ भवता A.
२ सिद्धे B.
३ यदर्थस्यैव विकल्पस्तदर्थस्य B.
४ °कशिघुषां Ch.
५ मन्थभूषमन° Ch.; °तमोनायासकृच्छ्रा° A.; °तमो ऽनयोः सक्रिच्छ्राविशब्देषु B.
६ द्रवद्रव्यानोति द्रव्यालोतिता B.
७ वाह्येष्वविवचित्त° A.

यासनिर्यातत्वात् सद्यो भिषजोद्धृतौषधं द्रवद्रव्यमेवेष्यते ॥ कष ग्निष। कष्टोऽग्निः। कष्टः पर्वतः। कृच्छ्रहेतुत्वात् कृच्छ्रं गहनमप्युच्यते। कृच्छ्रं दुःखम्। सति मुख्ये गौणेऽप्यभिधानम् ॥ घुषिरशब्द इति भ्वादौ। घुष्टा रज्जुः। घुष्टं शरीरम्। घुषिरविशब्दन इति चुरादौ विशब्दने तु स्यादिट्। अवघुषितं वाक्यमाह। विशब्दन इति प्रतिषेधाच्चुरादाविन् स्याद् विभाषयेति तेनेदं सिद्धम्। महीपालवचः श्रुत्वा जुघुषुः पुष्यमानवाः। अनेकार्थत्वाद् भौवादिक एव वा विशब्दनेऽपि। स्वाभिप्रायं शब्देनाविष्कृतवन्त इत्यर्थः ॥ मन्थादिष्विति किम्। क्षुभितः। वाहितः। स्वनितः। ध्वनितः। फणितः। कषितः। घुषितः[१] ॥ तथा भिन्नाधिकरणेऽपि। क्षुभितं मन्थेन। वाहितं भ्रंशेन। स्वनितं मनसा। ध्वनितं तमसा। फणितमनायासेन। कषितं कृच्छ्रेण। घुषितं शरीरेण ॥ कथम् उद्घुष्टं कोकिलयेति प्रकृत्यर्थविशेषणात् ॥ कथं क्षुब्धः समुद्र इत्युपमानाद्भविष्यति ॥

## लग्नक्लिष्टविरिब्धाः सक्ताविस्पष्टस्वरेषु[२] ॥ ८४ ॥

लग्नादयः क्तान्ताः सक्तादिष्वर्थेषु[३] यथासंख्यं निपात्यन्ते। लगे। लग्नं सक्तम्[४]। लगितमन्यत् ॥ क्लिश। क्लिष्टम् अविस्पष्टम्। क्लेशितमन्यत् ॥ रेभृ। विरिब्धः स्वरः। स्वरो ध्वनिरत्र।

---

१ संघुषितः B.

२ शक्तावि° A.; शक्ताविः° Ch.; °विप्पष्ट° A. Ch.

३ शक्तादि° A. B. Ch.

४ शक्तं A. Ch.

विरेभितमन्यत् । अन्ये तु विरिभितमिति प्रत्युदाहरन्ति रिभिं सौत्रं धातुं मत्वेति ॥ धृष्टो विशस्तः । धृषेरादनुबन्धात् । शसो-ऽप्योदनुबन्धाद् वेडिति प्रतिषेधः प्रागल्भ्य एव रूढः । अन्यो ध-र्षितः । विशसित इत्यभिधानान्नञो ऽनित्यत्वाद् वा ॥

परिवृढदृढौ प्रभुबलवतोः[१] ॥ ८५ ॥

एतौ प्रभुबलवतोरर्थयोर्यथासंख्यं निपात्येते । परिपूर्वस्य वृंहेरिड्भावो नलोपश्च । तथा दृंहेश्च । वृहदृहौ प्रकृत्यन्तरे तयोरपीत्येके[२] । परिवृढः प्रभुः । दृढो बलवान् । स्थूलो ऽपि[३] । दृढो बलवानेवाभिधीयते ॥ कथं परिवृढय्य गतः । परिवृढादिन् समासाभावाद् यव् न स्यात् । सत्यम् । तत्करो-तीति[४] सिद्धे संग्रामयुद्ध इति गणपाठो[५] ज्ञापयति । नामसमा-न्नादिन् ॥ अपचायितः । अपचित इति चायिना चिञा च[६] पूजावृत्तिना सिद्धम् ॥ कथं वृत्तं पारायणं[७] विप्रेण । वृत्तो गुणश्छात्त्रेणेति । अन्तर्भूते ऽनर्थवृत्तेर्भविष्यति[८] । इनन्तस्यापि । वर्तितो गुणो ऽनेनेति भवितव्यमिति मतम्[९] । अन्ये त्विनो[१०] ऽध्ययने वृत्तमिति निपातयन्ति ॥

---

१ प्रभुबलतोः in text and com. A.
२ प्रकृत्यन्तरौ तयोरित्यन्ये B.
३ Ch. has a vârttika स्थूले चेति व-क्तव्यम्.
४ B. om. तत्.
५ Om. A.
६ प्रपचित° चिनोतिना च B.; in Ch. अपचित इत्युपसंख्यानं क-र्तव्यं is vârtt. on 100.
७ परायणं A.
८ °वृत्तेर्वृत्तेर्भविष्यति B.
९ मतं वररुचेः Tril.; वृत्तो ऽध्य-यने is vârtt. in Ch. on 100.
१० अन्ये इणो A. (P. VII. 2, 26.)

संनिविभ्योऽर्देः ॥ ९६ ॥

संनिविभ्यः परस्यार्दतेः क्ते नेड् भवति । समर्णः । न्यर्णः । व्यर्णः ॥ निष्ठायामनिपातेष्वित्यन्ये ॥

सामीप्येऽभेः ॥ ९७ ॥

अभेः परस्यार्दतेः क्ते नेड् भवति सामीप्येऽर्थे । अभ्यर्णा सेना । सामीप्य इत्यर्थः[1] ॥ अनतिदूर इत्येकेऽभिधानात् ॥

वा रुषमत्वरसंघुषास्वनाम्[2] ॥ ९८ ॥

एभ्यः क्ते नेड्[3] भवति वा । रुष्टः । रुषितः । वेषुसहलुभरुषेत्यादिना वेट्त्वात् प्रतिषेधः प्राप्तः ॥ अम गतौ न त्वम रोग इनन्तत्वात् । अभ्यान्तः । अभ्यमितः ॥ तूर्णः । त्वरितः । आदनुबन्धाच्चेति प्रतिषेधः प्राप्तः ॥ संघुष्टं । संघुषितं वाक्यमाह ॥ संघुष्टौ । संघुषितौ दम्यौ ॥ संपूर्वो घुषिरविशब्दनेऽपि परत्वादयमेव ॥ आङ्पूर्वस्य स्वन । आस्वान्तः । आस्वनितो मृदङ्गः । आस्वान्तं । आस्वनितं मनः । परत्वान्मनोऽभिधानेऽप्ययमेव ॥

हृषेर्लोमसु ॥ ९९ ॥

लोमसु वर्तमानाद् हृषेः क्ते नेड् भवति वा । हृष्टानि । हृषितानि लोमानि ॥ हृष्टं । हृषितं लोमभिः ॥ हृष्टाः । हृषिताः केशाः ॥ हृषु अलीके इत्युदनुबन्धत्वाद्[4] निष्ठायामनिट् ॥ हृष

१ समीपेत्यर्थः B.
२ अस for अम Ch. [अभ्यस्तः । अभ्यसितः].
३ क्ते इड् A.
४ इत्यूदनु° B.; इत्यस्य तदनु° A.

तुष्टावित्ययं तु सेट् । उभयोरपि विभाषेयम् ॥ लोमान्यङ्गजानि मूर्धजानि च गृह्यन्ते । यथा लोम नखं स्पृष्ट्वा शौचं कर्तव्यमिति ॥ हृषिर्लोमसु वर्तमानो लोमकर्तृक एव ॥ लोमस्विति किम् । हृष्टस्क्रान्त इत्यलीकार्थस्य[१] । हृषितस्क्रान्त इति तुष्टार्थस्य ॥ लोमस्वित्युपलक्षणं विस्मयप्रतिघातयोर्वा स्यात्[२] । हृष्टो हृषितस्क्रान्तः । विस्मित इत्यर्थः ॥ हृष्टा हृषिता दन्ताः । प्रतिहता इत्यर्थः ॥

## दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताश्चेनन्ताः[३] ॥ १०० ॥

एत इनन्ता वा निपात्यन्ते[४] । दान्तः । दमितः ॥ शान्तः । शमितः ॥ पूरी दैवादिकश्चौरादिकश्च । पूर्णः । पूरितः ॥ दसु । दस्तः । दासितः[५] ॥ स्पष्टः । स्पाशितः[६] ॥ छद खट्ट संवरणे । छन्नः । छादितः[६] ॥ मारणतोषणनिशामनेषु ज्ञा मानुबन्धश्च । ज्ञप्तः । ज्ञपितः । इट्प्रतिषेध इनो लुग् निपात्यते । ज्ञपेर्वेट्त्वाद् नित्यं प्रतिषेधे प्राप्ते ॥

## रान्निष्ठातो नोऽपूमूर्छिमदिख्याध्याभ्यः[७] ॥ १०१ ॥

रेफात्परस्य निष्ठातकारस्य नकारो भवति । न तु पूमूर्छि-

१ हृष्ट एवेत्यालीकार्थस्य B.
२ विस्मितप्रतिघातयोरिति वक्तव्यम् Ch. (P. VII. 2, 29, V.)
३ वा. दान्तशान्तपूर्णदष्टस्पष्टछन्नज्ञप्ताः ॥ Ch.
४ A. om. वा.
५ दष्टः दंशितः Ch.
६ स्पशितः॰ छदितः Ch.
७ ॰ख्याध्यः Ch.

मदिख्याध्याभ्यः । शीर्णः । शीर्णवान् ॥ गुरी । अवगूर्णः । अवगूर्णवान्[1] ॥ यदि रश्रुतिरपि स्यात्कृतमिति न नत्वम् ऋकारावयवेन व्यवधानात् । चरितमित्यत्र निष्ठावयवेनेटा व्यवधानात् । कृतस्यापत्यं कार्त्तिरित्यसिद्धं बहिरङ्गमन्तरङ्ग इति ॥ प्रतिषेधः किम् । पॄ । पूर्तः ॥ मूर्छा । मूर्तः ॥ मदिख्याध्याभ्यः पराभ्यां प्राप्ते[2] । मत्तः । ख्यातः । ध्यातः ॥

## दाद् दस्य च ॥ १०२ ॥

दकारात्परस्य निष्ठातकारस्य नकारो भवति दकारस्य च[3] । भिन्नः । भिन्नवान् ॥

## आतोऽन्तःस्थासंयुक्तात् ॥ १०३ ॥

अन्तःस्थासंयुक्तादाकारात्परस्य निष्ठातकारस्य नकारो भवति । ग्लानः । ग्लानवान् । विश्राणः । विश्राणवान् । स्त्यानः । स्त्यानवान् ॥ धात्वधिकात् । निर्यातः । निर्यातवान् ॥

## ल्वाद्योदनुबन्धाच्च ॥ १०४ ॥

लूञादिभ्य ओदनुबन्धेभ्यश्च परस्य निष्ठातकारस्य नकारो भवति । लूञ् । लूनः । लूनवान् ॥ ज्या । जीनः । जीनवान् ॥ रुजो । रुग्णः । रुग्णवान् ॥ भुजो । भुग्नः । भुग्नवान् ॥ स्वादय ओदनुबन्धाः । षूङ् प्राणिप्रसवे । सूनः । सूनवान् ॥ दूङ् । दूनः ।

---

१ गुरा गूर्णः गूर्णवान् B.
२ परः प्राप्तिः B.
३ दस्य च नो भवति B.

दूनवान् । गणकृतस्यानित्यत्वात् ॥ पूञो नाशे । पूना यवाः । विनष्टा इत्यर्थः । नाश इति किम् । पूतं धान्यम् । कम्पितमित्यर्थः ॥ दुग्वोर्दीर्घश्च । विदूनः । विदूनवान् । विगूनः । विगूनवान् ॥ चकारोऽनुक्तसमुच्चयार्थः ॥ ॠल्वादिभ्यश्च[१] क्तेः । कीर्णिः । गीर्णिः । लूनिः । पूनिः । धूनिः ॥ स्त्री चेति यावल्ल्वादिस्ततो[२] वृत्करणात् ॥ हाज्याग्लाभ्यश्च । हानिः । ज्यानिः । ग्लानिः ॥

ओश्चेः क च[३] ॥ १०५ ॥

ओश्चेः परस्य निष्ठातकारस्य नकारो भवति कादेशश्चान्ते । ओश्चेरेव श्रुतत्वाच्छोपधस्य ओश्चेर्धुड्यन्तलोपे सति षत्वबाधकं कत्वं स्यात् । वृक्णः । वृक्णवान् ॥

क्षेर्दीर्घात् ॥ १०६ ॥

दीर्घान्तात् परस्य क्षेर्निष्ठातकारस्य[४] नकारो भवति । क्षीणः । क्षीणवान् ॥ दीर्घादिति किम् । क्षितायुर्जाल्मः । क्षितकस्तपस्वी ॥

श्यो ऽस्पर्शे ॥ १०७ ॥

अस्पर्शे वर्तमानाच्छ्यायतेर्निष्ठातकारस्य नकारो भवति । शीनं घृतम् । शीनवद्घृतम् ॥ अस्पर्श इति प्रसज्योऽयं नञ् । शीतं

१ A. om. ॠ.　　३ °कश्च Ch. [read ओव्रश्चः?]
२ स्त्रा चेति° B.; °यवल्वादिः ततो A.　　४ दीर्घात् क्षेर्नि° B.

जत्वम् । गुणभूतोऽपि स्पर्शो नत्वप्रतिषेधस्य संप्रसारणस्य च निमित्तम् । न तु रोगे । तेन प्रतिक्षीनमिति नत्वं भवत्येव ॥

अनपादानेऽञ्चेः[1] ॥ १०८ ॥

अनपादाने वर्तमानादञ्चतेः परस्य निष्ठातकारस्य नकारो भवति । समक्नः । समक्नवान् । संसक्त[2] इत्यर्थः ॥ अनपादान इति किम् । उदक्तमुदकम् । कूपादुद्धृतमित्यर्थः ॥ व्यक्तमित्यन्ये रूपम् ॥ अञ्चितः । अञ्चितवानिति । इटा व्यवहितत्वात् । पूजायामञ्चतेरिड्भावो नलोपस्य नेष्यते ॥

अविजिगीषायां दिवः[3] ॥ १०९ ॥

अविजिगीषायां वर्तमानाद् दिवः परस्य निष्ठातकारस्य नकारो भवति । आद्यूनः । आद्यूनवान् ॥ अविजिगीषायामिति किम् । द्यूतं वर्तते । विजिगीषया ह्यक्षपातः क्रियते ॥ सिनोतेः कर्मकर्तरि ग्रासे[4] वक्तव्यम् । सिनो ग्रासः[4] स्वयमेव । बद्ध इत्यर्थः[5] ॥

ह्रीघ्राघ्रोन्दनुदविन्दां वा[6] ॥ ११० ॥

एभ्यः परस्य निष्ठातकारस्य नकारो भवति वा । ह्रीणः । ह्रीणवान् । ह्रीतः । ह्रीतवान् ॥ घ्राणः । घ्राणवान् । घ्रातः । घ्रात-

---

१ अञ्चोऽनपादाने । Ch.
२ संयुक्त A
३ दिवोऽविजिगीषायां Ch.
४ ग्रामे० ग्रामः A. B.
५ बद्ध इत्यर्थः A.
६ ०विदाम्वा Ch.

वान् ॥ त्राणः । त्राणवान् । त्रातः । त्रातवान् ॥ उन्दी । समुन्नः । समुन्नवान् । समुत्तः । समुत्तवान् ॥ नुद । नुन्नः । नुन्नवान् । नुत्तः । नुत्तवान् ॥ विद विचारे । विन्नः । विन्नवान् । वित्तः । वित्तवान् ॥ व्यवस्थितविभाषया नित्यं संज्ञायाम्[1] । देवत्रातः ॥ तथा ।

विचारार्थाद्विभाषैव ज्ञानार्थान्नित्यमिड् यतः ।
भोगादन्यत्र लाभार्थात्सत्तार्थाच्च विदेः सदा ॥

## क्षैशुषिपचां मकवाः ॥ १११ ॥

एभ्यस्त्रिभ्यो यथासंख्यं निष्ठातकारस्य मकवा भवन्ति । क्षामः । क्षामवान् ॥ शुष्कः । शुष्कवान् ॥ पक्वः । पक्ववान् ॥ द्वयोर्विभाषयोर्मध्ये यो विधिः स नित्य एव[2] ॥

## वा प्रस्त्यो मः[3] ॥ ११२ ॥

प्रपूर्वस्य स्त्यायतेर्वा निष्ठातकारस्य मकारो भवति । प्रस्तीमः । प्रस्तीमवान् । प्रस्तीतः । प्रस्तीतवान् । मत्वान्नित्यं संप्रसारणम् ॥

## निर्वाणोऽवाते ॥ ११३ ॥

निर्वाण इति निपात्यते वातविषयश्चेद्धात्वर्थो न भवति । निर्वाणोऽग्निः । दीप्त्युपरमे वर्तते ॥ निर्वाणो भिक्षुः । रागादि-

---

१ B. om. संज्ञायां.
२ मध्ये विधिर्नित्यः । B.
३ In Ch. प्रस्त्यो मो वा स्यात्० is a vârtt. on 111.

प्रशमनेऽत्र ॥ अवात इति किम् । निर्वातो वातः । विरोधेऽत्र ॥ कथं निर्वाणो दीपो वातेन । अत्र वातः करणं[1] न त्वाधारः । निर्वातं वातेनेति भावेऽपि वात एव कर्ता ॥

भित्तर्णवित्ताः शकलाधमर्णभोगेषु[2] ॥ ११४ ॥

भित्तादयः क्तान्ताः शकलादिष्वर्थेषु यथासंख्यं निपात्यन्ते । भित्तं शकलमिति पर्यायः ॥ ऋ गतौ । ऋणं शोध्यम् । ऋणेऽधमोऽधमर्णः । तद्विषये निपातनम् ॥ अधमर्णग्रहणं कालान्तरादिविनियमोपलक्षणं[3] तेनोत्तमर्णविषयेऽपि स्यात् ॥ विद्लृ । वित्तं द्रव्यम् । भुज्यत इति भोग उच्यते । वित्तमिव वित्तमित्युपचारात् प्रतीतेऽप्यभिधीयते[4] ॥

अनुपसर्गात् फुल्लक्षीवकृशोल्लाघाः[5] ॥ ११५ ॥

एते क्तान्ता निपात्यन्ते न चेदुपसर्गात्परे भवन्ति । ञि फला विशरणे निष्ठातकारस्य लत्वम् । फुल्लः ॥ क्तवन्तोरपि लत्वमिच्छन्त्यन्ये[6] । फुल्लवान् ॥ क्षीवृकृशिभ्यामुत्पूर्वाच्च[7] लाघेः परस्यैव निष्ठातकारस्यैव लोप इड्भावश्च । क्षीवः । कृशः । उल्लाघः ॥ अनुपसर्गादिति किम् । प्रफुल्तः । प्रक्षीवितः । प्रकृशितः । प्रोल्लाघितः ॥ कथं संप्रफुल्लः । उत्प्रफुल्लः । फुल्ल विकसने[8]

१ वातकरणं A.
२ °भोग्येषु Ch.
३ कालान्तराद्यविनि° A. B.
४ Ch. has the vârtt. प्रत्यये चेति व°
५ °फुल्लक्षीवकृषखञ्जोल्लाघाः । Ch. [खञ्जः; प्रखञ्जितः]
६ लत्वमित्येके B.
७ क्षीवृकृषिभ्यां° A.
८ विकशने B.

ऽचा सिद्धम् ॥ परिक्षय इति केन सिद्धम् । वचनं तु रूपान्तरं स्यादिति ॥

अवर्णादूटो वृद्धिः[१] ॥ ११६ ॥

धातोरधातोर्वा ऽवर्णात्परस्योटो वृद्धिर्भवति ॥ ग्रव । ग्रौः । ग्रावौ । ग्रावः ॥ धावु[२] । धौतः । धौतवान् ॥ अवनम् । ऊतिः ॥ पटोतिः ॥ जनानवति । जनौः । जनावौ ॥ ऊट इति किम् । अद्योढा । कदोढा ॥ औरिति सिद्धे वृद्धिग्रहणं मङ्गलार्थम् ॥

॥ इति दौर्गसिंह्यां वृत्तौ कृत्सु षष्ठः पादः समाप्तः ॥

॥ इति कातन्त्रं समाप्तम् ॥

---

१ अवर्णादुवो वृद्धिरिति । Ch.; ऊट् see IV. 1, 56.

२ धाव B.

# NOTES.

The following passages are extracted from the introductory portions of the principal commentaries.

*Durgasiṃha's Kâtantravṛittiṭîkâ* begins as follows:

शिवमेकमजं बुद्धमर्हदाग्र्यं तं स्वयंभुवम् ।
कातन्त्रवृत्तिटीकेयं नत्वा दुर्गेण रच्यते ॥ ० ।

तत्र शास्त्रप्रस्तावाद्वाचनिक एव नमस्कारोऽन्यास्त्वेति भगवान् वृत्तिकारः श्लोकमेकं कृतवान् देवदेवमित्यादि । ० । शास्त्रस्यादौ प्रकर्षेण नत्वा संक्षिप्तं व्याकरणं कातन्त्रम् । ईषदर्थे हि कुशब्दस्य कादेश उच्यते । तन्त्र्यन्ते व्युत्पाद्यन्तेऽनेन शब्दास्तन्त्रं सूत्रम् । कथं तर्हि कातन्त्रस्य सूत्रं न हि सूत्रस्य सूत्रं येन षष्ठ्युपपद्यते । नैवम् । सूत्रवृत्त्युदाहरणसमुदायेऽपि कातन्त्रं व्यवहृत्य लोकः प्रयुङ्क्ते व्यपदेशिवद्भावाद्वा । शर्ववर्मणा कृतं शार्ववर्मिकम् । कातन्त्रस्य शर्ववर्मविहितं व्याख्यानं प्रवक्ष्यामि । अत्र च कातन्त्रस्याभिधेयाः शब्दाः । शब्दव्युत्पत्तिः फलम् । संबन्धोऽप्यभिधानाभिधेयमनियोगलक्षणः । अस्य पुनर्वक्ष्यमाणस्य व्याख्येयम् । कातन्त्रमिदं तु व्याख्यानमनयोरपि । स एव संबन्धः कातन्त्रार्थनिश्चयः । ० । तेऽपि [शब्दा] द्विविधा वैदिका लौकिकाश्च । तत्र वैदिका आम्नायत एव सिद्धाः । न हि तेषां संप्रदायोऽद्य मन्वन्तरादिष्वपि व्यवच्छिद्यते । न च ते शक्या व्युत्पादयितु-

मनन्तत्वाद्वेदशाखानां न ह्यर्वाग्दर्शिनो वेदशाखान्तं गन्तुमर्हन्ति। लौकिकानां तु शब्दानां नापरः संप्रदायो व्याकरणादृते।०

*Trilochanadâsa's Pañjikâ* commences:

प्रणम्य सर्वकर्तारं सर्वदं सर्ववेदिनम् ।
सर्वीयं सर्वगं सर्व(१) सर्वदेवनमस्कृतम् ॥
दुर्गसिंहोक्तकातन्त्रवृत्तिदुर्गपदान्यहम् ।
विवृणोमि यथाप्रज्ञमज्ञसंज्ञानहेतुना ॥--।

कातन्त्रस्येति तत्रि कुटुम्बधारणे चुरादाविनन्तः । तन्त्र्यन्ते व्युत्पाद्यन्ते शब्दा अनेनेति स्वरवृदृगमिगृहामल् [का० ४. ५. ४१] इति करणेऽल्प्रत्ययः । स चानेकार्थत्वाद्धातूनां व्युत्पादनेऽपि वर्तते । तेन तन्त्रमिह सूत्रमुच्यते । ईषत्तन्त्रं कातन्त्रम् । कुशब्दस्य तन्त्रशब्दे परे । का त्वीषदर्थेऽच इति [का० २. ५. २५] ईषदर्थे कादेशः । व्याख्यानमिति विशेषेणाख्यायतेऽनेनेति करणाधिकरणयोश्चेति [का० ४. ५. ९५] करणे युट् । व्याख्यानं वृत्तिग्रन्थ इत्यर्थः । तेन हि सूत्रं व्याख्यायते ॥ नन्वीषत्तन्त्रं जयदेवादिप्रोक्तमप्यस्तीत्याह शार्ववर्मिकमिति शर्ववर्मणाचार्येण यत्कृतं तत्शार्ववर्मिकमिति क्रीतादित्वादिकण् । ननु व्याख्यानं यदि वृत्तिग्रन्थस्तत् कथं शार्ववर्मिकमिति । इदानीं दुर्गसिंहेन क्रियमाणत्वात् । सत्यमेतत् । किंतु शर्ववर्मकृतसूत्रसंबन्धाद् व्याख्यानमपि शार्ववर्मिकमित्युच्यते । तथा हि कातन्त्रशब्देन वृत्त्यादिकमपि तत्संबन्धाल्लोको व्यपदिशतीति । अत एव कातन्त्रसूत्रमिति

---

१ On this word the *Chandrikâ* remarks: शकारवाञ् शर्वशब्दः शिवपर्यायः ।०। शिवे दन्त्यसकारवानपि सर्वशब्दः ।

षष्ठीसमासोऽपि सिद्ध एव। एतेन श्लोकार्धेनाभिधानाभिधेयलक्षणः संबन्धोऽभिहित इति दर्शितम्।०

*Kavirâja*, in his gloss, remarks: ननु कातन्त्रस्येत्युक्ते वर्धमानादिग्रन्थो व्याख्यायतामित्यत आह शार्ववर्मिकमिति। ईषत्तन्त्रं कातन्त्रम्। ईषच्छब्दोऽल्पार्थवाचकः। तथा च किंचिदीषन्मनागल्प इत्यमरः। तस्याल्पत्वं पुनः पाणिन्यपेक्षयेति। वच भाषणे ब्रूञ् व्यक्तायां वाचि। इत्यस्यैव ब्रुवो वचिरिति वचनाद् वचिरादेशे रूपमिदम्। शार्ववर्मिकमिति शृ स्तृ हिंसायामिति शृणातेर्व इति कप्रत्यये रूपमिदम्। शृणातेर्व इत्युणादिनिपातेनास्यैव।०
The MS. (I. O. 1383, *b*) writes now सर्व० now शर्व०

Similarly the *Kâtantra-chandrikâ*: ननु कातन्त्रस्य व्याख्यानमित्युक्ते जयदेवादेर्व्याख्यानं कथं नायातीत्यत आह शार्ववर्मिकमिति। ईषत्तन्त्रं कातन्त्रमिति। ईषच्छब्दः स्वल्पवाचकः। तथा च किंचिदीषन्मनागल्प इत्यमरः। तस्याल्पत्वं पाणिन्यपेक्षया॥ ननु कातन्त्रशब्दः कौमारव्याकरणे रूढः शास्त्रान्तरे दृष्टत्वाज्जयदेवादेर्व्याख्यानं नायाति किं शार्ववर्मिकमिति विशेषणेन। सत्यमिदं स्वरूपविशेषणं यथा व्यञ्जनमस्वरं नयेदिति [का० १. १. २१]। अथ श्लोकस्य कथं पदादिकं क्रियते यतः सूत्रस्यैवेदं सूचितं तदुक्तम्।०। कश्चिदादिग्रहणं ज्ञापयति। आदौ शार्ववर्मिकं व्याख्यानं प्रवक्ष्यामि पश्चाद् वाररुचिकमित्यर्थः। तेन वररुचिसूत्रस्य वृत्तिः करणीयेति सूचितम्। तन्न। टीकापञ्जिकाभ्यां सह विरोधाद् यत आदौ शास्त्रादाविति ताभ्यां व्याख्यातम्।०

Compare also *Harirâma's Vyâkhyâsâra*: आदौ ग्रन्थादौ

देवदेवं महादेवं प्रणम्य कातन्त्रस्य कलापसूत्रस्य शार्ववर्मिकं व्याख्यानं प्रवक्ष्यामीत्यन्वयः ।०

The *Laghuvṛitti* begins:

सर्वज्ञं सर्ववागीशं भुक्तिमुक्तिप्रदायकम् ।
नत्वा कातन्त्रसूत्राणां लघुवृत्तिर्विधास्यते ॥
यथा बालप्रबोधः स्यात्तथाविधं निरूप्यते ।
क्षमध्वं सर्वविद्वांसो लक्षणादिनिरूपणे ॥

I. 1. 1. *Trilochanad.* remarks thus: सिद्ध इत्यादि । अस्यैव तात्पर्यार्थमाह न पुनरन्यथोपदेष्टव्य इति । अयमर्थः । पूर्वाचार्यप्रसिद्धां स्वरव्यञ्जनादिसंज्ञामपनीय केचिदपूर्वामेवाज्झलादिसंज्ञां प्रणीतवन्तः । तत्प्रतिषेधार्थमिदमुच्यते । कुतः । यतः शब्दाः खल्विह साध्यत्वेनाभिमताः । ते च लोकप्रसिद्धाभिरेव संज्ञाभिः साध्यमानाः सुबोधा भवन्ति नाप्रसिद्धाभिरिति । अथ संज्ञैव कथं न साध्यत इति चेन्न । प्रथमतः संज्ञा साध्या साधितया च पश्चाच्छब्दा व्युत्पाद्या इति यत्नगौरवमापद्येत । तेन प्रतिषेध एव साध्यत्वेन परिणतो भवति । यथा दक्षिणेन चक्षुषा पश्यतीत्युक्ते वामेन न पश्यतीत्यवगम्यते ॥ ननु तत्र चतुर्दशेत्यादिभिर्योगैः स्वरादिसंज्ञा विधीयमाना दृश्यन्त इत्ययुक्तं पूर्वाचार्यप्रसिद्धसंज्ञाव्याख्यानद्वारेणेतरप्रणीतसंज्ञान्तरप्रतिषेध एव तैरपि साध्यः । अन्यथा स्वरादिसंज्ञा हि प्रसिद्धाः । किमर्थं पुनर्विधीयन्त इति । सिद्धशब्द इत्यादि । सर्वपारिषदत्वाद् व्याकरणस्यार्थत्रयं घटते । तत्र नित्या वर्णा इति दर्शने नित्यार्थः । अनित्यवादिनां तु मते निष्पन्नार्थः । He then accepts *Durgasiṃha's* suggestion that सिद्ध is here used at the beginning of the work मङ्गलार्थम् ॥

On काम्पिल्लः सिद्धः *Harirâma* (H.) and the *Chandrikâ* (Ch.) quote the following passage:

> ह्रस्वादिर्दीर्घादिरपि काम्पिल्लो द्विलकारवान्(१)।
> यो दीर्घादिर्ल्यान्ते चात्र काम्पीलो(२) दीर्घमध्यगम् ॥

इत्यनुशासनात् काम्पिल्लः। काम्पिल्यः। काम्पील(३) इत्यादयोऽपि भवन्ति॥ अयं(४) पुनर्दीर्घादिद्विलकारो द्विलयान्तो(५) वा पाठो देशवाचकत्वात्।

> दीर्घादिर्द्विलयान्तस्य कम्पिल्लो द्विलकारकः।
> देशभेदे तथा नागे शास्यते नागमात्रके॥

इति काम्पिल्लो नागः। तथा च दृश्यते। काम्पिल्लनागस्यवलं करोतीति प्रयोगस्य दर्शनात्(६)॥ तथा च चन्द्रः। काम्पिल्लो नागे विक्रमादित्यदेशे प्रसिद्ध इति॥

2. *Durgasimha:* ०स्वयं राजन्त इति स्वरा एकाकिनोऽप्यर्थप्रतिपादने समर्था इति। एवं पदानि सिद्धानि लोके ह्यर्थवन्त्यनर्थकानि च वाक्यानि दृश्यन्ते।०। तत्र भगवत्कुमारप्रणीतसूत्रानन्तरं तदाज्ञयैव श्रीशर्ववर्मणा प्रणीतं सूत्रं कथमनर्थकं भवति। अर्थवान्। सूचयति सूते सूत्रयति वा सूत्रम्॥ तच्च भिद्यते। संज्ञा च परिभाषा च विधिर्नियम एव च।

> प्रतिषेधोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥

परिभाषा द्विविधा लिङ्गवती विध्यङ्गशेषभूता विधौ नियमकारिणी। विधिरपि भिद्यते प्रत्ययागमादेशपूर्वपरनिपाततया सं-

---

१ काम्पिल्लो लकारो वान्यो। H.
२ काम्पिल्लो H.
३ H. has again काम्पिल्ल.
४ अत्र पुन० Ch.
५ द्विलयन्त.
६ H. omits प्रयोगस्य दर्शनात्।

ज्ञानियमप्रतिषेधा विधेरेव भेदाः। अधिकारोऽपि गङ्गास्रोतोमन्दगतिमण्डूकप्लुत्यादिभेदभिन्नपरार्थ इति। तथा च यथास्थानमेते निगदिष्यन्ते। संज्ञाविधिमन्तरेणापि संज्ञासूत्रमिदं परिशिष्यते। प्रसिद्धा हि स्वरादिसंज्ञा।०

3. *Durg.*: उदात्तानुदात्तसमाहारसानुनासिकनिरनुनासिकभेदादष्टादशधा भिद्यतेऽवर्णः। तथैवर्णादयोऽपि॥ अतः समानं तुल्यं मानं परिमाणमेषामिति समानाः सिद्धाः।०

4. *Durg.*: ०समानो वर्णः सवर्णः। स पुनरस्मादेव वचनाद् भिन्नजात्योरपि ह्रस्वदीर्घयोरुपपद्यते। समानजात्योस्तु ह्रस्वदीर्घयोश्च सावर्ण्यं सिद्धमेव॥० *Tril.*: तेषांग्रहणे तु व्यक्तेः प्रतिपादितत्वात् क्रमाविवक्षायामपि व्यक्तिद्वारेण भिन्नयोर्ह्रस्वयोर्दीर्घयोश्च सवर्णसंज्ञा सिद्धेति। व्यक्त्यर्थमिति व्यक्तिरर्थः प्रयोजनमस्येति विग्रहः॥

Between 4 and 5 the *Laghuvṛitti* adds two sûtras, or rather *vârttikas*: (*a*) ऋकारऌकारौ च। (*cf. Durg.* on I. 2, 1) and (*b*) वर्ग्यः स्ववर्ग्येण॥ [वर्गे स्थितो वर्णः स्ववर्गस्थितवर्णेन सह सवर्णसंज्ञो भवति। क ख ग घ ङ।०]

5. 6. *Tril.*: निरन्वयेयं संज्ञा तथा दीर्घसंज्ञापि॥०॥ लघुगुरुसंज्ञार्थं सूत्रत्रयं [Pân. I. 4, 10-12?] केनचिदुक्तं तदिह न वक्तव्यमित्याह ह्रस्व इत्यादि। तथेत्युच्चारणवशादेव॥ किंच यदि ह्रस्वो वर्णः संयोगे परे गुरुसंज्ञो न भवेत् तदा नाम्यादेर्गुरुमतोऽनृच्छः [का० ३. २. १८] इत्यत्र ऋच्छेः प्रतिषेधो व्यर्थः स्यात्। तत्र हि गुरुमतो धातोर्विधीयमान आम्प्रत्ययः कथमृच्छेः प्रसज्येत। येन प्रतिषेधोऽर्थवानिति दर्शयति गुरुमत इत्यादि॥

*Durg.*: ॰ लघुगुरुसंज्ञापि लोकोपचारादित्याह ह्रस्वो लघुरित्यादि ।॰। ननु तर्हि ह्रस्वदीर्घावपि लोक एव सिद्धौ । सत्यम् । बालवुद्धिनिष्पन्नावेव हि तौ ततो हि लघुगुरुसंज्ञां प्रतिपद्यन्ते श्रोतारः ॥ ॰

The *Laghuvṛitti* adds the explanatory sûtras: (*a*) ह्रस्वो लघुः । (*b*) परतः संयोगे गुरुः । (*c*) दीर्घश्च ।

7. *Tril.*: ॰नमनं नाम इति भावे घञ् । सो ऽस्यास्तीति नामी । तथा चामीषां ह्रस्वदीर्घभेदेन । नत एव ध्वनिरुच्चरति नैवोर्ध्वं स्पृशतीति । अनन्तरत्वाद् दीर्घो ऽनुवर्तते । शङ्कानिरासार्थं स्वरग्रहणम् ।॰

8. *Durg.*: ॰इह पूर्वस्मिंश्च विशेषस्याविवक्षितत्वात् सामान्यरूपं नपुंसकमेव युज्यते ।॰

10. *Tril.*: तच्छब्दस्य नपुंसकपूर्ववस्तुपरामर्षिणो ऽपि वर्णा इत्यध्याहारात् पुंसा निर्देशः । अथवा परस्य वर्गशब्दस्य लिङ्गमनेन गृहीतम् । यथा । य आधारस्तदधिकरणमित्यत्र तदित्यनेनाधिकरणस्येति ।॰ *Laghuv.* omits this sûtra, *cf.* on 4 and 5.

11. *Durg.*: वर्गाणामिति संबन्धे षष्ठी न तु वर्गाणां मध्ये प्रथमद्वितीया एव वर्गा इति निर्धारणे ।॰। घोषणं घोषो ध्वनिरुच्यते । अघोषा ईषदर्थे नञ् । यथा । अनुदरा कन्येति ॥ एते ऽघोषा विवृतकण्ठाः श्वासानुप्रदानाश्च विसर्जनीयजिह्वामूलीयोपध्मानीयाश्च ।॰

12. *Durg.*: ॰एते घोषवन्तः संवृतकण्ठनादानुप्रदानाः । अनुस्वारो ऽप्येवम् ।॰

13. *Tril.*: अनुशब्दः पश्चादर्थे । अनु पश्चान्नासिकास्थानमु-

च्चारणमेषामित्यनुनासिकाः । पूर्वं मुखस्थानमुच्चारणं पश्चान्ना-
सिकास्थानमुच्चारणमित्यर्थः । अनुग्रहणात् केवलनासिकास्था-
नोच्चारणस्यानुस्वारस्य नेयं संज्ञा ॥ ननु ङञणमा हि सूत्रे निर्दि-
ष्टाः । तत्कथमनुस्वारस्य प्रसङ्गो येनानुग्रहणं ते च सामर्थ्या-
न्मुखनासिकावचना एव । न हि ते केवलेनैव मुखेन नासिकया वो-
च्चारयितुं शक्यन्ते । सत्यम् । पूर्वाचार्यप्रसिद्धसंज्ञेयमन्वर्थेति ॥

For Pâṇini's definition of the term *anunâsika* see P. I. 1. 8.

14. The spelling *antaḥsthâ* here adopted instead of *antasthâ* (thus MSS.) is not countenanced by the Commentators who explain it by स्वस्य स्वस्य स्थानस्यान्ते तिष्ठतीत्यन्तस्था ।

The term *ûshman* nowhere occurs in the succeeding sûtras. The Commentators maintain that the terms used here (in the *saṃjnâ-pâda*) are the established etymological terms, for which sometimes shorter or easier terms are substituted by the *sûtra-kâra* merely with a view to facilitating matters.

15. *Tril.:* ननु किमियमूष्मसंज्ञा विधीयते न ह्यस्याः शास्त्रे
फलमस्ति । तथा हि । अमीषामाख्याते शिट्संज्ञा विधास्यते ।
तस्या एव प्रयोजनमस्ति । शिट्परोऽघोष [का० ३. ३. १०] इत्या-
दिषु । तेन सैव विधातव्या नेयमित्याह शिडितीत्यादि । इतिशब्द
एवंप्रकारे द्रष्टव्यः । एतदुक्तं भवति । शादीनां कार्यित्वात् पूर्वनि-
र्देशे प्राप्ते यत्संज्ञामादौ निर्दिशति तदेवंप्रकारा लघुसंज्ञाः कर्तुं
शक्यन्त एवेति । एतदिहाकूतं केवलम् । न वयं संज्ञान्तरं विधा-
तुमुद्यताः । अपि तु पूर्वाचार्यप्रसिद्धसंज्ञा अन्वाख्यानेन कृतार-
ब्धाः ॥ ननु पूर्वाचार्या अपि वैयाकरणत्वाल्लाघवमभिलषन्तः कि-
मिति गरीयसीः स्वरादिसंज्ञाः प्रणीतवन्तः । सत्यम् । अन्वर्थत्वा-
त्तासामिति । अयमर्थः । द्विविधं हि लाघवं भवति शब्दकृतम-

र्थकृतं च। तत्रार्थकृतमेव लाघवं परार्थप्रवृत्तत्वात् तेषामभीष्टम्। अतः शर्ववर्मापि तथा प्रतिपादयति।०। तथा हि। ऊष्मधर्मयोगादूष्माण इत्येवमन्यासामपि संज्ञानामन्वर्थ ऊहनीयः।०

16. *Durg.:* विसृज्यते विरम्यते [*i.e.* परैर्वर्णैर्न संबध्यते *Harirâma*] इति विसर्जनीयः कमप्रत्ययोपलक्षणम्। तेन विसृष्टो विसर्ग इति च संज्ञा सिद्धेति॥

17. 18. *Durg.:* उपध्मायते शब्दायत इत्युपध्मानीयः॥ *Tril.:* उप समीपे ध्मायते शब्द्यते० The MS. of the L.V. writes ﾠ ﾠ.

19. *Durg.:* ०उरXकेण। उर⌒पेण। स्वरत्वाज्जिह्वामूलीयोपध्मानीयाभ्यामपि णत्वम्। व्यञ्जनत्वात् परगमनं चानयोरिति विसर्जनीयानुस्वारयोस्तु नैव परगमनमन्वर्थसंज्ञाविधानात् [*Chandrikâ:* अनुस्वारो विसर्गश्च द्वावेतौ पूर्वसंश्रितावित्यन्वर्थत्वात्]॥ अथ पन्था इति निर्लोपः कथं न स्यात्। नैवम्। अघुट्स्वरे लोपम् [का० २. २. ३७] इति विशेषणबलात्। णत्वे तु विसर्जनीयग्रहणमनर्थकं स्वरान्तत्वात् सिद्धम्। बृंहणमिति तत्र हि नुरित्यनेन नुसंभवोऽनुस्वारः प्रतिपत्तव्यः। तेन पुंस्विति षत्वं न भवति॥ वर्णसमाम्नाये क्रमपठितयोरनुस्वारविसर्जनीययोर्व्यस्तसंज्ञाविधानमाभ्यां सह स्वरव्यञ्जनयोरभिन्नसंनिकृष्टत्वाविर्भावार्थम्। एवं[१] सत्यमी योगवाहा एवोच्यन्ते[२]। प्रत्याहारवादिनः पुनराहुः। योगवाहा इति कथं पुनरयोगवाहा इत्यप्युक्ता वहन्ति। अनुपदिष्टाश्च श्रूयन्त इति॥ [*Chandrikâ:* योगवाहास्तु पूर्वसंयुक्तेऽप्युपपन्नं युक्ताः संबद्धा वहन्ति प्राप्नुवन्तीत्यर्थः॥]

---

१ ०र्थमेव स० MS. २ इवोच्यन्ते MS.

The *Laghuv.* remarks: स्वरव्यञ्जनयोर्मध्येऽनुस्वारविसर्जनीययोर्वर्णसमाम्नाये पाठ उभयसांनिध्यादुभयव्यपदेशार्थः । सूत्रविपर्ययनिर्देशादुभयोरुभयसंज्ञा विज्ञायते ॥

*Tril.:* अनुस्वर्यते संलीनं शब्द्यत इत्यनुस्वारः । कर्मणि घञ् ॥ ननु वर्णसमाम्नायस्य क्रमसिद्धत्वात् सन्ध्यक्षरसंज्ञानन्तरमेवानुस्वारविसर्जनीययोः संज्ञानिर्देशो युज्यते । तत्कथं व्यतिक्रमनिर्देशः । सत्यम् । अनयोरप्रधानत्वात् पश्चात्संज्ञानिर्देशः । तथा हि । मनोरनुस्वारो धुटि [का° २. ४. ४४] रेफसोर्विसर्जनीयः [का° २. ३. ६३] इति न क्वचित् स्वातन्त्र्येणानुस्वारविसर्जनीयौ स्तः । अतोऽन्तोऽनुस्वारोऽनुनासिकान्तस्येत्यभ्यासापेक्षत्वात् । यद्येवं वर्णसमाम्नायेऽपि पश्चात्पाठो युज्यते । सत्यम् । स्वरव्यञ्जनयोर्मध्ये पाठ उभयसमीपत्वादुभयव्यपदेशार्थो भवतीति तत्समीपत्वात्तद्व्यपदेशः । यथा गङ्गासमीपो देशो गङ्गेति । अनुस्वारविसर्जनीययोरपि क्रमपरिपठितयोर्व्यतिक्रमेणापि संज्ञाविधानं स्वरव्यञ्जनाभ्यामनयोरभिन्नसंनिकृष्टत्वप्रतिपादनार्थम् । तेनोभयोः प्रत्येकमुभयसंज्ञा सिद्धेति भावः । अन्यथानुस्वारस्य स्वरसंनिधानात् स्वरसंज्ञैव स्याद् न व्यञ्जनसंज्ञा । विसर्जनीयस्य च व्यञ्जनसंनिधानाद् व्यञ्जनसंज्ञैव स्याद् न स्वरसंज्ञा । तेन स्वरत्वात् स्वरकार्यं व्यञ्जनत्वाद् व्यञ्जनकार्यमनयोस्तत्र तत्र वक्ष्यति । तथा विसर्जनीयादेशयोर्जिह्वामूलीयोपध्मानीययोरपि प्रतिपत्तव्यम् । अत एव विसर्जनीयादयो योगवाहा इहोच्यन्ते । युक्ताः संबद्धा वहन्तीति योगवाहाः ॥

20. *Trilochana* here criticizes *Durgasiṃha's* interpretation: उपलब्धिग्रहणमित्यादि । यद्येवं विभक्त्यन्तं पदमिति कथं न

कृतम् । सत्यमेतत् । किंतु पूर्वा प्रकृतिः परा विभक्तिः । तयोः पूर्वपरयोः प्रकृतिविभक्त्योः प्रत्येकमयमर्थः समुदायेन चायम् । एवं सति प्रकृतिप्रत्ययौ संबद्धौ भवत इति व्युत्पादनार्थं गुरुकरणं तच्च टीकायां विस्तरेणोक्तम् । इह तु नोच्यते ग्रन्थगौरवभयात् । किं च विभक्तिरन्तो ऽवयवो यस्य तद्विभक्त्यन्तं पदमित्युक्ते साचाद्विभक्त्यन्तानामेव स्यान्न तु लुप्तविभक्तिकानामिति शङ्केत। यथा राजेति नित्यत्वाद्धुञ्जनाच्चेति [का॰ ४. ५. ८८] सेर्लोपे कृते विभक्त्यन्तत्वानुपपत्तेः पुनर्लिङ्गसंज्ञायां सत्यां विराममाश्रित्य लिङ्गान्तनकारस्य [का॰ २. ३. ५६] इति नलोपो भवति । तथा-चापीति विभक्तिलोपे विभक्त्यन्तत्वाभावात् पदसंज्ञा न स्यात् । सिद्धान्ते तु लुप्तायामपि विभक्तावर्थोपलब्धेः संभवात् पदसंज्ञा न विहन्यते ॥ For Pâṇini's definition of the term *pada* see P. I. 4, 14.

20. 21. The *Laghuv.* inserts here the following sûtras: (*a*) स्यादिधुटि पदान्तवत् ॥ स्यादिविभक्तौ धुटि परे पूर्वं पदान्तवत्कार्यं भवति । पुम्भ्याम् । पुंभ्याम् । मकारस्य वर्गे तद्वर्गपञ्चमो वा भवति ॥ प्रशान्भ्याम् । सुकन्भ्याम् । मनोरनुस्वारो धुटीति न स्यात् ॥ स्यादिधुटीति किम् । गन्ता । पदान्तत्वादनुस्वारो नित्यं वर्गान्तः स्यात् ॥ *cf.* Kât. II. 4, 44, Vṛitti. (*b*) न स्वरे ये च तद्धिते ॥ तद्धिते स्वरे ये च परे पदान्तवन्न भवति । स्यादिलोपे प्रत्ययलोपलक्षणेन प्राप्तिः ।॰ (*c*) उत्तरपदं स्वरे ॥ न पदान्तवद्भवति । प्रियविद्युतौ । परमदण्डिन् ।॰

21. *Durg.:* नयतेर्द्विकर्मकत्वात् सर्वद्वितीया व्यञ्जनमस्वरमिति[1] प्रधानं कर्म । परं वर्णमित्यप्रधानम् । कर्ता चात्र शिष्य एवं

१ व्यञ्जनकस्वरमिति MS

नयेदिति विधौ सप्तमी। विधिरज्ञातज्ञापनं पूर्वमात्रं काललक्षणम्॥ ननु व्यञ्जनं परं वर्णं नयेदित्युक्ते स्वरस्य कः प्रसङ्गः। येनास्वरमिति प्रतिषिध्यते। व्यञ्जनात्मकः स्वरः स्वयं राजते॥ हिशब्दो यस्मादर्थे। यस्मात् स्वरः स्वयं राजतेऽसहायोऽप्यर्थं प्रकाशते। अतोऽनुयायी न भवति[१]। स्वरूपग्रहणमस्वरग्रहणम्॥ अपर आह। न विद्यते स्वरो यस्मात् सोऽस्वरः। तेन जिह्वामूलीयोपध्मानीययोः परगमनम्। विसर्जनीयानुस्वारयोर्न भवति। भिन्नपदं तु वैचित्र्यार्थमिति। अयुक्तमेतत्॥

*Laghuv.:* वृषस्तिष्ठति। तदनु। ननु व्यञ्जनमस्वरमेव। सत्यम्। अस्वरग्रहणं स्पष्टार्थम्॥

*Chandrikâ:* न स्वरोऽस्वरस्तमिति नञ्तत्पुरुषस्योत्तरपदवदिति द्वितीयैकवचनान्तं पदम्। स्वरं न परवर्णं नयेदित्यर्थः॥०॥ परमित्युक्ते वर्णस्यावगमाद्वर्णग्रहणं सुखार्थम्।०

*Tril.:* न तु स्वरमित्यादि हिशब्दो यस्मादर्थे। यस्मात् स्वरः स्वयं राजते। असहायोऽप्यर्थं प्रकाशयति। तस्मादनुयायी न भवति। व्यञ्जनं पुनरन्वग्भवति। अनुगच्छत्यनुयायि भवति स्वातन्त्र्येणार्थप्रतिपादने सामर्थ्यविरहात्। तथा चोक्तम्। व्यञ्जनान्यनुयायीनि स्वरा नैवं यतो मताः॥ अर्थः खल्वपि निर्वचनम्। स्वयं राजन्त इति स्वराः। अन्वग्भवति व्यञ्जनमिति। कXखनति। क᳔फलति। कखयोर्जिह्वामूलीयं न वा [का० १. ५. ४] पफयोरुपध्मानीयं न वा [का० १. ५. ५] इति कृते कादिष्वनयोरपठितत्वात्। कथं व्यञ्जनसंज्ञा। येन परगमनमित्याह योगवाहत्वादिति। यो-

[१] The MS. omits न.

गवाहलं च प्रतिपादितमनुस्वारसंज्ञाप्रस्तावे। ननु व्यञ्जनं परं वर्णं नयेदित्युक्ते स्वरस्य कः प्रसङ्गः। येनास्वरमिति प्रतिषिध्यते। इत्याह स्वरूपमेतदिति स्वरूपाख्यानं कृतमित्यर्थः॥

22. *Durg.*: अतिपूर्वात् क्रमेर्हेत्वर्थविवक्षायामिन्। वर्तमाने शन्तृङ्। अन्विकरणो गुणः। पश्चाद् नञ्समासः॥ विपूर्वाच् श्लिषस्तथैवेन् सप्तमी॥ अथवा। अनतिक्रमं कुर्वन् विश्लेषं कुर्यादिति लिङ्गवादी वैयाकरण इति तद् वेत्त्यधीते वा ऽण्। यकारस्य विश्लिष्टस्य न य्वोः[1] पदाद्योः [का° २. ६. ५०] इत्यादौ वृद्धिरागमः॥ उच्चकैरिति विश्लिष्टादैकारादव्ययसर्वनाम्नः स्वरादन्यात् पूर्वो ऽग् भवति [का° २. २. ३४]॥

*Tril.*: अथ किमर्थमिदम्। न य्वोः पदाद्योर्वृद्धिरागमः [का° २. ६. ४८] इति य्वोरादौ वृद्धिविधानात्। तथाव्ययसर्वनाम्न इत्यादिना चान्त्यात्स्वरात्पूर्वमग्विधानादर्थाद्विश्लेषो भविष्यति। स च क्रमे नैव व्यतिक्रमेण। प्रयोजनाभावादाह। असंमोहार्थो ऽयं योग इति॥

*Laghuv.*: अतिक्रममकुर्वन्वर्णान्संश्लिष्टान्विघटयेदित्यर्थः। दौवारिकः। नीचकैः। वैयाकरणः। न्यायसिद्धस्यानुवादमेतत्॥

23. *Durg.*: इहोभये लोकाः शास्त्रकारा इतरे ऽपि। तेषामुपचारादवधिरिति।°

*D.* explains ग्रहण by अभिधान; *Tr.* and *Laghuv.* by शब्द.

*Tril.*: तथेति। [वरणा इति न केवलं वृक्षस्य संज्ञा नगरस्यापि *Durg.*]। वरणाः सन्त्यस्मिन्नगरे। वरणानामदूरभवं वा

---

१ विश्लिष्टस्य नाम्नोः MS

नगरमित्यादावर्थे तद्धितमुत्पाद्य वरणादिभ्यश्चेत्यण्[1]। तस्य लोपं पूर्वाचार्याः कुर्वन्ति। ततो हि वरणाशब्दो नगरेऽपि वर्तते। तदयुक्तम्। लोकोपचारादेव वरणाशब्दो नगरस्यापि संज्ञा न केवलं वृक्षस्येति। किमत्र तद्धितलोपेन। तथा पञ्चालाः क्षत्रियाः सन्त्यस्मिन्देशे पञ्चालानां वा निवासः। पञ्चालैर्वा निर्वृत्तः। पञ्चालानामदूरभवो वा देश इति चतुर्ष्वर्थेष्वण्। तस्य जनपदे लुगित्यपि न वक्तव्यम्। न केवलं पञ्चालशब्दः क्षत्रियाणां संज्ञा। जनपदस्यापि लोकोपचारादेव। तथा हि पृथग्जना अपि पञ्चालशब्दाज्जनपदमपि प्रतिपद्यन्ते। न च तेषां प्रकृतिप्रत्ययविभागोऽनज्ञानमस्ति। तस्मात्तदस्मिन्नस्तीति तद्देशे। तन्नाम्नि। तेन निर्वृत्तः। तस्य निवासः। अदूरभवश्चेति न वक्तव्यमेव। यद्येवं वरणापञ्चालशब्दौ समानाधिकरणत्वात् कथं नगरजनपदयोर्लिङ्गसंख्ये न गृह्णीतः। तस्मात् तद्धितलोपं कृत्वा लुपि युक्तवद्व्यक्तिवचन इति युक्तवद्भावो वक्तव्यो नेत्याह पञ्चाला वरणा इति नगरजनपदयोर्लिङ्गसंख्याभ्यां योगः संबन्धो न दृश्यते। कुत इत्याह संज्ञाशब्दत्वादिति। ईदृशावेवामू विशिष्टलिङ्गसंख्याकौ नगरपदयोः संज्ञात्वेन प्रसिद्धौ। अतः संज्ञैव प्रमाणमिति।० He then proceeds by referring to *Pâṇini* I. 2, 53 and the *Kâṣikâvṛitti*. For *harîtakyaḥ*, etc. see Vârttikas on *Pâṇ.* I. 2, 52. On the concluding ṣloka of the vṛitti Trilochana remarks thus: ननु लोकोपचाराल्लौकिका एव शब्दा ज्ञायन्ते वैदिकास्तु कथं ज्ञातव्याः। किं तैर्ज्ञातैरिति न वक्तव्यम्। व्याकरणं हि वेदा-

---

[1] अन् A.; B. om.

ङ्गमिष्यते । तन्न स्याद् न चान्यद्वैदिकशब्दव्युत्पादने सूत्रमस्ति येन वेदाङ्गत्वं भविष्यति । इत्याह वैदिका इत्यादि । वैदिकाः शब्दा लौकिकज्ञैः पुरुषैर्यैं यथोक्ता येन प्रकारेण वेदे प्रतिपादितास्तथैव तेनैव प्रकारेण निर्णीतार्थाः प्रकृतिप्रत्ययविभागोहनद्वारेण निश्चितार्था मन्तव्याः । एतदुक्तं भवति । वेदे हि लौकिका एव शब्दा बहवः प्रयुज्यन्ते । तेन तेषां व्युत्पत्त्यनुसारेणेतरेषामपि वैदिकानां लौकिकज्ञत्वात् प्रकृत्यादिविभागोहनसामर्थ्यैः शक्यते व्युत्पत्तिः कर्तुमित्यर्थः । तर्हि लौकिका अपि सर्वे लोकत एव विज्ञाप्यन्ते । किमनेनेत्याह लोकात् तेषामसंग्रह इति । लोकादवधेस्तेषां लौकिकानां शब्दानामसंग्रहः सम्यग्ग्रहणं न भवतीत्यर्थः । यस्माल्लौकिकानां शब्दानां व्याकरणमेव संप्रदायस्तदभावे वक्रप्रक्रिया विषया वृद्धपरंपरया कथमवधारयितुं शक्यन्त इति वैदिकानां पुनः शब्दानां युगमन्वन्तरादिष्वनवच्छिन्नसंप्रदायत्वाल्लौकिकज्ञैः पुरुषैरवधारयितुं शक्यन्त इति ॥

I. 2, 1. See *Pâṇini* VI. 1, 101.

*Durg.:* ऋवर्णो मूर्धन्य इति ऋकारस्य ऋकारः । ऌवर्णो दन्त्य इति ऌकारस्य ऌकारः । तथापिशलीयश्लोकः ।

आगमो ऽनुपघातेन विकारश्चोपमर्दनात् ।
आदेशस्तु प्रसङ्गेन लोपः सर्वापकर्षणात् ॥ ० ॥

ऋकारस्य ऌकारे दीर्घो वक्तव्य एव सवर्णसंज्ञाभावात् । एवं पोतृ ऌकारः । पोतॄकारः ॥ चकारात् पूर्वलोपश्चेष्यते । होतृकारः । पोतृकारः ॥ तथा ऋकारेऽपि । होतॄकारः । पोतॄकारः ॥ ० The remaining portion of this discussion I am unable to follow for want of distinctness of these letters in the MS.

*Tril.*: ननु ऋकारस्य ऌकारेण सवर्णसंज्ञाभावाद् दीर्घो न प्राप्नोति। तत्कथमित्याह होऌकार इत्यादि। होतुर्ऌकार इति विग्रहः। वक्तव्यं व्याख्यानं कर्तव्यम्। ऋकारऌकारयोः सवर्णसंज्ञा लोकोपचारात् सिद्धेति भावः॥

The *Laghuv.* gives the *Kârikâ*:

अदीर्घो दीर्घतां याति न च दीर्घस्य दीर्घता।
पूर्वं दीर्घं स्वरं दृष्ट्वा परलोपो विधीयते॥

Between 1 and 2 it adds the following five vârttikas:

(*a*). ऋति ऋतो लोपो वा॥ °होॡकारः। °होॡकारः

(*b*). ऌति ऌतः[1]॥ ऋतो वेत्येव। होतुः। ऌकारः। होॡकारः। एवम् ऌकारस्यापि कश्चित्। गम्लित्यस्य[2] ऌकारः। गम्ॡकारः। पक्षे होॡकारः[3]। ऋकारऌकारयोः सवर्णत्वात्कश्चित्पूर्वलोपमपीच्छते। होॡकार॥

(*c*). विसन्धिरपीत्यन्ये॥ ऋतो ऌति परे प्रकृतिर्भवतीत्यन्ये। होतृऌकारः॥

(*d*). शकन्ध्वादयः॥ एते निपात्यन्ते। शकानां जनपदानामन्धुः कूपः। शकन्धुः।°

(*e*). तुनोर्वकारादावव्यये॥ उकारलोपो वा वक्तव्यः। त्वृ। तुवृ। न्वृ। नुवृ। अव्ययान्तरत्वात्॥

2. For sûtras 2-7 see Pâṇ. VI. 1, 87, 88. For हलीषा, etc. see Gaṇa शकन्ध्वादि to P. VI. 1, 94, Vârtt. 2.

The *Laghuv.* adds the sûtra मनसः सस्य च॥ मनस्। अस्य सस्य च लोपो भवति। ईषायां परतः°

---

१ ऌति ऌत् MS.
२ *i.e.* गम्ॡ इत्यस्य.
३ Sic! होतृकारः?

4. For ऋणार्ण etc. see P. VI. 1, 89, Vârtts. 6 and 7; प्रीतार्त Vârtt. 5. ऋति धातोः॰ P. VI. 1, 91; नामधातोः 92.

*Laghuv.* inserts the sûtras: (*a.*) ऋति च तृतीयासमासे। (*b.*) धातोर्ऋत्युपसर्गस्य। (*c.*) नामधातोर्वा। (*d.*) ऌत्यलः।

5. Comm. see P. VI. 1, 92.

6. एवे चानियोगे is P. VI. 1, 94, Vârtt. 4; स्वैर॰ see P. VI. 1, 89, Vârtt. 4.

*Trilochana* reads स्वस्यात ऐत्वमी॰ but knows also the other reading: स्वस्यादैत्वमिति पुस्तकान्तरे पाठस्तदाप्यत ऐत्वं॰

7. For *Durgasiṃha's* Vârttikas see प्रेलयति॰ and उपेकीयति॰ P. VI. 1, 94; उपैति॰ 89; ओष्ठौत्वोः॰ 94, Vârtt. 5; ओमि॰ 95; अक्षौहिणी 89, V. 2; प्रौढः॰ V. 3.

8. For sûtras 8-11 see P. VI. 1, 77.

11. ऌरनुबन्धो यस्य। ऌकारस्येवाकृतिर्यस्येति विग्रहः॥ T.

12. For sûtras 12-15 see P. VI. 1, 78.

13. राया ऐन्द्रीति विग्रहः। T.

14. पटो (voc. of पटु) + ओतुः। T.

15. In commenting on the *âgama* in गवेन्द्र the Commentators refer to the *Kârikâ* on Pâṇ. VI. 3, 109:

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥

This is exemplified by *Leṣa:* अपूर्वस्य वर्णस्य विधानं वर्णागमः। गवेन्द्रः। कौ जीर्यति। कुञ्जरः॥ वर्णविपर्ययः। हिनस्ति। सिंहः॥ तथा माधवनामा यदोः पुत्रस्तस्यापत्यान्यणि माधवाः। वासुदे-

वज्ञातयो वासुदेवश्चेत्यादिषु। वासुदेवस्तु मा लक्ष्मीस्तस्या धवो भर्ता। इति व्युत्पत्त्या च वर्णविपर्ययमन्तरेणापि माधव उच्यते॥ वर्णविकारः। सदा कुमारः। सनत्कुमारः।° इत्यत्र तागमोऽपि॥ वर्णनाशः। पृषन्ति जलकणा उदरे यस्यासौ पृषोदरः। मनो मथ्नातीत्यचि मन्मथः कन्दर्पः। जीवनं जलं तन्मूतं बद्धं येन स जीमूतो मेघः॥ धातोस्तदर्थातिशयेन योगः। राज्धातोः शोभार्थप्रकर्षेण योगः। गच्छति सलीलं गमेर्गौरित्यौणादिकडोप्रत्यये गौरित्यत्र गम्धातोर्गमनार्थातिशयेन सलीलगमनेन योगः॥° On compounds with *go* as pûrvapada see P. VI. 1, 122-124.

16. See Pâṇ. VII. 3, 19.

17. चितं स्तुतमित्यत्र न व्यञ्जने स्वराः संधेया इत्यनेन पदमध्येऽपि संधिप्रतिषेधो भवतीति॥ T. See Pâṇini VI. 1, 109.

18. नञा निर्दिष्टमित्यादिके च्छकारस्य तद्धिते ये संधिरेव पित्र्यमिति। गव्यूतिरध्वनो मानपरिच्छेदः क्रोशद्वयमित्यर्थः। संज्ञा चेयं लोकोपचारादेव न तु नञोऽनित्यत्वात्। D.

I. 3, 1. स्वरे परे प्रकृतिरिति वचनात् पूर्वस्मात्स्वराद् विकृतिरेव। दधि इ अस्य। दधी अस्य॥ रुजति जानु उ अस्य। जानू अस्य॥ क्षिपति सा अ आगता। सा आगता॥ परनिमित्तादेशः पूर्वस्मिन् स एवेति प्रकृतिर्विहन्यते॥ D. P. VI. 1, 125 Sch.

T. remarks that by आ the ङानुबन्ध आनिपातः is excluded. See P. I. 1, 14 (and VI. 1, 125).

The remark अन्तग्रहणं°, according to the commentators, refers to the *paribhâshâ* येन विधिस्तदन्तस्य. In its concluding

examples the Vṛitti seems to favour the analysis अ + अट् + अतुः etc. see however K. III. 3, 18, etc.

2. Pâṇ. I. 1, 11 (and VI. 1, 125). T. supplies स्वराः in the sûtra, which would exclude the duals आवाम्। युवाम्। युवयोः etc.; चित्रन्वचेति चित्रा नावो यस्मिञ्जले तच्चित्रनु जलम्। T.

3. P. I. 1, 12 (and VI. 1, 125). अन्यचेति। अम द्रमेत्यादि दण्डको धातुः। अमनम्। अमः। - -। सो ऽस्यास्तीतीन्प्रत्ययः॥ (See West. Dhâṭupâṭha 13, 22; 23).

4. The commentators supply स्वराः. See Pân. VI. 1, 125.

I. 4, 2. Pâṇ. VIII. 4, 45. On वाङ्मय etc. see *ib.* Vârtt. 1.

3. Our rule strangely coincides in its compass with Pâṇ. VIII. 4, 63, which by a vârttika of Kâtyâyana (adopted by the Kâṣikâ) is extended so as to include ल and a nasal following the श. See also the note on Sûtra 4.

4. Pâṇ. VIII. 4, 62. ये तु लानुनासिकपरस्यापि शकारस्य छत्वमिच्छन्ति तेषामनर्थकमेव तेभ्योग्रहणं व्यवच्छेद्याभावात्। न हि स्वरयवरपरलानुनासिकपरव्यतिरेकेणान्यपरो हकारः संभवतीति। T.

5. P. VIII. 4, 40; 41; 60.

6. ननु किमर्थमिदं वर्गप्रथमेभ्य इत्यादिना शकारस्य छत्वे पररूपत्वे च। अघोषे प्रथम इति सिद्धस्यकार इत्येतदेव बालैरुद्युच्यते॥

चं शे सूत्रमिदं व्यर्थं यत्कृतं शर्ववर्मणा।

तस्योत्तरपदं ब्रूहि यदि वेत्सि कलापकम्॥ इत्याह।

अछत्वपक्षे वचनमिदमिति शकारस्य हि विभाषितं छत्वम्। ततो

यस्मिन्पक्षे छत्वं नास्ति तदर्थं वचनमिदम्। सानुनासिकपरस्य शकारस्य छत्वमिह सर्वथैव नास्ति। अत एव तच्छ्लक्ष्ण इत्युदाहृतम्॥ T.

7. P. VIII. 3, 32.

8-10. See P. VIII. 3, 4; 7. For पुंसो॰ see P. VIII. 3, 6. On प्रशान् see K. IV. 6, 73.

10. व्यवस्थितवास्मरणेन वेदितव्यं तेन महान् त्सरुरित्यत्र न भवति। T.

11. यद्यप्यन्तस्था द्विप्रभेदाः सानुनासिका निरनुनासिकाश्च रेफवर्जितास्तथापि सूत्रे निरनुनासिकस्यैव श्रूयमाणत्वात्स एव लकारः प्राप्नोति। तदयुक्तम्। कारशब्दो हि वर्णात्परः श्रूयमाणो यथाश्रुतवर्णपरिग्राहको भवति। तदभावे स्थानेऽन्तरतम इति न्यायादनुनासिकनकारस्यानुनासिक एव नकारो भवति। T.

12. ननु शे ञकारमिति क्रियतां जझञां चवर्गत्वात् तेषु तवर्गस्य टवर्गयोगे चटवर्गाविति ञकारः सिद्ध एवेत्याह पदमध्ये चेत्यादि। अवाञ्छयतीत्यादौ पदान्तत्वात् तेन ञकारो न सिध्यतीति भावः॥ T.

13. The two letters च्छ् are to be considered as forming together one substitute, so that in कुर्वं-च्छ् neither the substitution of ण् for न् (according to II. 4. 8.) nor that of ग् for च् (according to II. 3, 48) is applicable. For the same reason, although in प्रशाच्छ्, न् represents an original म्, *anusvâra* cannot be substituted before the च्, the latter being part of the *anga*.

15. पुनः refers back to I. 4, 8.

नोऽन्तस्छयोः शकारमनुस्वारपूर्वमित्यत्रान्तग्रहणमुत्तरत्र

विरत्यर्थम् । ॰ । तदधिकारवशादिह पुनरवश्यं विरतिप्रतिपादनार्थमन्तग्रहणं योजनीयमित्याह मकारः पुनरन्त इत्यादि । अन्तो विरतिभूतो न पुनः पदान्त एवेत्यर्थः । तेन पदमध्येऽपि यत्र विरतेरभिधानमस्ति तत्राप्यनेनैवानुस्वार इति गम्यत इति प्रकृतिविभागमात्रे विरतिरत्र नाभिधीयत इति भावः । T.

I. 5, 6. एकोऽत्र वाशब्दः समुच्चयार्थः । विकल्पार्थस्त्वपरः ॥ शषसेष्वघोषपरेषु विसर्जनीयो लोप्यो वा । कः श्च्योतति । क श्च्योतति । कः ष्ठीवति । क ष्ठीवति । कः स्थाता । क स्थाता ॥ पररूपं चेति रूपत्रयम् । तन्न वक्तव्यं श्रुतेरभेदात् ॥ D.

अथ कश्च्योत इत्यादिषु पररूपे कृते शषसानामघोषे प्रथमः कथं न स्यादित्याह चटतानित्यादि । अयमभिप्रायः । यदि प्रथमः स्यात्तदा इवर्णचवर्गयशास्तालव्या ऋवर्णटवर्गरषा मूर्धन्या लृवर्णतवर्गलसा दन्त्या इति क्रमेण शषसाश्चटतानेव प्राप्नुवन्ति। (III. 8, 1) T.

12. For ईरूरर्थम् see K. II. 3, 52.

14. On प्रचेतस् see P. VIII. 2, 70, vârtt.; on अहन् P. VIII. 2, 68; 69.

16. The prohibition only refers to the rules of Sandhi hitherto stated.

II. 1, 1. यदाऽभेदविवक्षा तदोन्मत्तवचनानुकरणाद् राजन्शब्दाल्लिङ्गसंज्ञाया अभावेन न विभक्तिस्तदभावाच्च दीर्घनलोपादिकार्याभावे राजन्नित्येव स्यात् । यदा तु भेदविवक्षा तदाऽनुकार्येणार्थेनार्थवत्त्वादनुकरणस्य लिङ्गत्वे सति विभक्तिस्ततो राजेति स्यादिति । उन्मत्तवचनानुकरणस्य मा भूदिति लिङ्गसंज्ञालाघवार्थमित्यादि । धातुविभक्तिवर्जमर्थवल्लिङ्गमिति सूत्रं लाघवार्थं कथं न कृतमित्यर्थः । Pañjikâdurgapadaprabodha.

For the example see II. 2, 11.

5. Examples to II. 1, 40; 71.—Tril. quotes: तथा चोक्तम्।
सिद्धस्याभिमुखीभावमात्रं संबोधनं विदुः।
प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियायां विनियुज्यते॥

6. पद्मानि and पयांसि contain the *âgama* नु (K. II. 2, 11) विद्युत्वान् is derived by means of the *taddhita affix* वन्तु (II. 6, 15, com.).

7. सर्वस्मै contains the *âgama* स्मु (II. 1, 43); so does सर्वेषाम् (II. 1, 29); whilst वृक्षाणाम् has the *âgama* नु (II. 1, 72.).

35. त्वत्कपितृको मत्कपितृक इति त्वं पितास्य। अहं पितास्येत्यन्तरङ्गेऽप्यकि वचनात्प्रतिषिद्धे कप्रत्ययः स्यादेव। अन्ते च नद्यृदद् बहुव्रीहाविति वचनात्कप्रत्ययः॥ वस्त्रमन्तरं येषां ते वस्त्रान्तराः। वसनं वासोऽन्तरं येषां ते वसनान्तराः। ०। तत्र वस्त्रान्तराश्च वसनान्तराश्चेति विग्रहे द्वन्द्वस्याचेति [का० २. १. ३२] न वर्तते। इह वस्त्रान्तरेत्यादि। अप्रधानादिति बहुव्रीहावन्तरशब्दस्योपसर्जनीभूतत्वादित्यर्थः॥ T.

43. For परादित्वार्थः see II. 1, 6.

48. लक्ष्मीरित्यत्र धातोरन्त ईकार इति कुतः प्रसङ्गः। तथा हि लक्षेरीमोऽन्तश्चेत्युणादावीप्रत्ययोऽस्य च मोऽन्त इति। तथा व्युत्पन्न एव लक्ष्मीशब्द इति पक्षस्तदाद्यन्तग्रहणबलादिहितविशेषणमत्र मन्तव्यमित्यालोच्य पञ्चम्या वाक्यार्थमाह। ईकारोऽन्तो यस्मादिति यथा नदमहशब्दाभ्यामीप्रत्ययो विहितस्तथा नात्रेत्यर्थः॥ Tril.

66. यद्यप्यृदन्तो यस्मात्सादृदन्त इति बहुव्रीहिणा समुदाय

उच्यतेऽरादेशोऽनेकवर्णस्तथापि श्रुतत्वादन्तस्य ऋकारस्य भवति न समुदायस्य तस्याश्रुतत्वात्। न खलु पितृप्रभृतयः। किं तर्हि समासगम्या इति कर्तरि चेति ज्ञापकाद्वा॥ योगविभागादिति। अर् इत्येको योगः सामान्येनारादेशार्थः। ततो ङाविति द्वितीयः पूर्वेण सिद्धे पुनर्विधानं पूर्वविधेर्लक्षणानुरोधार्थम्। तेन शस्येव निमित्ते स्यात्। पितरस्तर्पयामास। इति तृप् प्रीणने हेताविण्° T.

II. 2, 5. केचिदित्वन्ये न वयमित्यर्थः॥ °॥ ङ्वतीति व्यावृत्तिबलात् प्राप्तापि नदीसंज्ञा न भवतीति चेत् तदयुक्तम्। इह नित्यत्वेन नदीसंज्ञाया व्यावृत्तिरस्त्येव। सत्यम्। अत एवातिदेशबलाद् इयुवस्थानयोरीकारोकारयोः स्त्र्याख्यत्वेऽपि नदीत्वस्याप्रसिद्धिराख्यायते। यस्मादप्रसिद्धस्यैवोपमेयत्वमित्यत आह। अप्रसिद्धमुपमेयमिति। ° T.

11. धुट् च स्वरश्च धुट्स्वरमिति समाहारत्वादेकवचनम्।°। In पयांसि the नु is inserted *before* स् (धुट्) and the vowel lengthened, in accordance with rule 18, in पद्मानि *after* the vowel अ, which is lengthened by rule 17. In सुक्कुञ्चि etc. the *âgama* is impossible, since, if inserted after the vowel it would be separated from the धुट् by an *anunâsika* or *antaḥsthâ*. On गोरङ्कि T. observes: इह धुडिति जातिनिर्देशोऽयं जातेश्चैत्वान्नास्ति व्यवधानम्। जातेरमूर्त्तत्वेऽपि धुटः पूर्वं इत्ययं व्यवहारो व्यक्त्यपेक्षया भवति॥ On the *Vârttika*: वक्तव्यमिति व्याख्यानं कर्तव्यमित्यर्थः। तत्रेदं व्याख्यानं केचिदिच्छन्ति केचिन्नेच्छन्ति। ये नेच्छन्ति तन्मतमिह प्रमाणमित्यर्थः॥

32. For the *lopa* of the penultimate अ of हन् Tril. refers

to II. 2, 53. In वृत्रहयति a *lopa* of two letters has taken place (अन्त्यस्वरादिसमुदायलोप) before इन्, in accordance with III. 2, 12.

33. चित्रा गौर्यस्येति विग्रहे गोरप्रधानस्येत्यादिना ह्रस्वत्वे गौणोऽपि गोशब्दो विद्यते।०॥ ननु किमर्थमिदमुच्यते ह्रस्वे सति (viz. चित्रगु) गोशब्द एवायं न भवतीति। नैवम्। एकदेशविकृतस्यानन्यवद्भावात् प्राप्नोति। किं च। संबुद्धौ जसि चौत्वे कृते गोशब्द एवं प्रवर्तते॥ T.

34. ननु ह्रस्वेऽप्यकारे कृते मध्ये स्त्रियामादा भविष्यति। किं दीर्घग्रहणेनेत्याह दीर्घ इत्यादि। गोशब्दोऽयमुभयलिङ्गस्ततः पुंलिङ्गपक्षे आप्रत्ययो न स्यादिति भावः॥ T.

41. चातुरिक इति चतुर्भिः क्रीत इति क्रीतादित्वादिकण् [का॰ २. ६. ८]।०॥ प्रियचतयतीति प्रियास्चत्वारो यस्यासौ प्रियचत्वाः। प्रियचत्वारमाचष्ट इतीनि कृते लोपस्वरादेशयोः स्वरादेशो विधिर्बलवानिति पूर्वमुत्वे पश्चादिनि लिङ्गस्य [का॰ ३. २. १२] इत्यादिनाऽन्त्यस्वरादिलोपः॥ चातुर्यमिति चतुर्णां भाव इति विग्रहे यण् च प्रकीर्तितः [का॰ २. ६. १४] इति यण्॥ T.

47. तद्धिते लक्षत इत्यप्यधिकारादित्यर्थः। लक्षत इति लक्षमनुसृत्येत्यर्थः। तेन पूर्वत्र न भवति। अत्र तु भवत्येव॥ T.

अप्यधिकारादिति संबन्ध इति। अप्यधिकारात्तद्धिते लक्ष्यत इति संबन्धनीयमित्यर्थः लक्ष्यमिति पूर्वाचार्यप्रयुक्तमुदाहरणम्। पूर्वत्रेति। शौवनमित्यादि॥ Pañjikâdurgapadaprabodha.

48. शब्द is used here to prevent वा from being taken in its technical sense of विकल्पेन Durg.

For the compound forms see IV. 3, 61.

49. ननु क्वावनुषङ्गलोपे सत्यचेरिति निर्देशेन भवितव्यम् । कथमयं सानुषङ्गनिर्देशः । सत्यम् । अयमेव निर्देशो ज्ञापयति । अञ्चेः क्वावनुषङ्गलोपो नास्ति । प्रतीच इति प्रत्यञ्चतीति क्विप् शस् ङसि ङस् वा । अनुषङ्गश्चाक्रुञ्चेदिति नलोपः ॥ Tril.

52. To पाद् Durg. gives गूढपाद् भुजंगः ।

Durg. and Tril. give the gaṇa हस्त्यादि as follows: हस्तिन् । कटोल । कण्डोल (om. T.) । गडोल । गण्डोल । महिला । दासी । गणिका [गण्डिका MS. Durg.] । कुसूल ॥

The gaṇa कुम्भादि—कुम्भपदी । जालपदी । शतपदी । अलिपदी । अशीतिपदी । सूत्रपदी । गोधापदी । कलसीपदी । विपदी (om. MS. Tril.) । द्विपदी । त्रिपदी । दासीपदी (om. T.) । अपदी (om. T.) । निष्पदी । आर्द्रपदी । कृष्णपदी । द्रोणीपदी (विष्णुपदी MS. Tr.) । कल्याणीपदी । सूकरपदी । सकृत्पदी (कृतपदी Durg.) । अष्टापदी । सूचीपदी ॥

54. ई does not include the *strîpratyaya* but must refer only to the *vibhakti* ङिसाहचर्यात् Durg.

55. तेन viz. since the *adhikâra* असंयोगात् ceases here.

59. धात्ववयवसंयोगान्न भवतीत्यर्थः । यवं क्रीणाति । कटं प्रुवत इति क्विप् । अधातुसंयोगाद्भवत्येव । तक्ष्वौ मकस्वाविति । अत एवाह । अनेकाक्षरयोरित्यादि ॥ अव्ययकारकाभ्यामेवायं विधिरिति यदुक्तं तदिह तुशब्दस्य व्यवस्थितार्थत्वाल्लभ्यत इति तेन महान्तौ तौ च नियौ चेति । परमौ च तौ लुवौ चेति महानियौ । परमलुवाविति । एवं शोभनलुवौ । उत्तमलुवाविति । ॰D.

60. अतिदेशो ऽयमिति। स च निमित्तरूपव्यपदेशशास्त्रकार्यभेदात् पञ्चधा भिद्यते। अथ निमित्तातिदेशो यथा ब्राह्मणवत्क्षत्रिये प्रवर्तितव्यम्। ब्राह्मणनिमित्तस्य यजनादेः क्षत्रियेऽपि सद्भावात्तत्रापि तद्वृत्तिर्भवति दिश्यते। नैवमिह यतो धातोर्निमित्तं क्रिया सा च स्वभावाद्द्रव्यवाचिनि भूशब्दे संभवतीति॥ नापि रूपातिदेशः। भ्रमेर्भूः। अत्र धातुरूपो भूशब्दो भवतीत्युक्ते प्रत्यासत्त्या भ्रमधातुः प्रतिपत्तव्यो भवति ततश्च धातुवदित्यपनीय भूर्भ्रम इति विदध्यात्०॥ व्यपदेशातिदेशोऽपि नैव यतो व्यपदेशः संज्ञा भूशब्दो धातुसंज्ञो भवतीति तदावत्करणमनर्थकमेव स्यात्०॥ शास्त्रातिदेशस्तु घटत एव धातोर्यच्छास्त्रं तदस्य भवति तत्पुनरीदूतोरियुवौ स्वर इति। किंतु तत्रापि गृह्यमाणे कार्यमेवानुसर्तव्यं तन्निष्ठत्वात्प्रवृत्तेः। अतः कार्यातिदेश एवायं गृह्यते। तत्पुनः कार्यमुवादेशलक्षणमिति तदेव दर्शयन्नाह भुवौ भ्रुव इति॥ T.

63. सर्वनामगणपाठे तस्य भवच्छब्दस्य ग्रहणं तेन भानि नक्षत्राणि सन्त्यस्येति वन्तुना शन्तृङा च नित्यं हे भवन्। तदन्तविधिरपि भवत्येव। परमश्चासौ भवांश्चेति परमभोः। लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्। हे भो ब्राह्मणि। हे भवति ब्राह्मणि॥ कथं तर्हि भो ब्राह्मणौ। भोःशब्दोऽयमव्यय आमन्त्रणार्थोऽस्ति। तेन द्विवचनबहुवचनयोरदोष इति॥०॥ अन्यः पुनराह। वादेरुत्वं योगविभागार्थम्। वादेरुलमित्येको योगः। ततो भवत इति विभञ्जनं विभागोऽन्यथाकरणमिति कृत्वा। तेन भगवदघवतोरपि भवति। भगं ज्ञानम् अघं पापं तद्विद्यतेऽस्येति वन्तुः। भवत इति पुनर्वचनं पूर्वविधेर्लक्षानुरोधार्थमाभ्यामन्यत्र न स्यात्।

हे भगोः। हे भगवन्। हे अघोः। हे अघवन्। नैवं भाषायां शिष्टप्रयोगो दृश्यत इति सूत्रकारमतम्।० D.

64. Durg. in his ṭîkâ illustrates each case in this and the following rules by numerous examples. The following *kârikâs* also occur in his comment on the present rule:

आचार्यमतं तु [तथा च वृद्धैरुक्तं Tril.]।

अज्ञाने कुत्सिते चैव संज्ञायामनुकम्पने।

तद्युक्तनीतावप्यल्पे वाच्ये ह्रस्वे च कः स्मृतः॥

तथा चाह। कुत्सितस्था तु या कुत्सा तदर्थः को विधीयते।

कुत्सितत्वेन कुत्सो वा न सम्यगपि कुत्सितः॥

II. 3, 1. यद्यपि प्रकृतिविभक्त्योः समुदायः पदं [cf. I. 1, 20] तथापि युष्मदस्मदोः पदमित्युक्त उभयोः स्थाने यो निष्पद्यते स लभतेऽन्यतरव्यपदेशम्।०॥

अपिशलीयमतं तु। पादस्त्वर्थसमाप्तिर्वा ज्ञेयो वृत्तस्य वा पुनः।

मात्रकस्य चतुर्भागः पाद इत्यभिधीयते॥

मात्रापरिमाणमार्यादि मात्रिकमुच्यते। तेन न पादादावित्यनेनैव प्रतिषेधः [II. 3, 5]। पदग्रहणं सविभक्त्यर्थं।० Durg.

यस्यैव वाक्यस्य युष्मदस्मदोः पदं श्रुतत्वात्तस्यैव वाक्यस्य पदादिति वेदितव्यम्।०। यद्यपि पदमेकवचनं तथापि युष्मदः पदम् अस्मदः पदमिति प्रत्येकमभिसंबन्धादर्थाद् द्वे पदे इति यथासंख्यं न विरुध्यते।०। Tril.—वा has to be supplied from II. 2, 62.

2. वाम्नौ is a लुप्तद्वितीयाद्विवचनं पदं.

3. Acc. to Tril. तेमे and त्वामा should be treated as dvandvas, in the same way as वाम्नौ.

4. Tril. supplies the rest of the second śloka, as given in note 3. It is not stated whence the two couplets are taken.

5. गौणयोग इत्यादि । ग्रामस्यादिभिर्युक्तः । तेन युक्तानां युष्मदस्मदादीनामादेशा भवन्त्येवेत्यर्थः । गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययो भविष्यति । किं योगग्रहणेन । सत्यम् । अन्यत्र गौणे ऽपि विधिर्भवतीति ज्ञापयति ।° D.

7. इह श्रुतानुमितयोः श्रौतःसंबन्धविधिर्बलवानिति न्यायाद् युष्मदस्मदोरेव द्विवाचिनः प्रतिपत्तव्याः । न तु समासस्येति ।° अतियुवाभिरत्यावाभिरिति युवामतिक्रान्तैरिति विग्रहः। यद्यपि समासार्थे बहुवचनं तथापि युष्मदस्मदोरेव द्विवाचिनः प्रत्यया गृहीताः ।° तथा चोक्तम् ।

समस्येते यदैकत्वे बहुत्वे युष्मदस्मदी ।
समस्ये वर्तते द्वित्वे न युवावौ तदा तयोरिति ॥

अतिक्रान्ताविति प्रत्येकं संबध्यते । त्वामतिक्रान्तौ युष्मानतिक्रान्तावित्यर्थः । अमौ चामित्यौकारस्यामादेशः ॥ युष्मदीय इति। इह यद्यपि प्रत्ययलोपलक्षणन्यायेन द्विवचनं दृश्यते तथापि युवावौ न भवतो ऽन्तस्यालोपात् । एतदुक्तं भवति । पूर्वसूत्रादन्तलोप इह वर्तते स चार्थवशात्सप्तम्या संबध्यते ऽतो ऽन्तलोपे सति युवावावित्यर्थः । इह चान्तलोपो नास्तीति साक्षाद्विभक्तौ तस्य विहितत्वादित्याह प्रत्यय इत्यादि ॥ Tril.

10–13. त्वमहम् । यूयंवयम् etc. are likewise considered as dvandvas by the commentators, see note on 3.

10. अतित्वम् अत्यहमिति युवां युष्मान्वा । आवाम् अस्मान्वा ऽतिक्रान्त इति विग्रहः । एवं प्रियौ युवां प्रिया यूयं वा यस्य

स प्रियत्वं प्रियाहमिति । ° Durg. On the *luk* in the *avyayîbhâva* see II. 3, 4.

11. अतियूयमिति त्वां युवां युष्मान्वातिक्रान्ता इति विग्रहः D.

12. त्वां युवां युष्मान्वाऽतिक्रान्तायेति विग्रहः Durg.

14. अतियुवत् ° युवामतिक्रान्ताद् युवामतिक्रान्तेभ्य इति वा । आवामतिक्रान्ताद् आवामतिक्रान्तेभ्य इति विग्रहः । Tril.

15. Durg. remarks that others read भ्यस्भ्यम्;—तदाऽकारमन्तरेणापि धुट्येत्वं न स्यात् ।

16. On साम् i.e. सु + आम् see II. 1, 29.

प्रिययुष्मयां° प्रिया यूयं येषाम् । त्वामतिक्रान्तानामिति विग्रहे युष्मदस्मदोरुपसर्जनयोरसर्वनामत्वान्न सुरागम इति । ° Durg.

17. यदा ग्रसादिप्रसङ्ग आनादय (II. 3, 9 ff.) आदेशा उच्यन्ते तदा न भवतीत्यर्थः । Tril.; Durg. quotes श्लेष्मणः स्थाने त्रिकटुकमौषधं प्रयुञ्जीत । (श्लेष्मणो निवृत्तिरभिधीयते).

22. इकार उच्चारणार्थः । Durg.

23. छन्दस्येतौ योगाविति भाष्यकारो भाषते । शर्ववर्मणो वचनाद्भाषायामप्यवसीयते । तथा च । मघवद्वृत्रलज्जानिदाने (? मघवद्भृत्र° MS.) स्थीकृतप्रग्रहमर्वतां व्रज इति दृश्यते ॥ वन्तुना प्रयोग इति परो ब्रूते । तर्हि व्याप्तिरपि स्यात् ॥ Durg.

24. गणपाठाच्चेति । राजादिगणे (!) जरा जरस् चेति पठ्यते । तेनाप्रत्ययेऽपि भवति तच्च नित्यं तत्र विकल्पाभावात् ॥ Tril.

26. Against the restrictions (II. 1, 65; 67) to the general *sandhi*-rule, I. 2, 10.

27. On नामि see II. 1, 72.

29. त्यदादयः सर्वनामसु पठ्यन्ते। °। ते पुनरर्थाद् द्विपर्यन्ता एव युष्मदस्मदोरन्तलोपात्। युष्मदस्मद्भ्यां प्रागपाठाच्च व्यवहितस्य भवच्छब्दस्य न भवतीत्याह सर्वनामान्तर्गण इत्यादि। °। नन्वेकशब्दोऽत्र पठ्यते तस्याकारस्याकारे कृते तद्विकारबाधा कथं न स्यात्। एके एकेन एकेभ्य इति। नैतदेवं त्यदादिष्वेकशब्दस्य पाठः। ° Durg.

31. Durg. remarks: अद्वेरिति वर्जनादिह चकारेण त्यदादिर्विशिष्यते। अपि तु त्यदादिर्गुणीभूतैर्गकारै (!) विशिष्यते। त्यदादीनां यो दकारो यत्र तत्र स्थित इति।

37. आदिश्यत इत्यादेशः। दिशिरत्र कथने वर्तते। यथा। धर्मं दिदेश मोचाय। ° Durg.

तथा चोक्तं चान्द्रव्याकरणे। एवमिदमोऽपि योज्यमिति। अयं तु विशेषः। इदं कुण्डलमानय। अथो एतं (? एनं) परिवर्तयेति। मकारान्त एव भवति॥ Tril.

39. Against II. 1, 18. The final *r* of भिर् seems to indicate that this and the next sûtra formed originally one rule.

44. येनेष्यते—i.e. with the affix य in the sense of अनडुहि साधु etc.

46. इज़ादयः। इजिति यजतेः क्विप् संप्रसारणे च निर्देश इत्याह यजादीनामिति। ननु विशेषाभावादिज् गताविति कथं न गृह्यते। नैवम् आदिशब्दस्य व्यवस्थावाचित्वाद् इगादिष्वृलिज्शब्दपाठाच्च। ° Tril.

50. यदि धातोरित्यवयवावयविसंबन्धे षष्ठीयं हचतुर्थान्तस्य तृतीयादेरिति चावयवस्य विशेषणं कथं तर्हि गोधुक् काष्ठधगिति।

सत्यं व्यपदेशिवद्भावात् । बुद्धिर्हि स्वबीजपरिपाकवशादुत्पद्यमाना ऽसत्यपि भेदे भेदं जनयति । यथा राहोः शिरः शिलापुत्रस्य शरीरम् । ° Durg.

53. A restriction of II. 2, 53.

55. साधु तक्ष्णोतीति साधुतक् Tril.; मांसपिपक् । मांसं पिपक्षतीति क्विप् Durg.

58. The पूर्वविधयः bearing on the given cases are II. 1, 14; 18; 19; 3, 56.

59. घोषवति रो भवति । अघोषे रो न स्यादिति व्यावृत्तिबलादस्य प्रतियोगी विसर्गः साधितो भवति सत्वापवाद इति तेन सर्पिःषु धनुःषु दोःषु पत्ने पररूपं भवत्येवेत्याह भे र इति । उत्तरार्थं चेति । ° Durg.

64. अपिग्रहणं see II. 3, 35.

II. 4, 3. नन्वनव्ययमव्ययं भवति (i.e. अव्ययीभावः) इत्यन्वर्थसंज्ञया ऽव्ययाच्चेति लुकि सिद्धे यद्वचनमिदं तज्ज्ञापयति । अव्ययत्वमप्यनाप्नोति । ° Durg.

4. न व्येतीत्यव्ययं न विद्यते संख्या यस्येत्यसंख्यं पर्यायः कथ्यते। तथा चाह ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ °
निपाताश्चादयो ज्ञेया उपसर्गाश्च प्रादयः ।
द्योतकत्वात् क्रियायोगे लोकादवगता इमे ॥ Durg.

He gives the entire *gaṇa*, after which he remarks: अन्ये ऽव्यया यथास्थानं वक्ष्यन्त इति ।

5. Durg. has the following *kârikâs*:

रूढादण् ण्यश्च रूढात् स्यादादैदौदादिकस्वरात् ।
न तु गान्धारिशाल्वेयान्नकारादेः कुरोरपि ॥
इदन्तकोशलाऽजादात् स्त्रियामपत्यमात्रता ।
पाण्डोश्चान्योऽप्युलोपोऽस्मिन्संज्ञाशब्दा हि तद्धिताः ॥
प्रत्ययश्चादिण् शाल्वांशात् कलकूटाश्मकादपि ।
कम्बोजादेः सदा भेदात् प्रत्ययो नैष दृश्यते ॥
कुन्त्यवन्तिकुरूणां च अभेदाच्च स्त्रिया सदा ।
नापत्यप्रत्ययो दृष्टो यथा कुन्ती कुरूरिति ॥
अदन्ताच्च स्त्रियां नैव प्राच्यभर्गादिवर्जनात् ।
शूरसेनी यथा माद्री राज्ञी भार्गी भवेदिति ॥
अरूढाच्च प्रवक्ष्यामि वतण्डी स्त्रीति पूर्ववत् ।
आङ्गिरस्यां स्त्रियां ण्यस्य वातण्ड्यायास्य किं लुका ॥
इणो बहुस्वरात्प्राच्याद्बहुत्वे त्वस्त्रियां तथा ।
पान्नागारा इति ज्ञेयमप्राच्याद्वास्ति दासयः ॥
भेदाभेदाद्विभाषेयमुपकादेश्च नोच्यते ।
प्रत्ययस्त्वनुकारेण उपका औपकायणाः ॥
एवमन्येऽनुसर्तव्याः संज्ञाशब्दा हि तद्धिताः ।
लोकसिद्धा न व्युत्पाद्याः कस्मात्कार्येण वक्ष्यति ॥
लुग्विधानमिदं यच्च दिङ्मात्रमिह दर्शितम् ।
तन्मन्दमतिबोधाय साध्यदृश्या तु निष्फलम् ॥

9–13. The references अपादाने पञ्चमी etc. do not actually occur in our work, but are implied in the rule II. 4, 19.

10. Durg. quotes: तथा चाह । अनुमन्तृ निराकर्तृ प्रेरकं

त्यागकारणम् । व्याप्तेनाप्तं ददातेस्तु संप्रदानं प्रकीर्तितम् ॥ संप्रदानं तदेव स्यात् पूजानुग्रहकाम्यया । दीयमानेन संयोगात् स्वामित्वं लभते यदि ॥

कथमित्यादि । श्लाघादीनां कंचिदर्थं बोधयितुमिष्यमाणे कारके श्लाघादयः स्वभावान्नयतिवद् द्विकर्मका एवेति कर्म प्राप्नोति । देवदत्तायात्मानं परं वा श्लाघ्यं करोति योऽर्थः स देवदत्ताय श्लाघत इति । तथा च । श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिपः । (Bhaṭṭik. VIII. 73.)

आत्मानं श्लाघ्यं कथयन्परस्त्रीभ्य आगत इत्यर्थः ॥ देवदत्ताय ह्नुते । ह्नोतव्यं किंचिद्देवदत्तं ज्ञापयति ॥ तथा देवदत्ताय तिष्ठते । स्थित्या ज्ञापयति प्रकाशयति । प्रकाशने तिष्ठतीति रुचादिः । ० ॥ यस्मै कुप्यति । तत्र चतुर्थी सिद्धा । वक्तव्यं व्याख्येयमिति । ० Durg.

11. कश्चिदाह । गङ्गासमीपो देशो गङ्गेत्युपचारात् । आधारस्त्रिविधो ज्ञेयः कटाकाशतिलादिषु । अन्यः पुनराह ।

उपश्लेषस्य चाभेदः कटाकाशतिलादिषु ।
उपकारास्तु भिद्यन्ते संयोगिसमवायिनाम् ॥
अविनाशो गुरुत्वस्य प्रतिबन्धेष्वतन्त्रता ।
दिग्विशेषादवच्छेद इत्याद्या भेदहेतवः ॥ ० Durg.

12. तथा चाह । कारकान्वयाबेन क्रियानिष्पत्तिकारणम् ।
यद्वै विवक्षितं तेषु करणं तत्प्रकीर्तितम् ॥ Durg.

13. चन्द्रगोमी तु । अक्षाणां दीव्यति । अक्षेषु दीव्यतीत्यपि विवक्षां मन्यते । ० Tril.

15. तथा चोक्तम् । यः क्रियां कर्तृकर्मस्थां कुरुते मुख्यभावतः ।
अप्रयुक्तः प्रयुक्तो वा स कर्ता नाम कारकम् ॥ ० D.

16. कारकाणां संबन्धिन उभयस्य प्राप्तौ सत्यामर्थादेकस्मिन्नेव संज्ञिनि परं भवति। अन्यथा संप्रदानादिसंज्ञाऽनर्थिका स्यात्। ब्राह्मणाय गां ददातीत्यादौ वाक्ये किमुभयस्य प्राप्तिः। यस्मिन्संज्ञिनि भिन्नाधिकरणेन बहुव्रीहिणा ग्रामाय दत्त्वा तीर्थं गत इति धनादिकमिति संबन्धः। एवमन्येऽपि प्रयोज्याः। लोके शास्त्रे च न संज्ञया संज्ञान्तरस्य बाधा।०॥

संप्रदानादयः संज्ञा रुचिधारिविवर्जिताः।

लोकोपचारात्संसिद्धाः सुखबोधाय दर्शिताः॥ Durg.

ग्रामायेत्यादि। गत इति संबन्धादपादानं ग्रामः प्राप्नोति। दानसंबन्धाच्च संप्रदानम्। परं संप्रदानमेवेति। एवमन्यत्रापि यथायोगं परत्वं वेदितव्यम्।० Tril.

18. सिद्धस्याभिमुखीभावमात्रमामन्त्रणम्॥ नन्वामन्त्रणं वाक्यार्थ इति मतान्तरमेतत् क्रियासंबन्धात्पूर्वं युगपद्धर्मातिरेके षष्ठी स्यादिति प्रथमारभ्यते॥ Durg.; आमन्त्रणार्थस्यातिरिक्तत्वाद्भेदलक्षणा षष्ठी स्यादिति भावः॥ Tril.

22. दक्षिणेन ग्राममिति दक्षिणस्यामदूरवर्तिन्यां दिशि ग्रामस्येति विगृह्याऽदूरे एनप्रत्ययः स पुनः सद्यआद्यत्वात् (II. 6. 37) T.

23. कर्मप्रवचनीय°। सिद्धेयं संज्ञा। उक्तं च।

क्रियाया द्योतका नेमे संबन्धस्य न वाचकाः।

नापि क्रियान्तरापेक्षाः संबन्धस्य तु भेदकाः॥

यथाऽभिद्योतत इत्यादौ क्रियां द्योतितवन्तः। न तथालक्षणादिषु संबन्धस्य तु वाचिकाः।० Durg.

25. यदि°। युष्मदोऽपि मन्यतेः कर्मत्वाच्चतुर्थी कथं न भवतीत्याह यदीत्यादि।० Tril.

26. अलं भूषणपर्याप्तिवारणेषु। इह पर्याप्त्यर्थो योगग्रहणात्। पर्याप्तः शक्तः समर्थः प्रभुरिति पर्यायः॥ Durg.

29. पुत्रेण स्थूलः। पुत्रेण गोमानिति प्रत्येकं संबन्धः। सहार्थयोगस्योभयनिष्ठत्वात्। ° Tril.

30. फलमनिष्पादयन्नपि क्रियायोग्यतया लोके हेतुरुच्यत इत्याह योग्यतामात्रेत्यादि। क्रियासिद्धावसाधकतम इत्यर्थः। Durg.

34. षष्ठी चानादर इति न वक्तव्यमित्याह रुदत इत्यादि। रुदन्तमनादृत्य गत इत्यर्थः। इह रुदतः संबन्धी गत इत्युक्तेऽपि न कदाचिदस्युत्पत्तिरिति भावः। पक्षे रुदति प्राव्राजीदिति॥ Tril.

49. यदाहुः। स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।
उभयोरन्तरं यच्च तदभावे नपुंसकमिति॥
लोकेभ्यः शास्त्रकारेभ्यः। लिङ्गानुशासनेभ्यश्च गम्यमानेति भावः। Durg.

II. 5, 1. मिलितं युक्तमिति तत् पुनर्विशेष्यस्य विशेषणेन संबन्धः। यदाह विमलमतिः।

विशेष्यस्य विशेषेण मिलितं युक्तमुच्यते।
समासाख्यं तदेव स्यात् तद्धितोत्पत्तिरेव च॥

युक्तश्चासावर्थश्चेति विग्रहः।° T.

2. युक्तार्थमात्रस्था इति कथमेतद् यावता पूर्वसूत्रे समासस्य प्रधानत्वात् तस्यैवानुवर्तनमुचितम्। सत्यम्। अप्रधानस्यापि युक्तार्थस्यानुवर्तनं तद्ग्रहणादेवावसीयत इति। अन्यथानन्तरत्वात् प्रधानं समास एवानुवर्तिष्यते। किं तद्ग्रहणेनेति तेन तद्धितनाम-

धातुष्वपि लोपो भवति । तत्रापि युक्तार्थस्य विद्यमानत्वादित्याह राजता । पुत्रीयतीति ।° T.

4. Exceptional cases, such as अप् [अद्भिः, अब्गमनम्] are excluded. T.

अतिदेशो ऽयमिति । यद्यपि शास्त्रान्तरे बहवो[1] ऽतिदेशा निरूपितास्तथापि कार्यातिदेश एवायं तन्निष्ठत्वात् प्रवृत्तेः कार्ये ऽप्यतिदिश्यमाने यस्य यदुक्तं तस्य तदेव श्रुतत्वात् ॥ T.

5. For the comment *cf.* also P. II. 1, 49—II. 2, 6.

पूर्वेषुकामशमी । प्राच्यदेशे ग्रामो ऽयम् T.

Alter श्रेणिकृताः in the Text, with MS. A.

क्लिष्टाक्लिशितं MSS. Tril. D. and O.; क्लिष्टाक्लिष्टं MS. C.

क्रयाक्रयिका° महान्यः क्रय उच्यते ऽल्पा च क्रयिका क्रयावयवसंबन्धात् क्रयः क्रयिकावयवसंबन्धाच्च स एव समुदायः क्रयिका ततश्च क्रयश्चासौ क्रयिका चेति विग्रहः । ह्रस्वस्य दीर्घता । फलाफलिकेत्यादि ।° ॥ द्रुम्यपोटेत्यादि । द्रुभमर्हतीत्यर्थे दण्डादिभ्यो यप्रत्ययो दृश्यते । पोटा उभयव्यञ्जिका ॥ ° ॥

The MSS. of Tril. read likewise श्रवण for श्रमण.

अर्धजरतीयम्° अर्धा चासौ जरती चेति अर्धजरती तत्रभवम् अर्धजरतीयमित्यभिधानादीयः । न ह्यत्रार्धशब्दः समप्रविभागे वर्तते ॥ ° ॥ अब्राह्मण° । यदुक्तम् ।

सतां न च निषेधो ऽस्ति सो ऽसत्सु च न विद्यते ।
जगत्यनेन न्यायेन नञर्थः प्रलयं गतः ॥ ° ॥

समासस्ताद्धितस्य सुखप्रतिपत्त्यर्थमनुष्टुब्बन्धेन विरचित इत्यत्र वि-

१ बहुप्रकारा C.

ज्ञेयग्रहणम् । एवमुत्तरेष्वपि योगेषु लाघवं न चिन्तनीयं प्रतिपत्तिलाघवस्य शर्ववर्मणोऽभिमतम् ॥ T.

6. तद्धितेत्यादि । एकापीयं सप्तम्यर्थवशाद् [द्विधा O.] भिद्यते । तद्धितस्यार्थे विषयभूतेऽपत्येकणादिवर्जितस्य स्वरादितद्धितस्य चाभिधेये उत्तरपदे च परतः समाहारे चाभिधेये समासोऽयमभिधीयते । T.

8. °द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैरिति कश्चिदाह (Pâṇ. II. 1,24)। तदिह सामान्यविधानात्सिद्धमित्याह कष्टश्रितमित्यादि ॥०॥ तथा गम्यादीनामुपसंख्यानमित्यपि (ib. Vârtt.) न वक्तव्यमित्याह ग्रामगमीत्यादि ॥०॥ खट्वारूढो जाल्म इति । असमीक्ष्यकारी विमार्गप्रस्थित[1] इत्यर्थः। अधीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वारोढव्या । तत्र योऽन्यथा खट्वामारोहति स तिरस्कारार्थमेवमुच्यते। खट्वारोहणं चात्र विमार्गप्रस्थितस्योपलक्षणम् । सर्व एवाविनीतः खट्वारूढ इत्युच्यते। नित्यसमासश्चायम् । नहि वाक्येन क्षेपो गम्यते। खट्वा क्षेपे क्तेन समस्यतेऽभिधानात् क्षेपादन्यत्र न भवति । खट्वामारूढोऽध्यापकोऽध्यापयति । किं खट्वा क्षेप इत्यनेन ॥ तथा कालाः क्तेन समस्यन्त इत्यनेन । तथा कालाः क्तेन समस्यन्त इत्यपि न वक्तव्यमित्याह । अहरित्यादि । षण्मुहूर्ताश्चराचरास्तेऽहर्गच्छन्त्युत्तरायणे रात्रिं गच्छन्ति दक्षिणायने ॥ मासप्रमितश्चन्द्रमा इति । आदिकर्मणि क्तः कर्तरि चेति कर्तरि क्तः । मासं प्रमितः मासं प्रमातुमारब्धः । प्रतिपच्चन्द्रमा इत्यर्थः ॥ *cf.* P. II. 1, 26 ; 28, etc.

तृतीयेत्यादि° । काकपेया नदीति पूर्णत्वोद्भावनं स्तुतिर्निन्दा-

---

१ विमार्गस्थित O.

र्थमध्यारोप्यते काकपेयत्वं नाम । एवं बाष्पच्छेद्यानि तृणानि मृदुत्वोद्भावनं स्तुतिरयत्नच्छेद्यत्वं च निन्दार्थमध्यारोप्यते ॥०॥

पञ्चमीत्यादि । भयभीतभीतिभीभिर्निर्गतेनापेतापोढमुक्तपतितापत्रस्तैरल्पशः [P. II. 1, 37; 38 and vartts.] इति न वक्तव्यम्। अधर्मजुगुप्सुरित्यादावन्यत्रापि पञ्चमीसमासस्य दर्शनात्। यदप्यल्पश इति वचनात् प्रासादात्पतित इति महतो न भवति तदप्युक्तं महतोऽपि दर्शनात्। यदाह मयूरः। भास्वद्भावोद्गतेनेति। न चात्राल्पविवक्षा युक्तिमती० ॥

षष्ठीत्यादि । आत्मषष्ठ इति पूरणप्रत्ययान्तेनापि समासोऽभिधानात्। छात्राणां पञ्चम इत्यादिष्वनभिधानादेव न भविष्यति ॥०॥ ब्राह्मणस्य कर्तव्यमिति तव्येन तावद्वाक्यमिष्यत एवेत्याह वृत्तिरपीति वाक्यमेवेति शन्तृङानशोरनभिधानमेव समासस्येत्यर्थः ॥ T. cf. P. VI. 3, 6; and 5, Vârtt.; II. 2, 11, etc.

सप्तमीति । *cf.* P. II. 1, 40 ff. The MSS. of T. read ०श्चाङ्क्षः

9. ०अधिकदशाः।० अत एवाह शाकटायनः। अधिका दश येषु तेऽधिकदशा एकादशादय इति । ० ॥ दण्डादण्डि० । तथा मुष्टामुष्टीति नाम्यन्तस्य पूर्वपदस्यात्वं दृश्यतेऽव्ययत्वं चास्य स्वभावादिति ॥ Tril.

10. विदिगित्यन्तरालं दिगुच्यते ॥ ० ॥ ननु दिङ्नामान्यन्तरालम् [P. II. 2, 26] इत्यस्याभावात् कथं दिङ्नाम्नामेव समास इत्याह । अर्थादित्यादि । अन्यथा विदिगभिधेयत्वमेव न स्यादित्यर्थः ॥ T.

11. इतरेतरयोग इत्यादि। समुच्चितिः समुच्चयो राशीभावः स चानयोरपि विद्यत इत्यर्थः । तत्रेतरेतरयोगोऽवयवः प्रधान

इति तल्लते द्विवचनबहुवचने भवतः° । समाहारः संहतिः प्रधान इत्येकवचनमेव ।° T.

14. इतिपाणिनि । पाणिनिरित्ययं संज्ञाशब्दो लोके ख्यातिं गत इत्यर्थः ।° see P. II. 1, 6, ff.

15. सुषमम्° । शोभनत्वं समस्येत्यादिरिति । आदिग्रहणाद् विगतत्वं निर्गतत्वं दुर्गतत्वमपरत्वं समस्येति° । अपरशब्दस्यानव्ययस्यापि समासे पूर्वपदार्थप्राधान्यमस्तीत्यव्ययीभावसंज्ञाप्रवृत्तौ नपुंसकलिङ्गत्वमव्ययपूर्वपदं च प्रायेणेत्यन्वर्थः कथ्यते ।° T.

16. On the *four* Âryâ-stanzas *cf.* P. II. 4, 2–14 and Vs. Tril. remarks: इदानीमुक्तानामुदाहरणानामर्थप्रदर्शनद्वारेण समाहारद्वन्द्वस्येतरेतरयोगस्य विषयं विवेक्तुमर्याभिरभिधानस्य व्यवस्थामाह । अनुवाद इत्यादि° । चरणशब्दः शाखानिमित्तकः पुरुषे वर्तते । कठेन प्रोक्तोऽध्ययनविशेषः शाखासंज्ञकः सोऽयमित्यभेदात् कठः । कलापिना प्रोक्तः कालापः । कुथुमिना प्रोक्तः कौथुम इति कठादिशब्दोऽध्ययनविशेषमाचचाणो यदा तदध्ययनसंबन्धात्तदध्येतृषु पुरुषेषु वर्तते तदा कठादीनां चरणानां समाहार एव द्वन्द्व इत्यर्थः । ° । स्थेणद्यतनी° *i.e.* स्था-इण्-अद्यतनी°-॥ निकटपाठानामिति । निकटः पाठो येषामध्येतृणां ते तथोक्ताः । पदकक्रमकमिति । पदमधीते क्रममधीत इत्यर्थे बहुलत्वात् क्रमादिभ्यः कप्रत्ययो दृश्यते । पदमधीत्य क्रममधीत इत्यर्थः । अधीयमानयोः पदक्रमयोः संनिहितत्वात्तदध्येत्रोरपि पदकक्रमकशब्दवाच्ययोर्निकटपाठत्वम् ॥ °ग्रामाणां मा भूत् । जाम्बवश्च(१) ग्रामः शालुकिनी चेति विग्रहः । जाम्बवशालुकिन्यौ(१) (see

---

१ जाम्बर° O.

P. II. 4, 7 Sch.)। यदा तु शौर्यं च नगरं केतवता च ग्रामस्तयोर्द्वन्द्वे शौर्यकेतवतमिति॰ ॥ (see Mahâbhâshya) ॥ कारूणामिति। कारवः शिल्पिनो रजकादयः ॥ प्राणित्वर्यकाङ्गानामिति तूर्य एव तूर्यक इत्यार्यापूरणार्थं स्वार्थे कप्रत्ययः । ॰ ॥ क्षुद्रजन्तुकफलानामिति॰। तथापीह जन्तुशब्दसान्निध्यादल्पपरिमाणं प्राणिनामाह तत्र स्मृतिभेदः ।

क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः ।
शतं वा प्रसृतो येषां केचिदा नकुलादपि ॥॰

क्षुद्र एव य इति चोदयितुं शक्यः । स्वशोणितरहितो मशकादिरेव ॥ शतं वा प्रसृतो येषामित्यन्या स्मृतिः । येषां शतेन प्रसृतोऽञ्जलिवर्गं पूर्यते ॥ केचिद् आ नकुलादपीत्यपरा स्मृतिः । इयमेव स्मृतिः प्रमाणमितरासां परस्परविरोधादिति॰ ॥ अद्रव्याणामित्यादिसमता तुल्यता । समाहार इतरेतरयोगश्चेत्यर्थः । ॰ ॥ दधिघृता इति व्यञ्जनविशेषकाणां समाहारस्य विभाषितत्वात्॰ ॥ T.

The second half of the *fourth* stanza should begin with सम, the only irregularity being in the seventh *pâda* which has five *mâtrâs*.

17. On the sloka अपाचादिः॰ see Vârttikas to P. II. 4, 30.

18, 19. See P. VI. 3, 34; 37; 38; [Com., 36; 39-41]. दत्ताभार्य इति दत्तागुप्ताशब्दौ संज्ञायामपि वर्तमानौ दानगोपनक्रियाप्रवृत्तिनिमित्ताविति भाषितपुंस्कता । T.

21. See P. VI. 3, 46 and Vârtts.

25. Tril. warns us that ईषदर्थे should be kept distinct from अर्थे.

26. इयमित्यादि। ननु कथमवधारणम्। ईषदर्थे नित्यं प्राप्त एव कुत्सितार्थे त्वप्राप्त एव कादेशः। ततश्चोभयत्र विभाषा युक्तेति। सत्यम्। विभाषयेति निर्देशादिह कादेशस्य विधेयत्वं न विभाषायाः। यच्च विधेयं तदप्राप्तमेवेति मन्यते॥ ईषदित्यादि नित्यं कादेशे प्राप्ते कवादेशः कदादेशश्चोष्णशब्दे विधीयते। वक्तव्यमिति व्याख्येयं लोकोपचारादित्यर्थः॥ T.

27. See P. VI. 3, 65. क्वचित् (as well as the explanatory terms लच्छानुरोधात् and लच्छतः) acc. to Trilochanadâsa (on II. 6, 49) mean यथालच्छम्(१)

28. दात्राकृती कर्णौ यस्य। द्विविधौ कर्णौ यस्य° इति विग्रहः॥ T. See P. VI. 3, 115, 116.

29. See P. VIII. 3, 46; also ib. 40 and Vârtts. to ib. 38.

II. 6, 1. अपत्यस्य संबन्धिशब्दत्वाद् अपत्यवतः प्रत्ययो भवन्नर्थात् षष्ठ्यन्तादेव भवति।°॥ यद्येवम् अपत्यशब्दस्य पुत्रपर्यायत्वात् कथं पौत्रादौ प्रत्ययः। न खलु तदस्यापत्यम्। तथा हि लोके पितामहोत्सङ्गे बालकमासीनं दृष्ट्वा कश्चित् कंचित् पृच्छति कस्येदमपत्यमिति स आह देवदत्तस्येत्युत्पादयितारं व्यपदिशति नात्मानमिति तदयुक्तम्। नायमपत्यशब्दः पुत्रपर्यायः। किं तर्हि न पतति वंशो येन जातेन तदपत्यमित्यन्वर्थनिर्देशः। तेनापत्यापत्यमप्यापत्यमुच्यते।°। एवं चाद्यप्रकृतेरुत्तरं सर्वमपत्यतया सामान्येन विवक्षितम्। अतो न्यायादेवाद्यप्रकृतेः प्रत्ययविधिरित्यालोच्याह। अपत्य°।°॥ यद्येवं कथं गार्ग्यस्यापत्यं गार्ग्या-

१ यथालच्छम् C.; om. D. यथालक्षणम् O.

यण:। दाक्षेरपत्यं दाक्षायण इत्याह पौत्रादेरिति। पौत्रादिवाचिनः पुनः शब्दात् प्रशस्ते प्रशंसायुक्त एवेत्यर्थः। आद्येनैव प्रत्ययेनापतनार्थ उक्तः पुनः प्रत्ययविधानं प्रशंसामेवेति प्रतिपादयतीत्यर्थः। तत्र प्रशस्तो गुर्वायत्त उच्यते०। तस्मिन् पित्रादौ [गुरौ] जीवति सति तदादिष्टमाचरणप्रशंसार्थं गार्ग्यायण उच्यते। तथा यो गुरावसत्यपि न स्वैरी स मृतस्यापि गुरोस्तदादिष्टाचरणात् प्रशंसार्थं गार्ग्यायण उच्यते ॥ ० ॥ स्त्रियामपत्ये न भवति। यथा गार्गी स्त्री। युक्तं चैतद् वर्जनं स्त्रियाः प्रशस्तत्वानुपपत्तेः० ॥ उपगवपत्यं चेति न वक्तव्यमिह तद्धितवृत्त्या समासवृत्तिर्बाध्यते। पूर्वे तद्धितवृत्तेरेव बाधितत्वात्। पक्षान्तरे समासो न निवर्तते बाधकाभावात् ॥ T.

2. गोत्रेत्यादि। अपत्यं पौत्रप्रभृतिकं गोत्रं तस्यादिभूतादादिपुरुषात्। इहापत्यसामान्यविवक्षायामाद्यप्रकृतेरित्यर्थः। अन्यत्रेति यो गोत्रादिभूतो न भवति। अपि तु कश्चिदर्वाचीनो गर्गनामा। यच्च पौत्राद्यपत्यं न भवति। अपि तु प्रथममेव। तत्रेणत इत्यर्थः ॥ क्वचित् प्रथमापत्ये ऽप्यभिधानं दृश्यत इत्याह। अनन्तरो ऽपीति ॥ प्रथमापत्ये ऽणपीत्याह जामदग्न्यः। पाराशर इति चेति ॥ गर्गादिप्रभृतिगणो गणपुस्तके ऽभियुक्तै[1] वेदितव्य एव ॥ T.

3. प्राङ्नडादेरिति कुञ्जाद्यन्तर्गणो नडादिस्ततः प्रागित्यर्थः॥ T. *cf.* P. IV. 1, 98, 99.

4. विनतायाः सुपर्ण्याः कमण्डल्वा युवतेरपत्यमिह विग्रहः। वाक्रन्तकद्रुकमण्डलुभ्यः संज्ञायामिति नदादिदर्शनात् कमण्डलुशब्दादूङ्प्रत्ययः ॥ See P. IV. 1, 67, 71, 120-123.

---

१ अभियुक्तेन D.; अभियुक्तैः O.

5. अस्यापत्यमिति ।° अकारलोपे प्रत्ययमात्रं पदम् ॥ T.

7. °यथा दण्डयोगाद् दण्डः पुरुष इति रागयोगाद्रागः ॥° [P. IV. 2, 1; 2] ॥ धर्मिणो° । यस्माद्धर्मिणो सकाशात् समूहो धर्मोऽभेदेन नोपपद्यते तस्माद्धर्म्यैव समूहः । [P. IV. 2, 37; 38] ॥ See also P. IV. 2, 24; 59; 55 resp. एवमित्यादिर्यस्येति तस्येदमित्येवंप्रकार आदिर्यस्येति विग्रहः । एवमादेराकृतिगणत्वात् तत्र जात इत्यादिष्वर्थेष्वण्° ॥ T.

8. तरतिरयमस्ति प्लवने । यथा तरति पत्त्रं न निमज्जति । अस्ति प्लवनपूर्वके देशान्तरप्रापणे च । यथा नदीं तरति पान्थः । अस्त्यभिभवे च । यथा तरति ब्रह्महत्यां योऽश्वमेधेन यजत इति° ॥ घण्टया चरति घण्टिक इत्याह । एवमिति तत्र क्वचिदधिकारादिह द्विस्वरस्य न वृद्धिरिति ॥°॥ मृदङ्गश्चासौ शिल्पं चेति मृदङ्गशिल्पम् । ननु कथं कर्मधारयो भिन्नाधिकरणत्वात् । मृदङ्गो हि वाद्यभाण्डं शिल्पं च विज्ञानपूर्वकं कौशलं तत्क्रियाभ्यासपूर्वकमिति । सत्यम् । इह मृदङ्गवादनशिल्पे मृदङ्गशब्दः प्रतिपत्तव्यो वृद्धस्मरणात् । ततो मृदङ्गेन शिल्पेन योगात् पुरुषोऽपि तथोच्यते । तेन मृदङ्गशब्दात्प्रत्ययः स्वार्थे पूर्ववत् । अथवा मृदङ्गवादनशब्दात्प्रत्ययो मृदङ्गो वाद्यते येन तन्मृदङ्गवादनं शिल्पमुच्यते । वादनादिशब्दस्तु तद्धितेनोक्तार्थत्वान्न प्रयुज्यते ।°॥ ओजः° see P. IV. 4, 27.

10. तुशब्दो योगविभागार्थः ।°। आच्च वृद्धिश्च आद्वृद्धी । ते विद्येते यस्य स आद्वृद्धिमान् । स्वराणां मध्य आदौ य आकारवान् वृद्धिमांश्च शब्दः । ततः शेषे उक्तादन्यस्मिन्नर्थे तस्येदमित्यादिलक्षण इत्यर्थः ॥

11. विकृतिवाचिनः° see P. V. 1, 12.

12. Tril. quotes: तथाह भट्टः ।

देवदत्तादिसादृश्यं यज्ञदत्तादिसंस्थितम् ।
वतिप्रत्ययवाच्यं स्यादेकाधिकरणं ततः ॥

अत्रापि तदर्हमिति° refers to P. V. 1, 117; whilst सद्भावात्° according to Tril. implies a refutation of P. V. 1, 115 and 116.

15. For *Kârikâ* 1 see Mahâbh. on P. V. 2, 94.

*K.* 2 see P. VIII. 2, 9–10.

*K.* 3. स्वरूपादिति नार्थादित्यर्थः । मायी । शीर्षी । चकार उक्तसमुच्चयमात्रे । व्रीहीति स्वरूपात् । शालीत्यर्थात् । अनेकस्वरादत इति वृत्तौ । एकस्वरादकारान्तान्न भवति । स्वं विद्यतेऽस्येति स्ववान् । T.

*K.* 4. माया च अस् च मेधा च स्रक् च । मायावी । असन्तात् पयस्वी° । विभाषया पक्षान्तरे यथाप्राप्तम् ॥ see P. V. 2, 12.

*K.* 5. P. V. 2, 128; on ऊर्नेव । ऊर्न्नेवेति मा भूदनुष्टुभो भङ्ग इति नकारस्य द्विर्न भवति ॥ कुष्ठी is placed in the middle on account of the metre.

*K.* 6, 7. ib; 129 and Vârtt. वातातीसारौ रोगौ । पिशाचशब्दार्थमाह कश्मलसोन्मत्तत्व इति कश्मलं च सोन्मत्तं चेति समाहारः । अथवा मुख्या एव पिशाचा उच्यन्ते । पिशाचकी वैश्रवणः । तस्य यक्षभूतपिशाचाधिपतित्वात् ॥ T.

*K.* 8. P. V. 2, 130. पञ्चवान् ग्रामरागः । T. [सामरागः Scholl. on Pâṇ.]

*K.* 9, 10. P. V. 2, 131 and Vârtts. on 135.

*K.* 11. ib. 132.

*K.* 12. ib. 133 (ह्रस्व).—134 (वर्णाद्ब्रह्मचारिणि).

*K.* 14, 15. ib. 135. The *Châtushṭayapradîpa* remarks: कस्यचिन्मते मृणालात्कर्दमात्पयःशालूककरीषेभ्य इत्येकवाक्यम्। तन्मते मृणालपयसीत्युदाहरणम्। सुदर्शनमते विभिन्नवाक्यमेव। तन्मते मृणालीत्युदाहरणम्। अस्मन्मते द्वितीयः पक्षः प्रमाणः॥

*K.* 16. ib. 137. मनन्तेत्यादि। मनन्तादप्राप्तौ मान्तादनेकस्वरादत इति प्राप्तौ नियमः कथ्यते। संज्ञायामिनेवेति तेनासंज्ञायां वन्तुरेव। दामवान्। सोमवान्॥ T.

*K.* 17. प्रागुक्तान्नियमार्थत इति द्वन्द्वनिन्दितरोगेभ्यः प्राणिस्थेभ्य इनेव हीत्यतः पूर्वमित्यर्थः॥ see P. ib. 115.

*K.* 18. ib. 116.

*K.* 19. ib. [116] and 136. संज्ञेत्यादि। संज्ञी संज्ञावानित्युदाहरणम्॥ वा कर्मेत्यादि(१)। एतेभ्यो वर्मपर्यन्तेभ्योऽप्राप्त इन् विकल्प्यते॥ चूलादिभ्य(२) इन्ननेकस्वरादत इति विकल्पः सिद्ध एव केवलं को नेष्यत इति प्रतिपाद्यम्॥ प्रयामउपयाम इति सत्यपि द्वन्द्वसमासे उवर्णे ओ न कृतः सौकर्यात्॥ एवमन्येऽपीति नौर्विद्यतेऽस्येति नाविकः। इन् कश्चान्तः। नौकानित्यादयोऽपीति शब्दविवक्षार्थत्वादनुसर्तव्या इति भावः॥ T.

19. अन्तग्रहणमिहागमार्थम्। ततः किमित्याह। आगमत्वादित्यादि। यदि पुनः स्वतन्त्रः प्रत्ययः स्याच्चतुर्थ इत्यत्र विसर्गः। षष्ठ इत्यत्र च डत्वम्॥ T.

---

१ C. om. from वा. २ वलादिभ्य C. and om. इन्.

20. आभ्यामसंख्यावाचित्वाड् डप्रत्ययो नास्ति कतिपयात् कतेरिति पञ्चम्यन्तादेव थप्रत्ययः पूरणे विधीयते न चागमत्वेऽस्य पूरणार्थोऽभिधेयो युज्यते। आगमानामनन्यार्थत्वात् स्त्रियां कतिपयथी। कतिथी नदादेराकृतिगणत्वात् ॥ T.

21-23. In the second pâda of this half-ṣloka (शतादेः षष्ठ्याद्यतत्परात्) there is a redundancy of one syllable which I find nowhere explained. Trilochanadâsa has evidently the same wording of Sûtra 23; but he does not explain sûtras 21 and 22. The *Laghuvṛitti* has the same text.

24. On यदा etc. see II. 1, 14. 24 ff. see Pâṇ. V. 3, 1-69.

25. In अधुना the इ is dropped, in acc. with II. 6, 44, before the affix अधुना (II. 6, 35).

27. तेष्विति नेदं तच्छब्दस्य रूपम्। अपि तु तकारात् सप्तमी बहुवचनम् ॥ T.

31. छन्दस्येवेत्यन्ये। इति शर्ववर्मणस्तु वचनाद् भाषायामप्यवसीयते ॥ T. In the ṣloka this and the following sûtras of course run किमोऽत् क्व च॰

34. एव is here used expletively. T.

36. अधुना see above 25.

37. अद्यतनेऽपि। तर्हीत्ययमित्यर्थः ॥ T.

38. वाक्यार्थवशेन। विशेषविभक्तिनिर्देशस्याभावादित्यर्थः ॥॰॥ द्वित्रिभ्यां॰। चकाराद् धा च। द्विधा त्रिधा ॥ T.

40. आख्यात॰। क्रिया गुणश्च क्रियागुणौ तयोः प्रकर्षस्तत्र वृत्तिर्येषामिति विग्रहः ॥ *cf.* P. V. 4, 11 ff., 41 ff.

41. For the राजादय: 1-15 see P. V. 4, 91-105; 16-18 =P. V. 4, 86-90; 19-32=P. ib. 74-85; 3349=ib. 106-121.

The Comment of Ratneṣvara is given only by MS. A. The remaining MSS. (as does the Paris one) contain the sûtras only. MS. B. also adds abundant glosses in the margin.

5. ग्रामतचः। बहूनां साधारण इत्यर्थः ॥ कौटतचः। स्वगृहस्थायी न कस्यचिदायत्त इत्यर्थः ॥ T.

12. The MSS. of T. read: द्वावञ्जली प्रियावस्येति द्व्यञ्जलप्रियः। द्व्यञ्जलिप्रियः। एवं त्र्यञ्जलप्रियः। त्र्यञ्जलिप्रियः ॥ अतद्धितार्थे॰। द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः ॥

21. अर्धर्चः is Tatp. (Karmadh.); सप्तर्चः (मन्त्रः) Bahuv.; T.

22. See Vârttika on P. V. 4. 74.

27. Trilochana's comment is श्वसो ऽवसी॰ ॥ शोभनं वसीयः। श्वोवसीयसम्(१)। कल्याणमित्यर्थो रूढित्वात् ॥

42. The Sûtra applies to *Kṛit.*-affixes as well as *Taddhitas.*

44. द्रौणेय इति द्रुणा अपत्यम्। T. (affix एयण् acc. to II. 6, 4); पौनःपुनिकः। affix इकण् by II. 6, 8. [क्रीतादित्वात्]; वाह्यम्, वह्निम् with aff. यण् (II. 6, 14).

45. MSS. C. O. of Tril. read उर्द्धलोम्नो [ऊर्द्ध॰] ऽपत्यम्। D. has तद्दलोम्नो. There is again a redundancy in the metre. If we were to leave out the words तु क्वचित् sûtras 44 and 45 would form the required half ṣloka. No MS. however countenances such an alteration. The rule is also quoted by Tril.

१ श्वोवसीयं D.; om. C.

under rule 50. The MS. of the *Laghuvṛitti* accidentally omits the text of sûtra 44; but has s. 45 as given by us.

46. बाभ्रव्य इति गर्गादेराकृतिगणत्वाद् बभ्रोः कौशिके(१) ऽपत्ये ण्यप्रत्ययः॥ T.

47. कमण्डल्वा अपत्यम्। मद्रबाहोरपत्यमिति विगृह्य स्त्र्यादेरेयण्। T.

49. कथं वासिष्ठः°। Since आ is not included in the term वृद्धि (III. 8, 35), the Commentators interpret आदौ in the sûtra to stand for आ आदौ with an elision of the termination स्.

50. समीप°। यथा ग्रामादौ वर्तत इति नासौ ग्रामस्यावयवः किंतर्हि समीपः। तद्वदिहापीत्यर्थः॥ दाध्यश्विः°। दधिप्रियोऽश्वो मधुप्रियोऽश्व इति शाकपार्थिवादिदर्शनाद् मध्यपदलोपी समासः। दध्यश्वस्यापत्यं मध्वश्वस्यापत्यमितीणत इतीण् दकारमकारयोः समीपे वृद्धिरियमिति न निषिध्यते॥

द्वारपालस्यापत्यं दौवारपालिः॥ स्वरमधिकृत्य कृतो ग्रन्थः सौवरः।°॥ व्यल्कशस्यापत्यं वैयल्कशः(२)। अव्युत्पत्तिपक्षो द्वारादौ पाठोऽस्य। यदा तु विगतोऽर्को यस्य स व्यर्कः। तं श्यतीत्यातोऽनुपसर्गात् क इति कप्रत्यये कपिलिकादिदर्शनाद्रेफस्य लत्वे च व्यल्कश इति निपात्यते°॥ स्वस्तीति सौवस्तिकः°॥ स्वरित्यव्ययम्। स्वर्भवः सौरः(३)। अव्ययानामन्त्यस्वरादिलोपो दर्शितः॥ स्वर्गमनमाह सौवर्गमनिकः। पूर्ववदिकण्॥ स्फ्यकृतस्या-

---

१ कौषिके O. २ व्यल्कश° वैयल्कशः D. ३ शौरः C.

पत्यं स्यैयकृतः । वाणपत्येऽण् ॥ स्वादुमृदोरपत्यं सौवादुमृदवः ॥ श्वन इदं शौवनं मांसम् । श्वनः संकोचः(१) शौवः । नस्तु क्वचिदिति नलोपः ॥ स्वस्येदं सौवम् ।°। स्वग्रामे भवः सौवग्रामिकः ।°। स्वस्यासावध्यायश्चेति स्वाध्यायः । तेन दीव्यतीति क्रीतादित्वादिकण् सौवाध्यायिकः ॥ The objection to द्वारपाल and स्वर्गमन being expressly mentioned in the Gaṇa, whilst compounds of स्व are included under that word, is met by the argument that other compounds of द्वार् and स्वर् are not treated in the same way, thus: द्वारकाममाह द्वारकामिकः । स्वःकाममाह स्वाःकामिकः(२) । स्वःशब्दस्येदं स्वाःशब्दमिति ॥ कथं तर्हि सौवग्रामिक इति क्वचिदित्यस्य बलादिति ॥ न्यग्रोधस्य केवलस्य (Pâṇ. VII. 3, 5)° । न्यग्रोधमूले भवा न्याग्रोधमूलाः शालय इति न्यग्रोधस्य केवलस्यैव भवति । अव्युत्पत्तिपक्षे विध्यर्थमेव ॥ Then follow Pâṇ. VII. 3, 7-9 with the same examples as in Kâś. V.

III. 1, 1. Both *Durgasiṃha* and *Trilochanadâsa* record *four* meanings of अथ, viz. प्रश्नानन्तर्यमङ्गलाधिकारेषु and in this place take it in the sense of आनन्तर्य.

4. वचनमतन्त्रम् 'the wording of this sûtra is inessential': सूत्रे लिङ्गं संख्या कालश्चातन्त्राणीति तेन पुरुषाणामिति बहुवचनं तदतन्त्रमप्रधानम् ।°॥ अप्रवृत्तावित्यादि । इह द्वयं पदार्थो जातिर्व्यक्तिश्च । तत्र जातौ पदार्थ एकमेवेदं लक्षणमिति सक्त-

---

१ शङ्कोचः MSS. २ स्वाकामिकः C.

लक्ष्ये लक्षणस्य चरितार्थत्वाद् युगपद्वचने समस्तपुरुषप्राप्तियोग्यवाक्ये न कस्यचित्प्रवृत्तिः स्यात्। तथाहि प्रवर्तमानेन पुरुषेण पुरुषान्तरस्य निवृत्तिं कृत्वा प्रवर्तितव्यम्। जातौ चैकमेवेदं लक्षणमन्यत्र चरितार्थं कथमन्यं निवर्तयितुं शक्नोतीति ॥ व्यक्तौ तु पदार्थे प्रतिलक्ष्यं लक्षणानि भिद्यन्त इति युगपद्वचने सर्वेषामेव प्रवृत्तिः स्यात्। अन्यथात्र तल्लक्ष्यविषयाणां लक्षणानामकृतार्थत्वादानर्थक्यमापद्येत न चैकदाऽनेकलक्षणमुपपद्यत इति पर्याये न स्यात्। अतः परिभाषेयं लिङ्गवती। लिङ्गं पुनरस्या युगपद्वचनमेव ॥° T.

9. सत्ता नित्यतेति। अस्तिरयं भवत्यर्थो भवतिश्च सत्तार्थः सत्ता च नित्या। नित्यस्य चाक्रमरूपत्वात् पौर्वापर्यं नास्तीति कथं तद्वाचकस्यासेर्धातुसंज्ञा। ननु सत्ता नित्येति वक्तुमुचितं न तु सत्ता नित्यता तस्यास्तद्धर्मरूपत्वात्। अथोभयान्ता परिच्छिन्ना वस्तुसत्ता नित्यतेति वचनादेवमुक्तम्। तदयुक्तं विवक्षितार्थापरिज्ञानात्। तत्र हि नित्यताया लक्षणं दर्शितम् इह तु सत्ताया नित्यत्वं दर्शयन् क्रियात्वं प्रतिक्षिपति। यस्मात् सत्ता नित्या तस्मान्न क्रिया भवितुमर्हतीति° ॥ अयमर्थः। यस्मान्नित्यतायुक्ता सत्ता तस्मान्न क्रियेति। अथवा सत्ताया नित्यता सत्तानित्यतेति षष्ठीलक्षणस्तत्पुरुषः ॥

साधनेत्यादि। साधनस्यायत्त उदयो यस्येति विग्रहः। तस्मादिह व्याकरणे साधनायत्तोदयं सर्वम्। अतस्तदधीनतया साधनायत्तया सिद्धमपि नित्यमपि पूर्वापरीभावेनोच्यमानं क्रियात्वेनावभासते।°। बुद्ध्यवस्थैव निबन्धनं यस्मादित्ययमर्थः। सत्तावतोऽर्थस्य क्रियायां पूर्वापरीभावेन व्यापारोपलम्भात् तद्वतापि

सत्ता पूर्वापरीभूता बुद्ध्या परिकल्प्यते। अतस्तन्निबन्धनस्तस्यामपि क्रियाव्यवहार इति यथोक्तम्। साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धन इति ॥ T.

On the Sloka T. remarks: तथा चोक्तमित्यादि। आत्मोक्तमेव वृद्धमतसंवादेन दृढयति ॥ आश्रितं क्रमरूपं येन तदाश्रितक्रमरूपम्। सिद्धमसिद्धं वा तद्भावस्तत्त्वं तस्माद् यावत् साध्यत्वेन प्रतीयते सा क्रियेति संबन्धः ॥

10. अनुक्तम्। The locative is explained by the commentators as agreeing with a supplied गम्यमाने ॥

साधन इति प्रत्येकं संबध्यते। साधने वर्तमाने। साधनेऽतीते॰ T.

11. स्वसंज्ञयेति। वर्तमाने काले वर्तमाना सिद्धैवेति ॥ D.

16. अद्यतने। अतीतमात्र इति परोक्षेऽपरोक्षे चेत्यर्थः ॥ T.

न्यायादनपेतो न्याय्यः। न्याय्योत्थानो रात्रेरतिक्रान्तायाश्चतुर्थो यामः। आगामिन्याश्च प्रथमो न्याय्यसंवेशन इति संवेशनमिह शय्यारोहणं प्रतिपत्तव्यम्। अहर्दिवसः स काल इत्यर्थः ॥ D.

मतमिति शर्ववर्मणः संमतमित्यर्थः ॥ T.

सुखप्रतिपत्त्यर्थमिति। श्वःप्रभृतेः पक्षमाससंवत्सरादिलक्षणस्य प्रतिपत्त्यर्थमित्यर्थः। T.

17. Durgasimha's Ṭikâ contains thirteen ṣlokas, beginning thus:

भविष्यन्ती च किंशब्दे क्रोधनाश्रद्धयोरपि।
गर्हामर्हे कथं तत्र याजयेद्वृषलं भवन् ॥
को नाम वृषलं तत्र याजयेद् याजयिष्यति।
किं केनास्त्यर्थयोर्दृष्टा भविष्यन्त्यर्थयोस्तयोः ॥

19. अन्ये तु समर्थनायां पञ्चमीं नेच्छन्ति शर्ववर्मणा तु दृष्टाद्यव्याकरणत्वादिष्टैवेत्याह मतमस्येति ॥

21. लुनीहि लुनीहीति। आभीक्ष्ण्ये द्विर्वचनम् ॥ संख्यादिविशेषो न गम्यत इति सर्वक्रियाकालेषु विधीयमानत्वादव्यक्तपदार्थकत्वमेव स्यात्। अतः संख्याकालकारकनामयुष्मदस्मदर्थस्याभिव्यक्तये ऽनुप्रयोगो युक्तः।०। अतो यथाविध्यनुप्रयोगः पूर्वस्मिन्निति वक्तव्यम्। यथाविधीति यस्माद्धातोर्यस्मिन्कारके पञ्चम्या विधिस्तस्यैवानुप्रयोग इत्यर्थः। तदयुक्तमित्याह प्रत्यासत्तेरिति। भिन्नार्थत्वेन तावन्न भवत्यनभिसंबन्धात्। लुनीहि लुनीहीत्येवायं पठतीति। अनुप्रयोगो हि विशेषाभिव्यक्तये प्रयोगस्य पश्चाद्भवन् कथमनभिसंबन्धो नामसमानार्थेनापि धात्वन्तरेण न भवति। लुनीहि लुनीहीत्येवायं छिनत्तीत्यश्रुतत्वात् ॥ तथा कारकान्तरेणापि न भवति। लुनीहि लुनीहीत्येवायं लूयत इति। अतो यस्माद्धातोर्यस्मिन्कारके पञ्चमी विहिता स एव धातुस्तदेव कारकं प्रत्यासन्नमिति। कुतो धात्वन्तरेण कारकान्तरेण चानुप्रयोग इत्यर्थः ॥० T.; *cf.* Pâṇ. III. 4, 2-4.

23. मास्मशब्दो ऽयमकृतद्वन्द्वः समुदायो ऽङ्गीक्रियते।०॥ कामक्रोधौ स्म मा पुष इति परो ऽपि कश्चिदाचष्टे। Durg.

24—33. The eighteen affixes in each sûtra are to be considered as forming one dvanda compound [लुप्तजस्कं पदम् T.].

34. षडाद्या यासामिति यद्येवं बहुव्रीहिस्तदोत्तरासामेव चतसृणां विभक्तीनामियं संज्ञेति। सर्वेषामात्मने° [का° ३. ५. १८] इत्यादौ गुणप्रतिषेधसूत्रे ऽनुत्तमे पञ्चम्या इति प्रतिषेधो व्यर्थः स्यात् ॥ न च षडिति भिन्नं पदं षट् च ता आद्याश्चेति कर्मधारयो

वा। तदा परोचाया अपि सार्वधातुकत्वमस्तीति। सार्वधातुके गुणनिषेधस्य सिद्धत्वात् परोचायां च [का॰ ३. ५. २०] सर्वत्रात्मन इति व्यर्थमेव स्यात्। ततः षष्ठीलचणस्तत्पुरुष एवायमित्यालोच्याह षण्णामित्यादि॥ सार्वधातुकमिति पूर्वाचार्यप्रसिद्धा संज्ञेयं निरन्वया स्वभावान्नपुंसकलिङ्गमिति॥ T.

III. 2, 3. For युट् after दो and शो see IV. 5, 92. The *bhauvâdi* मान which is *âtmanepadin* is here intended (बधेः साहचर्यात्); hence the *âtmanepadam* (see III. 2, 46) दान उभयपदी शान उभयपदी कित् परस्मैपदीत्यर्थः। शेषा गुप्तिज्मान्बध आत्मनेपदिन इति। D.

4. इच्छतिना एकः समानः कर्ता यस्येति। T. Although there is no wish either on the part of the bank to fall or of the dog to die, सन् is commonly used in such cases also.

8. आयिलोपस्य। सर्वप्रातिपदिकेभ्यो विभाषया आयिलोप इति संबन्धः। मतमिति मतान्तरमित्यर्थः। अपरे ते गल्भक्लीवहोडेभ्य इति मन्यन्ते। ॰। एते कृतायिलोपाः सन्तो रुचाद्याश्रयणादात्मनेपदिनः। गल्भाञ्चक्र इत्यादावाम्प्रत्ययस्त्वेष्यमाणः प्रत्ययान्तत्वात् सिद्धो भवति। ॰॥ पूर्वोक्तमेवार्थमनुष्टुभा संचिपन्नाह। ओजसो॰। न चाश्वो गर्दभत्यपीति। अश्वो न गर्दभतीति नञ्योगेऽपि विवचया भवतीत्यर्थः। अथवा। अश्वो गर्दभतीति न च लुप्तायिप्रत्ययाभिधानमस्तीति मतं प्रतिचिपति॥ ॰॥ T.

सादृश्यादिति। मतमिति शर्ववर्मणः संमतमित्यर्थः॥ T.

लोहितादि। एक आह। अपौराणिकलोहितादिपाठः। अन्य आह। डाज्लोहितादिभ्यामिति युक्तम्॥ Durg.

कोटो रोमन्थं वर्तयतीति। उद्गीर्य बहिस्त्यक्तम् अवगीर्णं वा पृष्ठान्तेन निर्गतं रोमन्थाख्यं(१) द्रव्यं वर्तयतीति गुडिकां करोतीत्यर्थः ॥ T.

9. इनङ् अङ्गनिरसनेऽपीति चुरादौ गणसूत्रमित्यर्थः। धात्वर्थे सिद्ध इन्प्रत्ययस्तस्य ङानुबन्धत्वमनेन विधीयत इति तेनास्य कारितव्यपदेशः सिद्धो भवति ॥ भाण्डानि समाचिनोति। राशीकरोतीत्यर्थः ॥ चीवरं संमर्जयतीति। अन्ये तु चीवरादर्जने परिधाने वेति मत्यन्तरमापश्यन्तश्चीवरं समर्जयतीति पाठं मन्यन्ते॥ दिङ्मात्रमिदमित्यादि। चुरादौ श्वेताश्वाश्वतरेत्यादिगणसूत्रादप्यूहनीयमित्यर्थः ॥ T.

10. तथा कारीषोऽपि वह्निर्निर्वातप्रज्वलितोऽध्ययनविरोधिशीतादिकमपनयन्नध्ययनानुकूलं सामर्थ्यमुपजनयतीति ॥ T.

कथक इति। एवमभिनयेनासौ कथां कथयति येन कालभेदेऽपि परेषां प्रतीतिर्भवति। कंसं हन्तुं नारायणं कथकः प्रयुङ्क्त इति। तथा वक्तारो वदन्ति गच्छ त्वं हन्यते कंसः। किं गतेन हतः कंस इति ॥ ० ॥ रात्रिं विवासयतीति। कार्त्स्न्येन रात्रिसहचरितां क्रियामा प्रभातमाचक्षाणः कथको रात्रिं विवस्तुं प्रयुङ्क्ते॥ उज्जयन्या इति। अत्रापि त्वरितमुज्जयन्याः सकाशात् प्रस्थितो महिश्मतीं गच्छति येनास्य तत्र सूर्योदयो भवति तेनैवं परेषां प्रतीतिः। सूर्यमुद्गन्तुमयं प्रयुङ्क्ते। समागतोऽहमिदानीमुद्गच्छ सूर्येति ॥ T.

13. अभिधानमिति। तथा चोक्तम।

पृथुं मृदुं दृढं चैव कृशं च श्लक्ष्णमेव च।
परिपूर्वंदृढं चैव षडेतान् रविधौ स्मरेत् ॥ Durg.

---

१ रोमन्थार्थं MS. Durg.

15. पणिः स्तुत्यर्थ इत्यन्ये। इति तेषां मते व्यवहारार्थस्य पणेरायो न भवति। स तस्य पणत इत्येव भवति। अयं तु व्यवहारार्थादप्यायप्रत्ययं मन्यते। तथा च भट्टिकाव्ये ॰॥ T.

16. अशुद्धेत्यादि। नामार्थसंवलितेच्छादिक्रियावाचित्वादशुद्धक्रियत्वं तस्माद्वचनम्। ॰॥ इतरेषामिति क्यजप्रभृतयो हि गणे प्रसिद्धाः। न हि चिकीर्षादय इति तेषां धातुत्वं न स्यात्। ॰। T.

23. अन्वाचयशिष्टः viz. by the particle च in the Sûtra.—अस्तेर्भू॰ see K. III. 4, 87.

25. कथमघुक्षमिति। ऊदनुबन्धत्वात् पाक्षिकेणेटा गुहू संवरणे सेड् भवतीति भावः॥ D. T.

27. असुग्रहणमात्मनेपदार्थमेव। परस्मैपदे तु पुषादित्वादण् सिद्ध इति भावः। कथमस्यात्मनेपदम्। भावकर्मणोरिति चेद् अयुक्तं कर्तरीति विशेषणात्। सत्यम्। उपसर्गादस्यत्यूहो वा रुचादाविति [का॰ ३. २. ४२. २१] अतः सोपसर्गमुदाहरति। अपास्थतेति। लिपिसिचिह्वां केचिदात्मनेपद इच्छन्ति। तन्मतेनाप्याह व्यवस्थितेत्यादि। D.T.

28. ऋ सृ गताविति लुग्विकरणयोरेव ग्रहणं शास्तिना साहचर्यात्। सृ गतौ ऋ प्रापणे चेति भौवादिकयोर्न भवतीति। आर्षीत। असार्षीत॥ अन्ये ऋ सृ जौहोत्यादिकावेव निर्दिष्टौ। द्विर्वचनं तु न स्यात् सूत्रत्वादिति ॰॥ भौवादिकाभ्यामप्यनाभाव्यमित्येके॥ D.T.

ननु द्युतादीनामात्मनेपदित्वात् परस्मैपदमनुपपन्नम्। सत्यम्। अत एव परस्मैपदेऽण्विधानसामर्थ्याद् रुचादेराकृतिगणत्वाद्वा

द्युतादिभ्यो ऽद्यतन्यां परस्मैपदमस्ति । आत्मनेपदिषु पाठादात्मनेपदमपीति ॥ Tril.

अर्तेरपि। समार्त। समो गमीत्यादिना [cf. III. 2, 42, 20] आत्मनेपदं सिज् वृद्धिश्च। केचिदिहाणमिच्छन्ति। समारत। तेनार्तेरात्मनेपदे विभाषा सिद्धा ॥ D. Ṭ.

मुचुग्लुचु गत्यर्थौ गुचुग्लुचुकुजुखुजु स्तेयकरण इति [Dhâtup. 7, 17-20] ग्लुचु स्तेयार्थः ॥ ग्लुञ्चु षस्ज गतौ [cf. Dhp. ib. 21-22] इतीह कश्चित् पठति ॥ [अत्र ग्लुचिमपि गत्यर्थं केचित् पठन्ति Tril.] स न पठितव्यो ऽनेकार्थत्वाद्धातूनामित्याह स्तेये गतावपि वर्तत इति। ग्लुञ्चोस्तु। अग्लुचीदिति रूपत्रयं सिद्धम् उभयोरुपादानसामर्थ्यादनुषङ्गलोपाभाव इति वर्ण्यते। तदप्रमाणम्। गुचिपाठो ऽपि तथैव। न ह्यगुचदित्यादृतम् ॥ दृप्रभृतीनां कर्तर्यात्मनेपदे ऽण् वेति कश्चिदाह। व्यत्यजीर्ष्ट। व्यत्यजरत। इति संदिग्धमेतत् ॥ D. Ṭ.

29. बुध अवगमने । राधिरुधीत्यादिना [का॰ ३. ७. २२] अनिट् ॥ बुधिरवबोधने पक्षे सिच्। भौवादिकत्वादिट्। अबोधिष्ट ॥ D. Ṭ.; Tril. quotes तथा चोक्तम्।

आदिलोपो ऽन्तलोपश्च मध्यलोपस्तथैव च।
विभक्तिपदवर्णानां दृश्यते शार्ववर्मिके ॥

30. नानोस्तप इति तपस्तापे पूर्वं यत्पापं कर्म तेन पश्चात् तप्तः पीडित इत्यर्थः ॥ कथम् अन्ववातप्त। अवशब्दव्यवधाने प्रतिषेधः स्यात्। अनोरिति नेयं पञ्चमी किंतर्हि विशेषणविशेष्यभावसंबन्धे षष्ठीति ॥ D. Ṭ.

अनोरिति विशेषणसंबन्धे षष्ठी न पञ्चमी तेनान्ववातन्न। इत्यवशब्देन व्यवधानेऽपि प्रतिषेधो भवति ॥ Tr.

31. क्रियेति सार्वधातुकवच्छ इति शप्रत्ययस्य सार्वधातुकवद्भावाद् यण् ॥ Tr. On तप्यते° see रुचादयः III. 2, 42.

32. नकारो यस्याननि [का° ३. ६. ४८] इति विशेषणार्थः ॥ D.Ṭ.

33. अलोपवादो नकारः शमादीनां दीर्घो यनि [का° ३. ६. ६६.] इति विशेषणार्थः ॥

Both Durg. and Tril. admit three forms of भ्रम्: दैवादिको भ्रमु (being शमादि see III. 6, 66) makes भ्राम्यति whilst भौवादिको भ्रमु makes भ्रमति and, acc. to our rule, भ्रम्यति ॥

भौवादिकोऽपि° This is perhaps a quotation from the Kâṣikâ vṛitti where the passage occurs* (on P. III. 1, 70). क्रमु पादविक्षेपे। क्रमेः शमादीनां दीर्घो यनि। ष्ठिवुक्रमाचमामनीति ज्ञापकाद् अन्यनौ। क्रामति। क्राम्यति ॥ D. Ṭ. क्रमेर्दैवादिकादप्यन् पक्षे क्राम्यतीति शमादित्वाद् दीर्घः ॥ Tril.— क्रम् does not, however, occur among the शमादयः in the Dhâtupâṭha of the Kâtantra.

35. उभयमिति। ये तु श्रु श्रवणे। इति स्वादौ पठन्ति तन्मतेन नुः सिद्धः आदेश एव विधीयते। T. The loss of the व् and the nasal in धिन्वि and कृण्वि is explained by means of IV. 1, 35 and III. 6, 1.

---

* Viz. in the MSS. after भ्रमति। भ्रम्यति। भ्राम्यति। where it is, however, omitted by the Benares edition.

41. वत्करणमन्तरेण संज्ञासूत्रमिदं स्यात्। कर्मकर्ता कर्मसंज्ञा भवति । ०। कर्मकर्तुरकर्मण एव सतः कर्मकार्यं विधीयते। न तु स्वाश्रयं कर्तृत्वमकर्मस्वभावमपनीयते । T.

43. प्रकृतेरन्त एव प्रत्ययो भवति। यदन्तग्रहणं तत्सुखार्थम्। अन्यस्तु चेक्रीयितलुगन्तमपि भाषायां मन्यमानः साक्षात्प्रतिपत्त्यर्थं वर्णयति । तेन पापचीति परस्मैपदमेव । तदयुक्तं तदपि चर्करीतं चेत्येक इत्यादौ परस्मैपदिषु पाठात् सिद्धम् ॥ Tril. (and similarly Durg.).

44. मतमिति मतान्तरम् । य आयेर्लोपमिच्छन्तीत्यर्थः । D.

45. महाकविनिबन्धाश्च प्रयोगा दृश्यन्ते। यदाह भारविः। तव दर्शनं किं न धत्त इति। न चेह दर्शनस्य कर्मणः फलमस्ति किं तर्हि द्रष्टुरिति ॥ यथा मयूरोऽपि। कमल° ये इति ये रश्मय इत्यर्थः । न च तेषां कमलवनोद्घाटनफलभोक्तृत्वं किं तर्ह्यन्येषामेव ॥ ० ॥ तथा च किरातकाव्ये । तनोति शुभ्रं° ॥ यजेरित्यादि कर्तुः फलवद्विवक्षाऽशक्यपरीहारेत्युक्तम् । अतस्तया विवक्षया मतान्तरेऽपि यजेरात्मनेपदे न भवितव्यमित्यर्थः । यजिरिहोपलक्षणम् इनन्ताद् ञानुबन्धादपीत्यर्थः । अन्ये तु मतमिति शर्ववर्मणो मतमाचक्षते। तत्पुनः स्वमतानुमतं न भवतीत्युपेक्ष्यते।°T.

46. पापचिषते is the Desiderative of पापच्यते.—Both MSS. of Tril. read अननुज्ञास्य.

III. 3, 1, cf. Pâṇ. VIII. 1, 1, ff. प्रतिनिमित्तमिति निमित्तं निमित्तं प्रति वीप्सायामव्ययीभावः । संश्चेक्रीयितयोर्निमित्तयोर्द्विर्वचने कृते पुनः सनि निमित्ते द्विर्वचनं न स्यादित्यर्थः ॥ T.—Durg. quotes the following couplet:

प्रप्रपूज्य महादेवं संसंयम्य मनः सदा।

उपोपहाय संसर्गमुदुद्यातः स तापसः ॥ cf. P. VIII. 1, 6.

2. पूर्वेणाद्यस्य द्विर्वचने प्राप्ते सत्यनेन द्वितीयस्य द्विर्वचनं विधीयते। ततो येन नाप्राप्तौ यो विधिरारभ्यते स तस्य बाधक इति ॥ T.

4. For देहि see K. III. 4, 50.

5. For ददति cf. III. 5, 38; for ऐयरुः (imperf. of ऋ गतौ) cf. III. 3, 25; 4, 31 and 56; 5, 6; and 8, 17.

6. भाषायाम् acc. to the commentators refers to दीधीङ् and वेवीङ् which are not to be considered as *abhyasta,* since the elision of their न् in आदीध्यते and आवेव्यते, etc. follow from III. 5, 39; whilst forms such as आदीधयुः, आवेवयुः do not come into consideration छान्दसत्वात् ॥

8. The *juhotyâdayaḥ,* according to the system of the Kâtantra, form part of the *adâdayaḥ.*

6. The commentary does not explain the disparity of gender in the sûtra and vṛitti.

10. अनाद्यर्थो° । पूर्वेणावशेषविधानादादेरघोषस्यावशेषो न प्राप्नोति। अतस्तदर्थोऽयमित्यर्थः ॥ T.

11. औजढत् ॥ Denominative of ऊढ with चण्; the ढ् (for orig. ह् III. 6, 56) is स्थानिवत्; hence ज in the reduplicated syllable.

19. आञ्छ् (आञ्छि) takes अ (not आ) for its अभ्यास; cf. III. 3, 15.

20. Radical ऋ, according to Rule 16 is represented in the reduplicative syllable by अ; and, if initial, by आ, according to this and the preceding rule.

आर् । is by Tril. supposed to be provided for by the term परादि in 19; for by that the rule becomes a परविधिः; and the substitution of र् for ऋ being likewise a परविधि the आदेश is not स्थानिवत् with regard to the नागम.—He observes, however: अन्ये तु ऋच्छृऋत इति सूत्रं पठन्ति। तदा किल ऋ ऋच्छ ऋत इति विभागे अर्तेर्ऋच्छतेश्च ऋतो गुण इति सूत्रार्थे ऋकारस्याभावादर्तेर्नकारागमो न भवति ॥ cf. Pâṇ. VII. 4, 11: ऋच्छत्यृताम् ॥

22. अथ किमर्थं श्तिब्निर्देशः[1]। भुवोऽदित्यास्तां सत्यं भवतेरिति कर्तृनिर्देशात्। कर्तर्येव परोक्षायामकारो न भावकर्मणोरिति दर्शनार्थः श्तिब्निर्देशः। तेन बुभूवे कम्बलो वटुनेति सिद्धम्। यस्त्वाह भुवोऽकार इति तन्मतेन सामान्यनिर्देशाद् भावकर्मणोरप्यकार इति ॥ ननु कथमयं कर्तृनिर्देशः। यावता धातुस्वरूपे इकि श्तिपो ज्ञापिता इति तदयुक्तं न हीयता कर्तृनिर्देशापह्नवो युज्यते कर्तरि शप इत्युत्सर्गशास्त्रस्य बाधितुमशक्यत्वात्। अन्यथा विकरणो हि कथं स्यात्। न च वक्तव्यं शकारानुबन्धबलादेव विकरण इति स हि सार्वधातुकार्थो न[2] विकरणार्थः। यदाह भगवान्[2] पाणिनिः। तिङ्शित्सार्वधातुकमिति। अत एव पकारोऽनुबध्यते। अन्यथा हि सार्वधातुकमपिदिति वचनाद् अपानुबन्धं सार्वधातुकमगुणमेवेति। कथम् अर्तिवेत्ति-

१ तिप्नि॰ MS. O. २ O. om. न.

करोतीत्यादिषु श्तिब्निर्देशे गुणः स्यात् ॥ ननु कर्ता हि नाम व्यापारवान्भवति न चेह श्तिप्प्रत्ययेन निर्दिश्यमानस्य धातोर्व्यापार उपलभ्यते तत् कथं कर्तृनिर्देश इति तदयुक्तम् अभिप्रायापरिज्ञानात्(१)। कर्तृनिर्देशादिति कर्तरि निर्देशः कर्तृनिर्देश इति विग्रहः। तदुक्तं भवति। कर्तरि सिद्धस्य भवतीत्यस्य शब्दस्य निर्देशो न कर्ताऽत्र निर्दिष्ट इति ॥ ननु विरुद्धमिदं कर्तरि निर्देशः शब्दस्य न कर्ताऽत्र निर्दिष्ट इति। विरुद्धं न हि सर्वे शब्दा व्युत्पत्त्यर्थमभिदधते व्युत्पत्तीनां यथाकथंचिदपि संभवात्। यथा हि यज्ञ एनं देयादिति यज्ञदत्तशब्दो व्युत्पाद्यते न चात्र धातोर्व्युत्पत्त्यनुसारिणेऽर्थस्य प्रतीतिरस्ति। अपि तु कश्चित्पुरुष एव प्रतीयते॥ अथ संज्ञानुरोधादिह व्युत्पत्त्यर्थस्त्यज्यते। अन्यथा संज्ञैव न गम्यत इति चेदेवं तर्हि धातुस्वरूपानुरोधादिहापि किमिति कर्ता न त्यज्यते। न ह्यत्र बाह्यस्य कर्तुरवगमे धातुस्वरूपं प्रतीयत उदाहरणमात्रं चात्र यज्ञदत्त इति। अन्येऽपि कृतव्युत्पत्तयो बहुलमर्थान्तरे दृश्यन्ते। यदपि गेहेनर्दिनोक्तम्। नेतरैरिदमुक्तमिति तदप्ययुक्तं न ह्युक्तमिति त्यज्यते किंतर्ह्ययुक्तमिति नाप्ययुक्तमिति गृह्यते किं तर्हि युक्तमिति ॥ किंच वृद्धकातन्त्रैरप्युक्तं चेति शाकटायनोऽपि पूर्वपक्षे स्थितः प्राह भूव्ययोरदिति सूत्रे। केचिद् भवतिव्ययोरदिति निर्देशमिच्छन्ति। तत्र किल भवतीति कर्तृनिर्देशात् कर्तर्येव लिटि भुवोऽकारो भवति न भावकर्मणोरिति। तस्मात् कर्तरि कृत इत्युत्सर्गशास्त्रस्यानतिक्रमणीयत्वात् कर्तृनिर्देश एवायमिति ॥ ० ॥ Tril.

31. पुनरन्तग्रहणम्° This, acc. to Tril., seems to mean, that

---

१ विवक्षितार्थापरि° O.

the *anusvâra* is to be considered as standing in *pausâ* and thus being optionally liable to be changed to a fifth: अपि तु विरत्यर्थं ततो वर्गे तद्वर्गपञ्चमं वेत्यस्य विषयत्वादनुस्वारः पक्षे तिष्ठतीत्याह पुनरन्तेत्यादि। Durgas. has the following remark: चल चंचल्यते। तय तंतय्यते। मव मंमव्यते। तत्रापि प्राप्नोति। इह तु सानुनासिकस्य छन्दस्येव दर्शनाद् अदोषः। तथा च पदकारोऽप्याह तं मोऽतोऽमिति न्याय्यः पक्षः॥ (cf. Vopadeva, xx. 9.)

39. मीङ्[1] हिंसायामिति दैवादिकोऽपि। मित्सति॥ केचिद् मिनोति न पठन्ति। °॥ केचिद् मातेर्लुग्विकरणस्य मिमासतीति मन्यन्ते॥ Durg.

On the *lopa* of स् of the *âdeṣa* इस् in आरिप्सते etc. see III. 6, 54.

III. 4, 8. स्वापेर्° If the Sûtras were स्वपेश्चणि, then, in forming the reduplicate aorist of the denominative (नामधातु) of स्वाप (स्वप with घञ्) the अ of घञ् would be dropped before इन्. This *lopa* being, however, स्थानिवत् before चण् we should in accordance with Sûtra III. 3, 34, have to reduplicate as before सन्.

11. The चेक्रीयितलुक् of प्याय, according to Durgasiṃha, is पेपीयः [पेपेति].

16. स्वापि(द्युतिसाहचर्यात्) denotes here a शुद्धधातुः not an अशुद्धधातुः (नामधातुः).

25. स्पृश स्पर्शने। मृष आमर्षणे। कृष विलेखने। तृप प्रीणने।

---

१ मिङ् MS.

तृप तर्पणमोचनयोः (!)। स्तृप् गतौ। एषां केचिदिच्छन्ति केचिन्नेच्छन्ति। तदुभयं प्रमाणीकृत्याह योगविभागादित्यादि। D.

31. परस्य°। प्रत्यये परे प्रकृतेर्यत्कार्यं तल्लुग्लोपे न भवतीति परस्य तु प्रत्ययस्य स्यादेवेति। T.

Before उस् *luk* is substituted for सिच् (III. 4, 93) and *lopa* for आ (III. 6, 37).

33. On the substitution of ज for हन् see III. 4, 49.

43. The *upalakshaṇam* is ना; therefore the roots स्तम्भु etc. (III. 2, 38 Schol.) follow this rule, when taking that *vikaraṇam*, though (with one exception) they do not belong to the *kryâdayaḥ*.

45. भिय इत्यादि। केचिदिच्छन्ति। केचिन्नेच्छन्ति। तन्मतमिह प्रमाणमित्यर्थः॥ T.

46. ह्रौ चेत्येतदपि मतान्तरेण वर्णितम्। इह जहीहि प्रमाणम्॥ T.

47. प्रतिषिद्धेटां° cf. K. III. 7, 23.

48. ज्ञापकात्° refers to K. III. 5, 22.

50. अल्लोपः° see K. III. 4, 41.

53. अनुषङ्गलोपिनां° see K. III. 6, 3.—ममथ्वान् has lost its nasal on account of the anubandha क् in the affix क्वसु.

65. घटादयो मानुबन्धा अन्वाख्याता इति पूर्वे गणकारा घटादीनां प्रत्येकं मानुबन्धत्वमुपदिष्टवन्तः। तथोपदेशे च ग्रन्थगौरवं मन्यमानैराधुनिकैर्गणकृद्भिर्लाघवार्थमन्वाख्याता घटादयो मानुबन्धा इत्यर्थः॥ कग इत्यादि। अनिर्दिष्टार्थः(१) कगेधातुर्मानुबन्ध इत्यर्थः॥ चन् च वनु च नोच्यत इत्येतौ धातू गणपठितौ। अनयोः क्रमेणार्थमाह। चन् च हिंसार्थ इति। अथ

क्रथ क्लथ हिंसार्थ इत्यतश्चकारेण हिंसार्थो ऽनुकृष्यते। ततश्चनि-रपि हिंसार्थ इत्यर्थः॥ वनु कगेवदिति। अनिर्दिष्टार्थो(१) वनुरपि मानुबन्ध इत्यर्थः॥ रञ्जेरित्यादि। एतत्तु घटादिषु रञ्जिपाठ एव ज्ञापयति स हि ह्रस्वार्थो ह्रस्वस्यानुषङ्गलोपाभावे दीर्घाभावान्नो-पपद्यत इति ज्ञापका ज्ञापितास्च विषयो लक्ष्यमनुसरन्तीति मृग-रमणादन्यत्र। रञ्जयति वस्त्रम्॥ ज्वलेत्यादि। ज्वलयति। ज्वा-लयतीत्युदाहरणम्। कथं सोपसर्गास्तु नित्यं मानुबन्धा इत्याशङ्क्य ज्वल दीप्तावित्यादिना पुनरेषां घटादित्वं दर्शयति॥ ग्लास्नेत्या-दि। गणे चकारो ऽनुपसर्गा वेत्यस्यानुकर्षणार्थः। ग्लापयति। ग्लपयतीत्यादि पूर्ववत्॥ उपवनयति। उद्वमयतीति वनु च नो-च्यते ऽमन्ताश्चेति वचनात्। सोपसर्गयोर्वनिवम्योर्नित्यं मानुबन्ध-त्वमिति॥ न कम्यमिचम इत्यमन्ताश्चेति प्राप्ते प्रतिषेधो ऽयम्। कामयते। आमयति। आचामयतीति॥ शमो ऽदर्शन इत्यमन्ता-त्सिद्धे नियमार्थो गणे पाठो ऽदर्शन इति॥०॥ मानुबन्धश्चेति। गतावेव फणधातुर्मानुबन्ध इत्यर्थः। फाण्टमिति द्रवद्रव्येण वि-लोडिताः(२) शक्तव उच्यन्ते॥ संक्रामयतीति। शन्तृङन्तादिति। शन्तृङ्प्रत्यये ऽनविकरणे क्रमः परस्मा इति दीर्घः। ततः संक्रा-मन्तमाचष्ट इति विवक्षायामिना सिद्धमिति भावः॥ Tril.

67. वधिः॰ It is doubtful whether this refers to the difference of spelling this root.

71. Of forms such as अतीयात्। प्रतीयात्, where a long ई is produced by Sandhi, Durg. observes: नैयासिकास्तु ह्रस्वत्वं वि-दधते ऽविशेषाद्भूम इति मन्यन्ते। तन्मतेनात्र पूर्वलोपो द्रष्टव्यः॥

१ अनिष्टार्थः MS. E. २ द्रवद्रव्यालोडिताः MS. Oxf.

75. The इकारागम, enjoined by the preceding rule, being *antaranga*, has a claim superior to that of the *bahiranga* सुडागम.

78. अश्ननाय° cf. P. VII. 4, 34.

80. ननु किमर्थमिदम् । अदिघसां[1] मरगिति वचनात् सौत्रो घसिरस्ति । ततः पचे तेनैव सिद्धमित्याह घस्ल इत्यादि । मरग्विषय इति मरग्विषयो यस्येति समासेनावधारणं गम्यते न पुनः प्रयोगो ऽन्यत्रास्तीति । Tril.

82. It would perhaps have been more consistent to spell the root वधि (cf. III. 4, 67).

83. Acc. to III. 7, 23 हन्, when नान्त, is अनिट्; whilst वध् being सेट् ought optionally to substitute long आ before सिच् in parasmai (III. 6, 9; Sch.); this is not to be on account of III. 4, 67.

86. गम्ॡ इत्यादि । तथायमपीति । इण् गतावपि नाभिधीयत इत्यर्थः ॥ Durg.

III. 5, 4. तनादीति । ऋणु गतौ । तृणु अदने । घृणु दीप्तौ । त्रय एवैते गुणविषयाः । ऋणादेरित्यकुर्वन् करोतेरेव गुण इति साधयति ॥ D.; °एते त्रय उपलक्षन्ते केचिदित्यन्ये शर्ववर्मणा तु नोपलक्षणं संमतमिति लक्ष्यते । ऋणादेरित्यकरणात् ॥ T.

8. जजनानि । cf. III. 6, 43.

एवमुत्तरत्रापि° for example Durg. gives विभ्यत्सति from

---

1 अदिघसां MS. 1393 [E.] and MS. Durg.

व्यध [Thus acc. to Tril. व्यध ताडने पूर्ववदादिचतुर्थत्वं वकारस्य भकारः] where no *samprasâraṇam* takes place.

15. छान्दसावित्यादि। शर्ववर्मणस्तु वचनाद् भाषायामप्यवसीयते। न ह्ययं छान्दसाञ्शब्दान्व्युत्पादयतीति। T.

आदीध्ये and आवेव्ये (as I read, the latter being a correction of आवेव्यै) can hardly be the forms intended here. The commentaries do not mention them. They state, however, that *Vṛiddhi* is likewise excluded by the rule, as in आदीध्यक etc.

16. पारिशेष्यात् i.e. because this विद् is alone सेट्.—सनि॰ cf. IV. 1, 11.

25. नुदतीति यद्यपि णुदिरुभयपदी तथापि भाषायामात्मनेपदं नाभिधीयते। परस्मैपदेषु केचित्पठन्ति॥ D.

26. यथा विदेरगुणत्वं तथा उषधातोरपीत्येके मत्वा। एवग्रहणेन विदेरेव धारयति। तथा च भारद्वाजीयाः पठन्ति विदेरेवाम् किच्चेति॥ D.॥ उषेरपि गुणो न भवतीति कश्चित् तद्विदेरेवकारेण निरस्यते॥ T.

27. कुट एवादिर्यस्येति स कुटादिः। केचित्कुटादिशब्दस्यावृत्त्या कुटस्य आदिः कुटादिरिति तत्पुरुषमपि वर्णयन्ति। तेन लिखेरपि प्रतिषेधः सिद्धो भवति। तदिहाप्रमाणमिति प्रत्युदाहरणेन सूचयन्नाह कुटादेरित्यादि॥ Tril. (and similarly D.); cf. Dhâtup. 28, 72 लिख॰; 73 कुट॰.—*Râmadâsa* remarks: लिखादेरित्यकरणान्न लिखादेर्ग्रहणम्। अतो न तत्पुरुष इति हेमकरः॥

कथमित्यादि। प्रच्छेरनीय इके संप्रसारणं रूढमित्यर्थः॥ D.—

ननु प्रच्छेः कुटादित्वाभावेऽगुणत्वाभात् कथं संप्रसारणमित्याह कथमिति Râm.

28. विजिर् पृथग्भावे [Dhp. 25, 12] इत्यस्य न ग्रहणं युजिरुजीत्यादिनानिट्वात्। अत ओविजी भयचलनयोः [Dhp. 28, 9] इत्ययमेव तौदादिक आत्मनेपदी गृह्यते ॥ T.

40. The इ of रिः is उच्चारणार्थः

42. श्रुतस्य स्थानिनः°। ऋकारस्यैव न धातोरित्यश्रुतत्वात्। नहि कृप्रभृतयो धातवः श्रुता किंतर्हि समासगम्या इति। अन्तरतम इत्यनेन स्थानेऽन्तरतम इति न्यायादेवेति सूचितम् ॥ T.—For the ऋ of कृ etc. ऋ is in the first place substituted before सन् according to III. 8, 12.

44. असमामदिति सामान्याख्यातवानिति° स्वरादेशो हि स्थानिवद्भवति न तु स्वरव्यञ्जनयोरादेश इति प्रतिषेध उच्यते।°॥ गोनावमाख्यातवानिति गोसहिता नौः। गोनौः। गोर्वा नौरिति। न तु गौश्च नौश्चेति द्वन्द्वः। तदा समाहारे नपुंसकत्वाद् ह्रस्वः स्यात्। इतरेतरयोगे च द्विवचनमिति। इह धात्वर्थ इनि सत्यौकारलोपस्यासमानलोपत्वाद् ह्रस्वः प्राप्तः। औकारस्य स्थानिवद्भावे व्यवधानान्न भवतीति ॥ T.

45. ओणृ forms औणिणत् and (मा भवान्) ओणिणत्; the root being reduplicated according to III. 3, 2, when the ओ is no more *upadhâ*.—भ्राज etc., see Pâṇ. VII. 4, 3. From Durgasiṃha's ṭîkâ it would seem that he does not include भ्रास् (भ्राश्); but reads भाष instead.

Trilochana and Râmadâsa have भ्राजृ भ्राशृ भासृ दीप्तौ।

III. 6, 1. लङ्गीत्यादि । उपतापः पीडा । शरीरविकारश्च देहविकृतिर्न तु स्थौल्यादिरुच्यते कर्म्मेरविषयत्वात् । विलगित इति प्राप्तपीड उच्यते । विकपित इति कर्म्मेनाहितदेहवैकृत्य उच्यते । T. हन्फादि see P. VII. 1, 59, Vârtt.

2. परे i.e. परस्मिन्सूत्रे T.

3. इन्धिग्रहणमनर्थकमेव स्यादित्याह वचनादाम् नास्तीति । इह सविकल्पकानि ज्ञापकानि भवन्तीति। तेन समिन्धांचक्र इत्यपि भवति ॥ T.

4. For परिष्वजेते see III. 6, 63.

5. त्वचयतीति त्वचं गृह्णाति ॥ कलिमग्रहीत् । हलिमग्रहीत् । इतीनि कृते ऽनयोरपि वृद्धावसमानलोपत्वात् सन्वद्भावः प्राप्नोतीति ततो वृद्धेरपवादः । T.

6. ऊर्णोतेर्वेति मतान्तरमावेदितम् । इह पुनर्वृद्धिरेव प्रमाणमिति । T.

13. इज्वत्° । Tril. quotes:

स्यसिजाशीःश्वस्तनीषु भावकर्मार्थकासु च ।
स्वरहनग्रहदृशामिज्वेज्वच्चेति वक्ष्यति ॥

22. Restore कृषी in the text of this sûtra, cf. note on IV. 4,33. तिपा° । ऋर्ति includes ऋच्छति and इयर्ति T.

25. If व were treated as *âgama*, IV. 1, 35 would apply.

34. दरिद्राणम् (aff. यु) दरिद्रायकः (वु) see Pâṇ. VI. 4, 114 Vârtts.

35. मङ्क्ता° । for insertion of न् see III. 5, 31; the elision of स् III. 6, 54.

36. उपोयते i.e. उप-वेञ् with यण्.

39. The इ of सि acc. to Trilochanadâsa may be taken as उच्चारणार्थः, to enable us to form व्यतिसे where अ and स् are elided before से. He seems to be more inclined, however, to form व्यतिस्से, otherwise the sûtrakâra might have used a less ambiguous vowel.

आध्वम्। आशाध्वमिति। आस उपवेशने। आङ् शास इच्छायाम्। ह्यस्तन्या ध्वं धुटां तृतीयश्चतुर्थेषु [का॰ ३. ८. ८] इति सस्य दकारः। तेन धातुसकारस्य धकारे लोपो न वक्तव्यः। यदपि चकाधीति प्रयोगं तदप्यसंगतमितीह चकाद्धीति भवितव्यम्। अत एव ऊधुड्भ्यां हेर्धिरित्यत्र वृत्तिकृता जुहुधि। चकाद्धि। इत्युदाहृतम्॥ T.

The Vṛitti, if the correct readings have been chosen, says that we find आध्वम् (for आद्ध्वम्) and आशाध्वम् (for आशाद्ध्वम्) because there is no difference in the pronunciation. Analogous cases are छिन्धि for छिन्द्धि etc.

44. तद्भावात् i.e. स्थानिवद्भावात् viz. of the *lopa* of the *vikaraṇa* अ (which requires *guṇa*) before ए.

45. तद्धितानात्स्वर इति। आकारवर्जिते तद्धितस्वर इत्यर्थः॥ श्रुतेरभेदादिति तेन यकारलोपो न वक्तव्य इति भावः॥॰॥ यिन् आयीष्विति। यिंश्च आयिश्च ईश्चेति बहुत्वाद्बहुवचनम्॥॰॥ यस्य विभञ्जनात्। यस्येति योगविभागादित्यर्थः॥ T.

46. नियमः किमिति। अन्यथा दिवमिच्छतीति यिनि कृते दिव उद्व्यञ्जने [का॰ २. २. २५] इति वकारस्य उत्वं स्यात्॥ T.

Tril. seems to read वर्णाश्रयत्वाद्° for शब्दाश्रयत्वाद्° । नकारोऽयं वर्णस्तदपेक्षया वर्णाश्रयमेव कार्यं विनियमेन व्यावर्तत इति भावः॥०॥ गोमन्तमिच्छति। पचन्तमिच्छति। पुमांसमिच्छति। इति क्यिन् । ततो नलोपे सति क्विप् । य्वोर्व्यञ्जनेऽय इति यलोपः ° ॥ T.

47. कथं हंसि° । The pratyaya स् with *anubandha* इ is here intended because of the दि.

50. अयन्क्षम् see 39 above.

53. ईट् see III. 6, 88 ff.

54. For the *lopa* of स् in आरिप्सते etc. cf. III. 3, 39.—त्वष्टिः । क्तौ नेट् । see IV. 6, 80.

अवाभ्रडिति मतान्तरेण तस्य लुगचि [का° ४. ४. ४५] इति योगविभागाच्चेक्रीयितलोपेऽत्राप्यन्तग्रहणस्य फलमित्यर्थः । ह्यस्तनीयम् ॥ T.

56. लेच्यति cf. III. 8, 4.

60. उपदेशावस्थायामेव स्वरात्परश्छकारो द्विर्भावमापद्यते। ततः प्रच्छेरन्तस्य छकारस्य षत्वे चकारस्य स्थितिरित्याह निमित्ताभावादिति निमित्ताभावे नैमित्तिकस्याप्यभावः । चकारस्येत्यर्थः । द्विर्वा पाठ इति सूत्रकृतद्विर्भाव एव च्छकारः पठ्यत इति भावः ॥ T.

61. च्व्यर्थ इत्यादि । येषां डाजलोहितादिभ्यश् च्व्यर्थ इति सूत्रमस्ति तेषां लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति° ॥ इह पुंवद्भावो भाष्येऽपि नैतद्दर्शितमनित्याभ्युपगमाद् गौणमुख्यपरिभाषाया इत्याहाऽन्य इति । अमुख्यमपीति तत्पुनर्लोकप्रसिद्धे-

रभावात् ॥ तेनेति नावमतिक्रान्तं कुलमिति। अतिनु। तदिवाच-रतीत्यायौ कृते नपुंसकस्य पुंवद्भावो न भवतीति। यदीह पुंवद्भावः स्यात्तदा नपुंसकह्रस्वनिवृत्तौ। अतिनाव्यते। इति स्यात् ॥ भाषित इत्यादि। द्रोणशब्दः पुंसि चतुराढकमनि वर्तते स्त्रियां तु जलक्षेपणे। इति नार्थो भाषितपुंस्क इत्यर्थः ॥ कथमित्यादि। शुपूर्वादशु व्याप्तावित्यस्मादाप्तीभावेऽर्थे उरप्रत्यये श्वशुर इत्यौणादिको निपातः। तस्य स्त्रियां श्वश्रूरित्युङन्तो नदादौ पठ्यते। तत आप्तीभावलक्षणस्य भाषितपुंस्कार्थस्य विद्यमानत्वात्समानायामाकृतौ पुंवद्भावे सति श्वशुरायते। इति भवितव्यमिति पूर्वपक्षार्थः। परीहारमाह। नाप्तीभावत्वं श्वशुरत्वमिति° ॥ गर्भोऽस्यास्तीति गर्भी शालिरित्यवयवभूतेन गर्भेण संबन्धात्। गर्भिणी स्त्रीत्यनवयवसंबन्धात्°। ततो भिन्नार्थत्वान्न पुंवद्भावः प्राप्नोति। नैतदेवम्। इहावयवानवयवकृतं भेदमुत्सृज्यान्तर्वर्तित्वमात्रमेकं निमित्तं विवक्षितम् ॥ T.

66, 68, 71–76. Trilochanadâsa does not explain these sûtras.

78. नन्वित्यादि। गत्यर्थत्वाद् यदा जवे वेगे वर्तते तदा सरतीति प्रयोगो मा भूदिति ॥

83. The following is an extract from Ramânâtha's comment on the Dhâtupâtha on the final root of the प्वादयः and ल्वादयः

ली श्लेषणे। लिनाति बाला लावण्यम्। श्लिष्यति प्राप्नोतीत्यर्थः। कर्माविवक्षायाम्। लिनाति जलधौ सरित्। लीनः ॥ ल्वी च। श्लेषणं चार्थः। अन्तस्थाद्तीयाद्यो(!)ऽन्तस्थाप्रथम इति रामः। ल्विनाति। ल्वीनः ॥ पवर्गपञ्चमोपध इति गोविन्दभट्टः। ल्मिनाति ॥ ल्वी चेत्येके। ल्वीनाति (sic!) ॥ इत् ॥

88. चर्करीताद्वेति चेक्रीयितलुगन्तस्य चर्करीतमिति पूर्वाचार्यप्रसिद्धसंज्ञा। अत्रापि पूर्ववच्चेक्रीयितस्य लुक् केचिदित्यन्ये। अयं तु न मन्यते छान्दसत्वात्॥ T.

90. प्रयोगश्च दृश्यते। मा भैः शशाङ्क मम सीधुनि नास्ति राहुरिति तदयुक्तम् अलंकारसौन्दर्यादपप्रयोगोऽयं प्रसिद्धमुपगतः प्रयोगस्तु मा भैषीरिति। तथा च प्रयोगः। मा भैषीः पुत्रे सीते। इत्यादि॥ T.

94. पुस्तकं वक्तीति कर्मण्यण् cf. III. 2, 27; उत्तरत्रापि viz. इष्वास etc.

III. 7, 9. कश्चित् सरतिसूतीत्यादौ धूञ्पाठत्वात् पुनरिह नित्यार्थं धूञमाचष्टे। अनेन धूञ्पाठस्तत्र नादृत एव। एतेनास्यापि नित्यमिडागम इत्याह धूञित्यादि। क्रैयादिकोऽयं दीर्घान्तः। न च परस्यापि मते तौदादिकेन धूञा। अधीषीदिति भवितव्यमिह नित्यपाठस्यानर्थक्यप्रसङ्गात्॥ T.

10. दरिद्रातेरालोपः see III. 6, 34.

12. इट्त्वात्। इट् not ईट् is used to secure the *lopa* of सिच् before ईट् (III. 6, 53).

17. शकू शक इति। अन्यस्तु शक मृष क्षमायामिति दैवादिकस्य ग्रहणं न मन्यते। अतस्तस्य शकिता। इत्येवं मन्यते। तदयुक्तम् इह द्वयोरपि ग्रहणमविशेषात्। ० T.

18. वच वचिस्येति ब्रुवो वचिः [का० ३. ४. ८८] इत्यस्यापि ग्रहणमविशेषादित्यर्थः॥ T.

20. On ओविजी see IV. 6, 90.

30. रिहिलुही इति यथाक्रमं हिंसागार्ह्ययोर्वर्तेते॥ T.

33. बिभ्रक्षतीति (!) भ्रस्जेर्भ्रजादेशो ज्ञापित एव ॥ T.

36. नित्यात्वताम् ।° उपदेशावस्थायां ये ऽकारवन्तो धातवः° ॥ वृव्ये ऽदाम् वृञ् आवरणे । ऋ प्रापणे ऋ गतौ वा । व्येञ संवरणे । अद प्सा भक्षणे । इत्येषामित्यर्थः ॥ T.

III. 8, 5. पिण्ड्ढ । पिषॢ रुधादिः । धि is substituted for हि by III. 5, 35; ढि for धि by our rule; ड् for ष् by III. 8, 8.—Tril.

13. तितनिषतीति । इरन्तर्धेत्यादिना पक्ष इड् वक्तव्यं व्याख्येयम् । केचिदिच्छन्ति केचिन्नेच्छन्ति । तन्मतमिह प्रमाणमित्यर्थः ॥ T.

15. ह्रस्वन्यां° । मतान्तरमिदम् अस्य तु न संमतम् । T.

18. अवर्णेत्यादि । न च वक्तव्यम् एकदेशेनान्तरतमस्य गौणत्वान्नायं प्रसङ्ग इति । गौणमुख्यपरिभाषाया ह्यनित्यत्वाभ्युपगमादिदमुच्यते । यथा । ऋवर्णवृद्धिगुणावाररावितिसिद्धान्तेऽपि कण्ठ्यस्याकारस्य वृद्धिरार् स्यादिति वर्णग्रहणम् ॥ T.

21. The ṣloka जुगुप्सत° refers to a story of King *Daṣaratha* who, hearing a noise on the bank of the *Tamasâ*, and thinking it to be caused by an elephant, discharges an arrow, and afterwards finds that he has pierced a *muni's* boy who is filling a waterpot.—अत्र पुनरपप्रयोगो ऽयं [मा] मास्मशब्दो ह्यक्तद्वन्द्वः समुदायो ऽङ्गीकृत इत्युक्तमेव मास्मशब्दैकदेशेन योगस्य गौनत्वान्न मायोग इति कृते मास्मयोगे प्रतिषेधो न सिध्यतीति । T.

25. सृ is not included in the सोपदेशाः by any MS.

IV. 1. Ṣloka. वृक्षादिवदित्यादि । वृक्षादय इव वृक्षादिवत् । यथा वृक्षादयः संज्ञाशब्दा रूढा लोके विशिष्टविषयतया प्रसिद्धास्तथामी कृतः कृत्प्रत्ययान्ता अपि शब्दा इति मत्वा कृतिना न

कृताः । प्रस्तावादिह कृती पण्डितः शर्ववर्मैवोच्यते । शर्ववर्मणा कृल्लक्षणं न कृतमित्यर्थः । तथा चाह्नः । अभिधानलक्षणा हि कृत्तद्धितसमासा इति । अभिधानं शब्दश्रवणं लक्षणमेतेषां नियामकं न सूत्रमित्यर्थः ॥ केन नाम तर्हि कृता इत्याह । कात्यायनेन वररुचिनेत्यर्थः । ° ॥ Tril.

कत्यपत्यं कात्यस्तस्य प्रशस्तापत्यं कात्यायनो मुनिः । वररुचिशरीरं परिगृह्य शास्त्रमिदं कृतवानिति श्रुतिः । Thus *Harirâma.*

1. सिद्धि° ॥ धातूनामिज्वत्कार्यस्य सिद्धिर्भवति ञ्णनुबन्धे कृत्प्रत्यये परतः ॥ ञानुबन्धे तावत् । पादः । वेगः । रागः । योगः । त्यागः ॥ आदन्तानामायिरादेशः । दायः । धायः । आघ्रायः ॥ स्रायः ॥ नाम्यन्तानां वृद्धिः । भावः । प्राकारः । नीहारः ॥ णानुबन्धे तावत् । पाठकः । पाचकः ॥ कुटादीनां गुणः । उत्कोटकः ॥ उत्कोटः ॥ जनिवध्योर्ह्रस्वः । जनकः ॥ हन्तेर्घः । घातकः ॥ ञ्णनुबन्ध इति किम् । गोदः । कम्बलदः ॥ कृतीति किम् । पच्यते ॥ अनुबन्ध इति किम् । वेणुः । रेणुः । स्थाणुः । चेणुः (!) । अजिचिरिस्थाभ्यो णुः ॥ इज्वदिति निर्देशादकारोपधानां दीर्घः । नाम्यन्तानां वृद्धिः । हन्तेर्घत्वम् । आदन्तानामायिरादेशः । जनिवध्योर्ह्रस्वः । कुटादीनां गुण इति प्राप्त्यर्थोऽयमारम्भः ॥ *Chaitr.*

2. °निर्घातः । निर्घातकः । कुमारघाती । शीर्षघाती ॥ भिदा निर्देशस्येकीयितलुग्निवृत्त्यर्थः । जंह्वानकः ॥ Ch.

22. The affix of the examples is खश् cf. IV. *3, 32*; *30*; *33* resp.—in सुकर् it is खल्.

23. उपोच्चारि° । न केवलं सप्तम्युक्तानामुपपदानामेषां किं तर्ह्युपोच्चारिणां पदानामपि कारशब्दस्य समीपोच्चारिणामपि° ।

घञन्तेऽपीच्छन्तीति । न केवलमणन्त इत्यर्थः ॥ प्रीणनं प्रीणः । इन्धनम् इन्ध इतीनन्तादल् । लोकस्य प्रीणः° । T. (cf. Pâṇ. VI. 3, 70, Vârtt. 4). The *Chaitr.* does not give this example; but it has the two *vârttikas:* भद्रोष्णयोः करण इति वक्तव्यम् ॥ इन्धेर्भ्राष्ट्राग्न्योरिति वक्तव्यम् ॥ to which it adds दिनस्य मध्यं मध्यंदिनम् ॥

श्येनस्येव तिलस्येव पातो यस्यां क्रीडायाम्॰ ॥ T.

24. गिल cf. III. 6, 99.—शतयोजनविस्तर इति पूर्वार्धम् T.

26. आङिति किम् । लभ्यः ॥ कथम् अग्निष्टोममालभ्य यजमानः कृती भवति सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥ Chaitr.

27. अनुपसर्गाद्वा णमिचोरिति वक्तव्यम् । लम्भं लम्भं गच्छति । लाभं लाभं गच्छति ॥ अलम्भि । अलाभि ॥ Chaitr.

28. धेनोर्भव्यायामिति वक्तव्यम् । धेनुंभव्याः । धेनुभव्याः ॥ वाढस्य करणे नित्यम् । वाढंकरणम् ॥ Chaitr.

29. The Chaitr. omits सर्वसह in the Sûtra and Comment and adds the vârttika: धुरंधरश्चेति वक्तव्यम् । धुरंधरः । धूर्धरः । उक्तं च । संग्रामे गतशूराणां कौरवाणां धुरंधरे ।

हते भीष्मे प्रदुद्राव सेना भीमाभिरक्षिता ॥

30. The affixes are क्विप् । यप् । क्यप्.

33. क्रेयं° । मम क्रेतव्यं ग्रहीतव्यं स्वीकर्तव्यमिति । नास्ति क्रय्यमिति न च तदस्ति क्रय्यं क्रयार्थमुपन्यस्तं धान्यमप्रसारितत्वाद्धट्टे ततः किं क्रीयत इत्यर्थः ॥ T.

क्रयार्थेनोपयुक्ता गौः । क्रय्या गौः । क्रय्यः पटः । क्रय्यः

कम्बलः ॥ क्रयार्थे यः प्रसारितः स क्रय्य उच्यते ॥ तदर्थं इति किम् । क्रेयं नो धान्यं न चास्ति क्रेता ॥ Ch.

34. ओष्ठ्योऽयं वकार इति । सूत्रे च दन्त्योष्ठ्यो निर्दिष्ट इति भावः ॥ T.

36. वेटाम्° । ते इति तव सिद्धान्तवाचिनः T.

37. ऋदृचि° also given by the Chaitr.; but गडिमडिभ्यां झः । गण्डयन्तः । मण्डयन्तः ॥

38. उपसर्गादापो वा । इति वक्तव्यम् । प्राप्य गतः । प्रापय्य गतः ॥ अध्याप्य । इति लाक्षणिकत्वान्न भवति ॥ Chaitr.

39. लियतेर्वेति वक्तव्यम् । विलाय । विलीय ॥ मेङ इद्वा वक्तव्यः । प्रमाय । प्रमित्य ॥ Chaitr.

40. लाक्षणिकत्वादिति षानुबन्धभिदादिभ्यस्त्वङिति लक्षणतो योऽनुबन्धोऽप्रयोगी षकारस्य व्यपाये त्विरूपस्य संभवादित्यर्थः॥T.

41. चकारः किम् । भावदैन्याक्रोशेषु विकल्पार्थम् । क्षितायुः । क्षीणायुः । क्षितः तपस्वी । क्षीणः तपस्वी । क्षितो जाल्मः । क्षीणो जाल्मः ॥ Chaitr.

42. क्वचिन्न भवति । स्फातीकृतानि विमलयशांसि ॥ Chaitr.

43. अतत्स्थमिति । तत्र प्राणिनि दृष्टं न च तत्स्थं यदपि स्वाङ्गं यथा पीनो बाहू रथ्यायां पतित इति ॥ T.

आङोऽन्धूधसोः is identical with Vopadeva XXVI. 117.

प्यायो धातोः पीरादेशो भवति निष्ठायां परतः । स्वाङ्गेऽभिधेये । पीनं मुखम् । पीनौ स्तनौ । पीनवन्तौ बाहू ॥ स्वाङ्ग इति किम् । आप्यानो देवदत्तः ॥ आङोऽन्धूधसोरिति वक्तव्यम् । आपीनोऽन्धुः । आपीनमूधः ॥ इह न भवति । आप्यानश्चन्द्रमाः ॥ Ch.

44. चीरहविषोरिति वक्तव्यम् । तेनेह न भवति । श्राश्राणो यवागूः ॥ पाक इति किम् । श्राणम् ॥ Chaitr.

45. केचिन्मादेशमिच्छन्ति । प्रस्तीमः । प्रस्तीमवान् ॥ प्रपूर्वस्येति किम् । संस्त्यानः । संस्त्यानवान् ॥ Chaitr.

यदि पुनः प्रात्स्त्या इति पञ्चमीलक्षणस्तत्पुरुषः स्यात् तदा पञ्चम्या निर्दिष्टे परस्यानन्तरस्यैव स्याद् न संशब्दव्यवहितस्येत्यर्थः। एतत्तु मतान्तरम् इह तु पञ्चमीसमासो न्याय्य एवेति। प्रसंस्त्यान इत्यस्य मतं वर्णयन्ति । इह परत्वादातोऽन्तस्थासंयुक्तादिति निष्ठातकारस्य नकारः कथं न स्यादिति न चोद्यम् अन्तरङ्गो हि संप्रसारणविधिरिति स एव स्यात् तत्र च कृते वा प्रस्त्यो म इत्येतदेव भवतीत्याह । अन्तरङ्गत्वादित्यादि ॥ T.

46. इहापि पञ्चम्या समासे व्यवहिते न भवति । प्रतिसंस्त्यान इति ॥

48. उभयत्र viz. द्रवघनस्पर्शयोः T.

49. This and the next sûtras are not optional 'उभयोर्विभाषयोर्मध्ये यो विधिः स नित्य एवेति न्यायात्' T.

51. The *Chaitr.* makes no mention of any difference of opinion with regard to सम्; Pâṇ. VI. 1, 44 admits the optional formation of the gerund of व्या with परि only; Vop. XXVI. 218 with परि and सम्.

52. ध्याङोऽपीति वक्तव्यम् । कारीषसन्धीपुत्रः । कारीषसन्धीपतिः ॥ *Chaitr.*

54. The *Chaitr.* omits this *sûtram;* for ध्या see *vârttika* on the preceding rule.

55. The *Ch.* explains: पञ्चमान्तस्य धातोरकारोपधाया दीर्घो भवति ।°। अकारोपधाया इति किम् । प्रतिन् ॥

58. Acc. to the *Chaitr.* here as before अगुणे and पञ्चमे are implied, only the last of which is exemplified: कूर्मा । घूर्मा । मूर्मा. It adds the probably misplaced *vârttikas* उद्: स्थास्तम्भयोः सलोपो भवति । उत्थानम् । उत्थितः । उत्तम्भः । उत्तम्भकः ॥ स्कन्दो रोगाख्यायाम् । उत्कन्दो नाम रोगः ॥

60. लङ्गिकम्प्योरुपतापशरीरविकारयोर्निष्ठायामिति वक्तव्यम् । विलगितः । विकपितः ॥ अन्यत् । विलङ्गितः । विकम्पितः ॥ Chaitr.

65. अवोदेत्यादि । मतान्तरमेतत् । एते हि छान्दसा इति नैयासिकाः । तदिह प्रमाणम् ॥ T. The *Chaitr.* does not mention these additional cases.

67. The Chaitr. om. युट्°.

68. वृहि वृद्धाविदनुबन्धः । कथमित्यादि । अनिदनुबन्धः प्रकृत्यन्तरमस्तीति भावः ॥ T.

आरम्भः किम् । गोवर्हा । कुञ्जरवर्हा ॥

वृंहवृह्योरमी साध्या वृंहवर्हादयो यदि ।

विना सूत्रेण चैवायं न वर्हा भावके स्त्रियाम् ॥ Chaitr.

69. जगत् cf. IV. 4, 58.

71. सनेः सनि वेति वक्तव्यम् । सिषासति । सिषांसति ॥ घुटीति किम् । सिषणिषति ॥ Chaitr.

72. आख्यातिकयकारेऽपीति वक्तव्यम् । चाख्यायते । चंख-

न्यते। सासायते। संसन्यते। जाजायते। जंजन्यते॥ तनोतेर्यणीति वा वक्तव्यम्। तायते। तन्यते॥ Ch.

74. अपगुरो णमि व्युपसंख्यानं कर्तव्यम्। अपगारम्। अपगोरम्॥ Ch.

75. क्लीति सूत्रत्वादाकारलोपः॥ T. छन्दसि वा वक्तव्यः। ह्लिवा। ह्लीत्वा॥ Ch.

77. The Chaitr. om. the vârttikam.

80. The substitute is दत्, therefore IV. 6, 102 does not apply. Tril.

दान्ते दोषो निष्ठा नत्वं धान्ते चैव धकारता।
तान्ते तोपधदीर्घत्वं तस्मात्थान्तो न दुष्यति॥ Ch.

81. दस्तीति। दासंज्ञकस्य स्थाने यस्तकारादेशस्तन्निमित्ते नामिन एव दीर्घः।०॥ T.

वादिकर्मणीति। आदिकर्मणि विहिते क्तप्रत्यये दाञ एव विभाषया वा क्ताशोरित्यस्मान्मण्डूकप्लुतिवाधिकारस्मरणेनेत्यर्थः। सर्वत्रादिकर्मणि क्तः कर्तरि चेति क्तप्रत्ययः। शाकटायनस्तु प्रदत्तमित्येतदेवादिकर्मणि मन्यते। शेषास्त्वविशिष्टा वृत्याचक्षते॥ T.

उपसर्गप्रतिरूपका अव्ययाः सन्ति। उक्तं च।

अवदत्तं निदत्तं च प्रदत्तं चादिकर्मणि।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते॥ Chaitr.

82. The Chaitr. has the same *kârikâ*.

83. After this the Chaitr. has the following sûtra:

क्त्वामसन्ध्यक्षरान्तोऽव्ययम्॥ क्त्वान्तो मान्तः सन्ध्यक्षरान्तश्चाव्ययसंज्ञो भवति। कृत्वा। हृत्वा। स्वादुकारं भुङ्क्ते। इच्छति गन्तुम्।

विलिखे । वितुदे । केवलावगाहे । परिस्तरितरै । परिधातावै ॥ अव्यय इत्यनेन कार्यो ऽव्ययाच्च ॥

IV. 2, 1. Cf. Pâṇ. III. 1, 91 ff.

4. The Chaitr. here quotes and explains one by one Pâṇini's sûtras I. 4, 61–79 without the *vârttikas*.

5. अग्रे प्रथमे पूर्वे इत्युपसंख्यानं कर्तव्यम् । इत्येतेषामपि समासो न भवतीति वक्तव्यम् । Chaitr.

6. क्त्वा वेति वक्तव्यम् । उच्चैः कृत्वा । उच्चैःकृत्य॰ ॥ Ch.

9. वासः कारितान्तात्कर्तरि तव्य इति वक्तव्यः । वास्तव्यः ॥ कर्मकर्तरि केलिम उपसंख्यानं कर्तव्यम् । पचेलिमा माषाः । भिदेलिमानि काष्ठानि ॥ प्रच्छेः संप्रसारणं चानीय इति वक्तव्यम् । पृच्छनीयो गुरुः ॥ Chaitr.

भिद्यन्ते स्वयमेव । भिदेलिमा माषाः॰ । तदेतन्न वक्तव्यम् अभिधानमेवेदमीदृशं न च कृत्यसंज्ञायां प्रयोजनमस्तीति ॥ Tril.

10. सुखार्थं; since ऋट and ऋह should be excepted, cf. IV. 2, 35.

11. तकिशसिचतियतिजनिहनीनामुपसंख्यानं वक्तव्यम् । तक्यम्॰ ॥ Chaitr.

13. चरतेस्तनोतेश्चेति वक्तव्यम् । ॰ ॥ यमः पूर्वेणैव सिद्ध इह नियमार्थमिदं वचनम् ॥ Chaitr.; cf. Sûtra 11.—अनुपसर्ग एव यथा स्यादिति भावः ॥ T.

20. अनुपसर्ग इत्येव । ब्रह्मप्रवाद्यम् ॥ Chaitr.

23. शन्सिदुहिद्रुहिगुहिग्रहिभ्यो वेति वक्तव्यम् । शस्यं शंस्यम् । दुह्यं दोह्यम् । द्रुह्यं द्रोह्यम् । गुह्यं गोह्यम् । गृह्यं ग्राह्यम् ॥

आङ्पूर्वादजेः संज्ञायामित्युपसंख्यानं वक्तव्यम् । आज्यं घृतम् ॥ Chaitr. (see Durg. on IV. 2, 29; P. III. 1, 109 V.).

24. पाणौ सृजेश्च घ्यण् वक्तव्यः । पाणिसर्ज्या रज्जुः ॥ समवपूर्वाच्च । समवसर्ज्या रज्जुः ॥ Chaitr.

25. संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति ।
स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति ॥ T. Ch.

27. अग्रविबाह्ययोरिति (? read अखैरि°) वक्तव्यम् । गृह्यका द्रुमे । गृहीतका इत्यर्थः । बाह्यायाम् । ग्रामगृह्या सेना । नगरगृह्या सेना । ग्रामनगराभ्यां बहिर्भूतेत्यर्थः । स्त्रीलिङ्गनिर्देशादन्यत्र न भवति ॥ Chaitr.

28. मृषोद्यमिति वक्तव्यम् । मृषोद्यम् ॥ Chaitr.

29. All three MSS. read पति in Vârtt. तकिचति° see Mbh. on P. III. 1, 97; Vop. 26, 12.

35. घकारः सामान्याभिघातार्थ इति । कत्वगत्वलक्षणस्य कार्यविशेषस्य संपादनार्थो घकार इत्यर्थः ॥ T.

45. The *Chaitrakuṭî* inserts this sûtra between rules 35 and 36, and has in this place the following additional sûtra: तवैकेन्केन्यत्वाः ॥ सर्वेभ्यो धातुभ्यः तवैकेन्केन्यत्वाः प्रत्यया भवन्ति भावकर्मणोरभिधेययोः । तवै तावत् । परिधीयत इति परिधातवै ॥ केन् । अवगाहे । न वितुदे ॥ केन्यः । दिदृक्षेण्यः ॥ त्वा । लिखित्वा । वन्दित्वा । रथकर्त्वम् ॥ see Pâṇ. III. 4, 14.

49. नन्दादेर्धातुगणात्परो युप्रत्ययो भवति । कर्तरि कारके । नन्द्यादेर्नामधातुसंनिकृष्टा न गृह्यन्ते किं तर्हि नन्दनरमण इत्येवमादिषु प्रातिपदिकगणेषु प्राकृत्यप्रत्यया निर्दिश्यन्ते ॥ नन्दिर-

मिवामिसहिम्हषिकर्षिसाधितपिवर्धिसोचिरोचिभ्यः संज्ञायाम् । नन्दनः । रमणः । वामनः । कर्षणः । साधनः । तपनः । वर्धनः । रोचनः ॥ सहिपतिकमिभ्यः संज्ञायाम् । सहनः । पतनः । दमनः ॥ अन्येभ्योऽपि वक्तव्यः । दर्पणः । तर्पणः । जल्पनः । पचनः । पवनः । लवणः । इति निपातनाल्लम् । मधुसूदनः । संकर्षणः । विभीषणः । जनार्दनः । संक्रन्दनः । वित्तनाशनः । कुलमर्दनः ॥ Ch.

52. गिरतेरिति क्व विक्षेप इति तौदादिकेन सहचरितो गॄ निगरण इति तौदादिको गृह्यते न तु क्रैयादिको गॄ शब्द इति॥ T.

53. जिघ्रः संज्ञायां प्रतिषेधो वक्तव्यः । व्याघ्रः ॥ Chaitr.

54. नेर्लिम्पेरिति वक्तव्यम् । निलिम्पा नाम देवता । अथवा राक्षसी ॥ गवादिषु विन्देः संज्ञायां । गोविन्दः । अरविन्दः ॥ Ch.

Between 54 and 55 Chaitr. inserts the following sûtra:

दाञ्धाञोर्वा ॥ अनुपसर्गे दाञ् । धाञ् । इत्येतयोर्धात्वोः शङ्प्रत्ययो भवति वा । ददातीति ददः । दधः । दायः । धायः ॥ अनुपसर्ग इत्येव । प्रदः । प्रधः ॥ अनुबन्धकरणं चेक्रीयितलुग्निवृत्त्यर्थम् । दादायः । दादायकः । दाधायः । दाधायकः ॥

55. अवपूर्वात्तनोतेरुपसंख्यानं कर्तव्यम् । अवतनोतीति । अवतानः । अवतनः ॥ Chaitr.

Chaitr. has भू in the rule, but not in the comment.

59. भवतेश्च वक्तव्यम् । भवः । भावः ॥ Ch.

66. किंतु वुषः षानुबन्धत्वात्स्त्रियामीप्रत्ययः स्यात् । अथ नदादेराकृतिगणत्वादेषामीर्न भविष्यति । तर्हि प्रपञ्चार्थमेतदिति ॥ T.

IV. 3, 1. तच्च कर्म त्रिविधं क्रमेणोदाहरति । कुम्भकार इति निर्वर्त्ये । काण्डकार इति विकार्ये । शरलावो वेदाध्याय इति

प्राप्ये ॥ क्वचित्तु प्राप्ये कर्मणि न दृश्यत इत्याह । आदित्यं पश्यतीत्यादि ॥ T.

त्रिविधं कर्म । निर्वर्त्यं विकार्यं प्राप्यं चेति । ॰ । यदसदुत्पद्यते तन्निर्वर्त्यम् । कुम्भं करोतीति कुम्भकारः ॥ विकार्यम् । काण्डलावः । शरलावः ॥ प्राप्यम् । वेदाध्यायः । चर्चापारः ॥ ग्रामं गच्छति । आदित्यं पश्यति । हिमवन्तं शृणोतीत्यत्र न भवत्यनभिधानात् । अभिधानलक्षणा हि कृत्तद्धितसमासास्येति वचनात् ॥ Chaitr.

2. Sûtra 6 तुन्द॰ नुदोः कः is given by the Chaitr. as a Vârttika to this rule; see Vârtt. on Pâṇ. III. 2, 1.

वेञ् तन्तुसन्ताने is intended here, not वा गतिगन्धनयोः

6. आनन्दकर एवेति । यो दुःखमपनयन् पुत्रजन्मादिनानन्दं करोति स एव । न तु धर्मोपदेशकतया यः शोकमपनयतीत्यर्थः ॥ T.

10. या ब्राह्मणी सुरापा सुरापी वा । नैनां देवाः पतिलोकं नयन्ति ॥ Chaitr.

11. संभाव्यमानमिति । इयं क्षत्रियकुमारस्य वयोऽवस्था येन कवचं हरति । उत्क्षिपति । समर्थो वा तदुत्क्षेपणकरण इति कश्चित्संभावयति । एवम् अस्थिहरः श्वेत्यनुद्यमने दर्शयति । अंशहरो वातहरमिति । अंशं स्वीकारोति । वातमपनयति न तूर्ध्वमुत्क्षिपतीत्यर्थः ॥ T.

बाह्ये दूत इति वक्तव्यम् । बाह्यहरा दूती ॥ Chaitr. (!)

14. स्तम्बकर्णयो रमिजपोर्हस्तिसूचकयोरिति वक्तव्यम् ॥ Chaitr.; see 16.

15. घटघव्योश्चेति वक्तव्यम्। घटग्रहः। घटग्राहः। घटीग्रहः। घटीग्राहः॥ Chaitr.

पचादित्वादचि कृते घटस्य ग्रहो घव्या ग्रह इति षष्ठीसमास इत्यर्थः। तेन घटघव्योश्चेति न वक्तव्यम्॥ सूत्रग्रहः सूत्रधार उच्यते। अन्यत्रेति यः सूत्रमुपादत्ते क्रीणात्युद्धरति वा तत्राणे-वेत्यर्थः। एवं तर्हि पूर्वेणैवाचा सर्वमिदं तत्सिद्धम्॥ Tril.

18. पार्श्वादिष्वधिकरणेषूपसंख्यानं कर्तव्यम्। पार्श्वाभ्यां शेत इति पार्श्वशयः। उदरशयः। पृष्ठशयः॥ दिग्धपूर्वाच्च। दिग्धेन सह शेते। दिग्धसहशयः॥ उत्तानादिषु कर्तृषु च। उत्तानः शेते। अधोमूर्धशयः॥ Ch.

19. After this the Chaitr. has the sûtra: अन्यत्रापि च॥ अन्यत्रापि चोपपदे चरेर्धातोष्टः प्रत्ययो भवति। भिक्षया चरतीति भिक्षाचरः। चक्रचरः। सेनाचरः। आदायचरः॥

22. प्रतीत°। कारयति यः स हेतुश्च [का° २. ४. १५] इति प्रयोजको हेतुर्णिप्रत्ययवाच्यः। तदभावे लौकिक एव हेतुरित्यर्थः॥

23. त्यदादीति [त्यद्यदादीति G.] केचित्पठन्ति। तदयुक्तमित्याह त्यच्छब्द इति। न खलु भाषायां त्यत्कर इति दृश्यते॥ T.

अन्येष्वपि भवतीति वक्तव्यम्। जङ्घाकरः। अयस्करः। आविष्करः। अहेत्वाद्यर्थोऽयमारम्भः॥ Chaitr.

25. व्रीहिवत्सयोरिति वक्तव्यम्। Chaitr.; see Vârtt. on P. III. 2, 24.

28. छन्दसि वनषणरक्षिमथामिति वक्तव्यम्। [MS. वलचण°] Chaitr.; see P. III. 2, 27.

31. वातशर्धयोरज्जहात्योरुपसंख्यानं कर्तव्यम्। वातमजन्ती-

ति वातमजा मृगाः । शर्धं जहतीति शर्धंजहा माषाः ॥ Chaitr.; see Vârtt. on P. III. 2, 28; Durg. on K. IV. 3, 28.

32. घटीखरीवातेषूपसंख्यानं कर्तव्यम् ।॰ Chaitr.

33. वहं तुदतीति वहंतुदः ॰ Ch.

47. सुदुरोरधिकरण इत्युपसंख्यानं कर्तव्यम् । सुखेन गच्छन्त्यस्मिन्निति सुगः ।॰ ॥ निर्गो देशे । निर्गम्यतेऽस्मिन्निति ॥ गुरुतल्पगः । पीठगः ॥ Chaitr.

50. Chaitr. supplies the three Vârttikas on Pâṇ. III. 2, 49.

55. मतमिति । अस्य संमतम् अन्यस्तु वाङ्मन इति न मन्यत इत्यर्थः ॥ T.

56. राजघ इत्युपसंख्यानं कर्तव्यम् । राजानं हन्तीति राजघः ॥ Ch.

57. उत्पादोऽभूतप्रादुर्भावः । तस्मिन्सत्यप्यविवक्षैवाभूततद्भावस्य प्रकृतेरनाश्रयणात् । प्रकृतिः कार्यस्य पूर्वावस्थोच्यते ॥॰ T.

62–63. Chaitr. has the two additional sûtras:

ण्युट् कव्यहव्यपुरीष्येषु ॥ कव्य । हव्य । पुरीष्य । इत्येतेषु कर्मसूपपदेषु वहेर्धातोर्ण्युट्प्रत्ययो भवति । कर्तरि कारके छन्दसि विषये । कव्यवाहनः । हव्यवाहनः । पुरीष्यवाहनः ॥ पुरीषे चेति वक्तव्यम् । पुरीषवाहनः ॥ कथं नरवाहनः । नरो वाहनो यस्य स नरवाहनः ॥ cf. P. III. 2, 65, 66.

अवयाउक्थशाःपुरोडाःश्वेतवाश्च ॥ अवयाः ॰ इतीमे शब्दा विण्प्रत्ययान्ता निपात्यन्ते । अवपूर्वस्य यजेरवयाः । उक्थशब्दे कर्मणि करणे वोपपदे शंसतेर्धातोः । उक्थानि शंसति । उक्थैर्वा । उक्थशः । पुरस्पूर्वस्य दाशृ दाने॰ पुरोडाः । श्वेता एनं वहन्तीति श्वेतवा इन्द्रः ॥ ॰ ॥ cf. P. III. 2, 71, 72, and Kât. IV. 3, 65.

66. चकाराद्दादन्ताद्धातोर्विडपि भवति। गोदा। गोधा। कीलालपा वा॥ Ch.

69–71 are not explained by Tril.

75. समानान्ययोश्चेति वक्तव्यम्। सदृशः। सदृक्षः। सदृक्। अन्यादृक्। अन्यादृशः। अन्यादृक्षः॥ Chaitr.; cf. Vârttika of Kâṣikâ V. on P. III. 2, 60.

समानान्ययोश्चेति न वक्तव्यमित्याह। एष्वित्यादि। न ह्यन्यथा दृग्दृशदृक्षेषु समानस्य स इति वचनमुपपद्यत इति भावः॥ T.

76. उत्प्रतिभ्यामाङः सर्तेरिति वक्तव्यम्। उदासारिण्यः। प्रत्यासारिण्यः॥ साधुकारिणि च। साधुकारी। साधुदायी॥ ब्रह्मणि वदः। ब्रह्मवादिनो वदन्ति॥ Chaitr.; cf. K. V. on P. III. 2, 78.

उत्प्रतिभ्यामाङ्सर्तेरिति वक्तव्यमनामत्वात्। तथा च ब्रह्मणो वद इति जातित्वात् ताच्छील्याभावाद्वा। साधौ चेति साधुशब्दे ऽप्यताच्छील्ये क्रियाविशेषणेन सिध्यतीत्याह कथमित्यादि।°॥ आकृतीत्यादिना जातेः परिभाषामाह। आक्रियेते व्यज्येते बुद्धि-शब्दावनयेत्याकृतिः संस्थानमुच्यते। गृह्यतेऽनेनेति ग्रहणम्। आकृतिर्ग्रहणं यस्याः साकृतिग्रहणा संस्थानव्यङ्ग्येति°॥ लिङ्गानां च न सर्वभागिति यापि लिङ्गानां सर्वरूपं न भजते किंत्वेकं द्वे वा सर्वाणि लिङ्गानि न भजत इत्यर्थः। सापि जातिरित्यर्थः।°॥ सकृदाख्यातनिर्ग्राह्येति। एतत्तु सर्वस्या एव जातेः स्वरूपमुक्तम्। सकृदेकवारमाख्यातोपदिष्टा सा हि निश्चयेन ग्राह्या°॥ तृतीयं लक्षणमाह गोत्रं चेति। अपत्यं पौत्रप्रभृतिकं गोत्रमिति पूर्वा-चार्यैः परिभाषितमिह गोत्रं गृह्यते यथा गार्ग्यो वात्स्य इति।

यद्यपि गार्ग्यादिषु गार्ग्यत्वादिजातिर्गवादिषु गोत्वादिवदस्ति तथापि न तत्संस्थानव्यङ्ग्यम् । ° ॥ मतान्तरमाह । प्रागुत्पत्ति° । गुणानामजात्यात्मकत्वं दर्शयितुं गुणैरिति विशेषणे तृतीयामाह । अनेकगुणाश्रयस्यार्थो भवतीति बहुवचनम् । ° ॥ अतो लक्षणान्तरमाह । असर्वलिङ्गामिति । यस्यामपि सर्वलिङ्गं न विद्यते किंत्वेकं द्वे वा लिङ्गे भवतः सापि जातिः । यथा ब्राह्मणत्वादिरत्र मते गोत्रचरणमात्रलक्षणाप्यसर्वलिङ्गत्वादेव जातिः । यदाह शाकटायनः । गोत्रचरणमत्रिलिङ्गैव जातिरिति । ° ॥ T.

83. बहुलं छन्दसीति वक्तव्यम् । मातृहा । पितृहा ॥ इह न भवति । मातृघातः । पितृघातः ॥ Chaitr.

84. उपपदस्यानियमादन्यस्मिन्नुपपदे भवत्यपि । शास्त्रकृत् । भाष्यकृत् । मुष्टिकृत् ॥ Ch.

86. कर्मण्यग्न्याख्यायामिति वक्तव्यम् । कर्मण्युपपदे चिनोतेर्धातोः क्विप्प्रत्ययो भवति । अतीते काले धातूपपदसमुदाये चेदग्न्याख्या गम्यते । श्येन इव चीयते । श्येनचित् । कङ्कचित् ॥ Ch. (P. III. 2, 92).

91. Ch. adds P. III. 2, 99 as vârttika.

92. गमस्यातीते काले डो भवतीति वक्तव्यम् । अरण्यगः ॥ Ch.

IV. 4, 1. यणि° for ईर् see III. 5, 42; for जागृ III. 6, 13; the अनुषङ्गलोप III. 6, 1.

व्यतिजजागृवान् । व्यतिजजाग्राणः । Ch.

15. अनुपसर्ग इति वक्तव्यम् । उद्भविता । प्रणमिता । तृजेव ॥ Chaitr.

16. निराकरिष्णुरिति वक्तव्यम् ॥ इनन्तस्य च्छन्दस्येवेष्यते ।

दृषदं धारयिष्णुः । निरुद्धं कारयिष्णुः ॥ भवतेरपि छन्दस्येवे-ष्यते । अन्यत्र न भवति । भविता ॥ वृतेश्च भवतीति वक्तव्यम् । वर्तिष्णुः ॥ Chaitr.—निराकृ is included in P. III. 2, 136.

22. अन्येषां च भवतीति वक्तव्यम् । अविचारी । आपोषी । अपचारी ॥ Chaitr.

24. कष हिंसार्थः । लष कान्तौ । अपपूर्वादपीष्यते । अपला-षी ॥ Tril. cf. P. III. 2, 144.

25. सर्तेश्चेति वक्तव्यम् । प्रसारी ॥ Ch.—प्ररापीत्यपि कश्चित् ॥ T. In the foot-note to this sûtra read also रप (for वप) and प्ररापी.

26. प्रसारीत्यपि कश्चित् ॥ Tril.

30. शब्दार्थाच्चाकर्मकादिति वक्तव्यम् । शब्दनः । तेनेह न भवति । पठिता विद्याम् ॥ Chaitr.

32. लषपतपदामिति वक्तव्यम् । लषनः । पतनः । पदनः ॥ Ch.

36. षु प्रसव इति । अन्ये तु षु प्रेरण इत्यस्य ग्रहणं मन्यन्ते ॥ T. The Ch. does not say which of the two roots is intended here.

38. शीङिति वक्तव्यम् । शयालुः ॥ अन्येभ्योऽपि भवति । शी-तालुः । उष्णालुः । बुभुचालुः । ईर्ष्यालुः ॥ Chaitr.

45. केचिदित्यादि । तस्य लुगित्येको योगः । अचीति द्वितीयः । अच्येवेति नियमार्थः । तेन पूर्वयोगो निरपेचो विकल्पेन भवति । अतो वा लुक्चेक्रीयितस्येति न वक्तव्यं भवति । तत्पुनर्भाषायां प्रयो-गानुसारेण वेदितव्यं न सर्वत्र । तथा च भट्टिकाव्ये बोभवीति दृश्यते । अन्ये तु सर्व एव चेक्रीयितलुगन्ताश्छान्दसा इति प्रति-पन्नाः । तदत्र प्रमाणम् । चर्करीताद्वेति केचिदितीट् । अदादौ चेदं पंचत इत्यन्विकरणस्य लुक् ॥ T.

53. छन्दसीति वक्तव्यम्। सोमपानं शीलमस्येति पपिः सोमम्। ददिर्गाम् ०॥ भाषायां तु डुधाञ्कृञ्सृहृञ्भृजनिनमिमदिभ्य इति वक्तव्यम्। दधिः। ०। नेमिः। मेदिः॥ सहिवहिपतिचलिभ्यश्चेक्रीयितान्तेभ्य इति वक्तव्यम्। ०॥ Ch. – cf. vârtts. on P. III. 2, 171.

59. इह डुप्रकरणे मित्रद्र्वादिभ्य उपसंख्यानं कर्तव्यम्। मित्रं द्रवतीति मित्रद्रुः। गतद्रुः। कद्रुः॥ Ch.

65. ०ऋषिदेवतयोर्यथासंख्यं संबन्धः। ऋषौ करणे देवतायां कर्तरि। पूयतेऽनेनेति पवित्रोऽयमृषिः। देवतायां पुनात्यसौ। पवित्रोऽयमग्निः। पवित्रः सोमः॥ Ch.

67. Tril. and Chaitr. give the following sûtras:

कृवापाजिमिस्वदिसाध्यशूहृसनिजनिचरिचटिभ्य उण्॥ T.

कृवापादृजिमिचटिचरिस्वदिसाध्यशूवहिरहिभ्य उण्॥ Ch.

अजिचिरिस्थाभ्यो णुः॥ वेणुः। चेणुः ०॥ Ch.; see on IV. 1, 1.

सर्वधातुभ्यो मन्॥ Ch. T.

छिदादिभ्यो रक्॥ Ch.

68. अश्वस्तन इति वक्तव्यम्। श्वो गन्ता ग्रामम्॥ Ch.

72. प्रथमासमानाधिकरणे चेति वक्तव्यम्। कटं करिष्यन्व्रजति। कटं करिष्यमाणो व्रजति॥ Ch.

IV. 5, 1. त्र्यव्याधिश्चेति चकारेणान्योऽपि कर्ता कथ्यते। स्पृशतीति स्पर्शो देवदत्तः॥ T.

2. मत्स्यबलयोश्चेति वक्तव्यम्। विसारो मत्स्यः। विसारं बलम्॥ Ch.

स्विति लुप्तपञ्चम्येकवचनं पदम्। T.

4. दारजारौ कर्तरि कारितस्य लुक् चेति वक्तव्यमिति क-

स्थित्° । तदिह न वक्तव्यमित्याह । दीर्घन्त इत्यादि ।. T. see Vârtt. 4 on Pâṇ. III. 3, 20.

6. अपादाने स्त्रियामित्युपसंख्यानं कर्तव्यम् । उपाध्यायी ॥ आकारान्ताच्च । आम्नायः । आदायः । धायः । न्नायः ॥ Chaitr. P. III. 3, 20 V.

7. संरवणं वर्तत इति विगृह्याभिविधौ भाव इनुण् तदन्तात्स्वार्थेऽणि कृत उपसर्गस्य वृद्धिः । अत एव बाधको घञ् तस्मिन्प्राप्तेऽस्यारम्भादिनुण्° स एव परत्वाद् घञं बाधत इति ॥ T.

9. संयावः । संद्राव एवेति केचिदित्युद्याव उद्राव इति नेच्छन्तीत्यर्थः । अत एवेति समि युद्रुभ्य इत्येकं योगं पठन्ति ॥ श्रणातेर्वायुवर्णावरणेष्विति न वक्तव्यमित्याह तथेति । अप्यधिकारादित्यर्थः ॥ T.; P. III. 3, 21 V.

10. प्रभाव इति वक्तव्यम् ॥ Chaitr.

16. परिन्योर्नीणोर्द्यूताभ्रेषयोरिति वक्तव्यम् ।° Ch.; see IV. 5, 37 (P. III. 3, 37).

22. समुच्छ्राय इति वक्तव्यम् । Ch.

31. Hereto two Vârttikas in Ch.: परावनतिपात्यय (sic! °पर्याय?) इन इति वक्तव्यम् । क्रमप्राप्तस्यानतिक्रमोऽनतिपात्ययः परिपाटिरित्यर्थः । तव पर्यायो मम पर्यायः । इह न भवति । कालस्य विपर्ययः ॥ व्युपयोः शेतेः पर्यायस्येति वक्तव्यम् । तव विशायो मम विशायः । तव राजोपशायो मम राजोपशायः । तव राजानमुपशयितुं पर्याय इत्यर्थः । इह न भवति । विशयः । उपशयः ॥ cf. Sûtra IV. 5, 38, and P. III. 3, 38, 39.

34. °हस्तादान इति किम् । वृक्षशिखरे फलप्रचयं करोति ॥

अस्तेय इति वक्तव्यम् । पुष्पप्रचयः चौरेण । तुशब्दो विभाषानिवृत्त्यर्थः । Ch.

35. चित्युपसमाधानयोरिति वक्तव्यम् । चीयतेऽसौ चितिः । राशीकरणमुपसमाधानम् । अग्निश्चीयतेऽस्मिन्नित्यग्निनिकायः । उपसमाधाने । महान्गोमयनिकायः । इह कस्मान्न भवति । महाक्काष्ठनिचयः । बहुत्वमत्र विवक्षितं नोपसमाधानम् ॥ Ch.

36. प्राणिनां समुदायः संघः । स च द्वाभ्यां प्रकाराभ्यां संभवति । एकधर्माभिनिवेशेनौत्तराधर्यधर्मेण वा । तत्रौत्तराधर्यं पर्युदासो गृह्यते ।° औत्तराधर्यं नाम क्रमहीनमुपर्यधोभावः ° Ch.

41. घञर्थे स्थास्नापाव्यधिहनियुधिभ्यः को भवतीति वक्तव्यम् । प्रतिष्ठत्यस्मिन्निति प्रस्थः ।° प्रस्नः ।° प्रपः ।° आविधः । विहन्यतेनेनेति विघ्नः । आयुध्यन्त्यनेनेत्यायुधम् । Ch. (see the Vṛitti on Sûtra 66).

47. एष्विति किम् । आयामः । प्रयामः । केचिदनुपसर्गेऽपि वर्णयन्ति । यमः । यामः Ch.

49. इह पुनस्त्वकारो योगविभागार्थस्तेन वीणायां चेति द्वितीयसूत्रेऽनुपसर्गे चेति न संबध्यते पूर्वेणैव सिद्धत्वात् ॥ T.

50. शाकादीनामिति । न केवलं कपर्दकादीनां विशिष्टेयत्ता पण इत्यपेरर्थः ॥ T.

पणः ॥ नावुपपदेऽनुपसर्गे च पणो धातोरल्प्रत्ययो भवति वा भावेऽकर्तरि च कारके संज्ञायाम् । निपणनं निपण्यते वा । निपणः । निपाणः । अनुपसर्गेऽपि । पणः । पाणः ॥ परिमाणे नित्यम् ॥ पणो धातोरल्प्रत्ययो भवति नित्यं परिमाणे गम्यमाने पूर्वत्र विषये । नित्यग्रहणं विकल्पनिवृत्त्यर्थम् । मूलकपणः । शाक-

पणः । संव्यवहाराय मूलकादीनां या परिमिता मुष्टिर्बध्यते । तस्येदमभिधानम् । परिमाण इति किम् । पाणः ॥ Ch.

52. ग्रहेर्धातोरल्प्रत्ययान्तो निपात्यते । अक्षविषये चेद्धात्वर्थो भवति । तवायं ग्रहः । ममायं ग्रहः । (!) अक्षेष्विति किम् । ग्रहः पदस्य ॥ Ch.

53. प्रजनं प्रथमगर्भग्रहणं स्त्रीगवीष्वपुङ्गवानां गर्भाधानाय प्रथममुपसरणमुच्यते ॥ Ch.

55. निपाने चेति वक्तव्यम् । आहवः पशूनां कूपसमीप उदकाधारः । तत्र निपानाय पशव आह्वयन्ते ॥ Ch. (!) see P. III. 3, 74 (आहावः).

58. °दधिघनं(!) अत्र घनं कथं घनं दधि । धर्मशब्देन धर्मी भण्यते । मूर्त्ताविति किम् । अशनिघातो वर्तते ॥ अन्तर्घनो देश इति वक्तव्यम् । इह न भवति । अन्तर्घातः ॥ Ch. (see S. 60 and P. III. 3, 78).

60. बाह्लीकेषु देशविशेषसंज्ञेयम् अन्तर्घण इति ॥ Tril.

उद्घनोऽत्याधाने ॥ उत्पूर्वाद्धन्तेर्धातोरल्प्रत्ययो भवति तस्य च घन इति निपात्यते । अत्याधानं चेद्भवति । उद्घनः । यस्मिन्काष्ठे स्थापयित्वाऽन्यानि काष्ठानि तक्ष्यन्ते तदभिधीयते । उद्घातोऽन्यत्र ॥ अपघनोऽङ्गे ॥ अपघन इति निपात्यते । अङ्गं चेद्भवति । अपघनो गात्रैकदेशो न सर्वः किं तर्हि पाणिपादादिकमुच्यते । अपघातोऽन्यत्र ॥ Ch. (P. III. 3, 81).

61. विद्रुशब्दौ पक्षिवृक्षयोर्यथाक्रमं वर्तेते ॥ Tr.

स्तम्बघ्नो वा निपात्यत इति वक्तव्यम् । स्तम्बघ्नः । Ch. (see S. 66 and P. III. 3, 83).

63. सर्वे गत्यर्था ज्ञानार्था इत्याह इन्यन्ते ज्ञायन्त इति ॥ आरोह उच्छ्रायः परिणाहो विस्तारः । एवं हि निर्विशेषेण ज्ञायन्ते परिसमन्तादारोहतः परिणाहतश्च निमिताः । तुल्या भवन्तीत्यर्थः ॥ T.

67. यद्यप्यकर्तरि च कारके संज्ञायामित्यपि वर्तते तथापि नाभिधानमित्यर्थः ॥ T.; The Chaitr. (Vṛitti) however applies the whole adhikâra भावेऽकर्तरि च कारके संज्ञायां. It also has the Vârttika मदथुः क्रमथुरिति वक्तव्यम् ॥

68. यदा कर्तरि क्तस्तदा हेतौ वा तृतीया । यदा कर्मणि तदा कर्तरि युज्यते तृतीयेति । अत उक्तं यथायोगमिति । न वक्तव्यम् । वृतेरकर्मत्वात्कथं कर्मणि क्त इति । अकर्मकोऽपि धातुः सोपसर्गः सकर्मको भवतीत्यन्तर्भूतकारितार्थत्वाद्वा सकर्मकः ।यथा निर्वृत्तो घटो निर्वर्तित इत्यर्थः ।॰ T.

71. उपसर्गैरित्यादि । एतच्चातोऽनुपसर्गात्क इत्यनुपसर्गग्रहणेन ज्ञापितमेव ॥ T.

72. स्त्रीप्रकरणे संपदादिभ्यः क्विप् वक्तव्यम् । संपत् । विपत् । प्रतिपत् । आपत् । नीवृत् । संवित् । विद्युत् । क्तिरपीष्यते । संपत्तिः । विपत्तिः ॥ कृष्यादिभ्यः क्तिरित्युपसंख्यानं कर्तव्यम् । कर्षणं कृषिः । वर्षणं वृषिः । किरिः । किटिः । रोचनं रुचिः । धूलिः । कलिः । गलिः । वाजिः ॥ अजादिभ्यो णिर्वक्तव्यः । आजिः । वारिः । गालिः ॥ ग्लाम्लाज्याहाभ्यो निरित्युपसंख्यानं कर्तव्यम् । ग्लानिः । म्लानिः । ज्यानिः । हानि. ॥ Ch. [cf. P. III. 3, 108, Vs. 8, 9, and 6; P. III. 3, 95, V. 4].

73. उवतेर्वयतेर्वा । ऊतिः । स्यतेः सूनोतेर्वा(!) सातिः । हन्ते-र्हिनोतेर्वा हेतिः । यौतेर्यातेर्वा यूतिः । जायतेर्जवतेर्वा जूतिः ॥ Ch.

76. अटेश्चेक्रीयितान्ताद्॰ । एतत्तु वृत्तौ मतान्तरमुक्तं सूत्र-कारस्य तु मतं वर्णयन्ति केवलादेव क्यप् प्रमाणमिति । तथा च । वृथाट्या खलु सा तस्या इति प्रयोगो दृश्यते ॥ परिपूर्वादेवेति । एतदपि मतान्तरेणोक्तं केवलादपि दृश्यते चर्यया भ्रमतीति ॥ मन्येति यपि सति पञ्चमलोपो नास्ति क्यपो ह्यनुबन्धकत्वात् ॥॰ T.—The Chaitr. also has only अट्या and चर्या.

77. चकारेण सूत्रे शप्रत्ययस्यैव संबन्धो न तु क्यपः । तेन व्यवहितोऽपि क्तिर्वर्तत इत्याह क्तिः क्यप् चेति । यदि पुनरनन्तरः क्यबेव वर्तते तदा तेनैव चकारस्य संबन्धः कृतः स्यादिति भावः । यस्तु क्यप् चेति चकारः सोऽर्थवशाच्छेदनिबन्धनो वृत्तिकृता प्रयुज्यते न तु सौत्र(१) इति । अन्ये तु योगविभागात्क्तिप्रत्ययमिच्छन्ति । कृञ इत्येको योगोऽनन्तरेण क्यपा संबध्यते । ततः श चेति द्वितीयः(२) । चकाराद्यथाप्राप्तं चेति क्तिरपि । ॰ Tr.

78. जागर्तेश्चोपसंख्यानं कर्तव्यम् । जागर्या ॥ Ch. [P. III. 3, 101 V.]

79. मृगयतेरुपसंख्यानं कर्तव्यम् । मगया ॥ Ch. (ib.)

80. जागर्तेश्चेति वक्तव्यम् । जागरणं जागरा ॥ Ch. (ib.)

81. The rule does not apply to शीङ्, since शयित is not गुरुमत् T.

निष्ठासेङ्ग्रहणं व्यञ्जनान्तावधारणार्थम् । दीधितिः । वेवि-तिरिति स्वरान्तात् क्तिप्रत्यय एव ।॰ Ch.

---

१ न त्वसौ सौत्र G.  २ F. om. द्वितीयः

82. घटादयः षानुबन्धा इत्येतल्लाघवार्थं धातुगणे परिभाषितमर्वाचीनैः प्राचीनैस्तु षानुबन्धाः प्रत्येकं मानुबन्धाः कृता[१] इति॥ ज्ञापकादिति पूर्वपरयोरर्थोपलब्धाविति वचनादित्यर्थः।T.

84. अनुपसर्गेऽपि वक्तव्यम्। अन्तर्धा। अद्धा॥ Ch.

87. इकिश्तिपौ धातुस्वरूपनिर्देश इति वक्तव्यम्। छिदिः। भिदिः। श्रन्थिः। ग्रन्थिः। पचतिः। पठतिः। यजतिः॥ वर्णात्कारः। आकारः। ईकारः॥ रादीफः। रेफः॥ Ch. (cf. Vṛitti on IV. 5, 91, and P. III. 3, 108 Vs.)

88. Chaitr. adds the examples मूलकोत्पाटिका। वृक्षोत्पाटिका। शालभञ्जिका.

91. °अन्ये त्विक्श्तिपाविति [P. III. 3, 108 V.] पाठं मन्यमाना द्वौ प्रत्ययावित्याहुः। तदसत्।° तस्मादिप्रत्ययोऽपि विधेयः। तथा च चान्द्रं सूत्रम् इकिश्तिपः स्वरूप इति॥ T.

97. संक्रम इति वक्तव्यम्। चकारोऽनुक्तसमुच्चयार्थः। कषो निकषः॥ Ch.

98. प्रपूर्वाच्च भवतीति वक्तव्यम्। प्रस्तारः। प्रतारः॥ Ch.

99. अध्यायोन्नायोद्यावसंहाराधारावापाश्चेति वक्तव्यम्°॥ अवहारश्चेति वक्तव्यम्।°॥ Ch.

P. III. 3, 121 V. आवाय for आधाय (B.-Roth आवाप as Ch.)

107. उपशब्दः सामीप्ये तेन समीपोच्चारिणि° T.

112. °देवा एनं देयासुरिति देवदत्तः। यज्ञ एनं भूयादिति यज्ञभूतिः। कुमारोऽस्य दुरितं शीर्यात् कुमारशर्मा। विष्णुरेनं

---

१ मानुबन्धा इव कृता F.

श्रूयादिति विष्णुश्रुतः । गङ्गा मीयादेनमिति गङ्गामितः । अश्व-मितः ॥ Ch.

IV. 6, 2. अपूर्वकालार्थमिति पूर्वमसौ याचते पश्चादपमयत इति नास्ति पूर्वकालत्वमिति । अतो वक्तव्यमिति भावः । ० T.

3. मुखं व्यादाय स्वपितीत्युपसंख्यानं कर्तव्यम् । अपूर्वकालत्वात् ॥ Ch. [P. III. 4, 21 V. 4].

4. Ch. adds P. III. 4, 19 as vârttika.

5. अग्रेप्रथमेपूर्वेष्विति वक्तव्यम् । अग्रे भोजं व्रजति० । प्रथमे भोजं व्रजति० । पूर्वं भोजं व्रजति० ॥ न यद्यनाकाङ्क्षायामिति वक्तव्यम् । ० [P. III. 4, 23] Ch.

7. आक्रोशो नामानिष्टभाषणम् । Ch.

11. विदेश्चेति वक्तव्यम् । ० Ch.; वक्तव्यं व्याख्येयम् अभिधा-नात्सिद्धमिति भावः T.

14. ०शीतापूरं वृष्टो देवः । शीताग्रं० । पथिपूरं० पथिग्रं० ॥ इह कस्मान्न भवति । मूषिकाविलपूरं वृष्टो देवः । धातोरिति संबन्धात् ॥ Ch.

15-16. गात्रपुरुषयोः स्नः ॥ गात्रपुरुषयोः कर्मणोरुपपदयोः स्नातेर्धातोर्णम्प्रत्ययो भवति वर्षप्रमाणे गम्यमाने । गात्रस्नायं वृष्टो देवः । पुरुषस्नायं वृष्टो देवः ॥ Ch.

21. स्नेहने पिष इति वक्तव्यम् । ० Ch. (Sûtra 24).

28. गोष्पदं प्रातीति गोष्पदप्रः (affix क) acc. to IV. 3, 4.

44. भवतेश्चेति वक्तव्यम् । ० मुखतोभावं० ॥ नानाविनाद्विधा-र्थप्रत्ययेषूपपदेषु च्व्यर्थेषु भूकृञोः क्त्वाणमोरित्युपसंख्यानं कर्त-व्यम् । नाना भूत्वा गतः । नानाभूय गतः ० Ch.

45. अन्वगानुलोम्य इति वक्तव्यम् ॰ [P. III. 4, 64] Ch.

45-46. Ch. adds the sûtra: शकधृषज्ञाग्लाघटरभलभक्रमगमसहार्हास्त्यर्थसामर्थ्यार्थेषु तुम् ।॰ (see P. III. 4, 65) । प्रक्रामति भोक्तुम् । गच्छति भोक्तुम् ।॰। सामर्थ्यार्थे । अलमपि भोक्तुम् । पर्याप्नोति भोक्तुम् । पारयति भोक्तुम् । सामर्थ्ये णमिष्यत ॥

46. निराकाङ्क्षेष्विति निश्चिता आकाङ्क्षा येषु तानि निराकाङ्क्षाणि तेषु साकाङ्क्षेष्वित्यर्थः ॥ शेषभूतेति शेषं भूता शेषभूता । अवयवत्वं प्राप्तेत्यर्थः ।॰ T.

भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापत्या वा कर्तरीति वक्तव्यम् ।॰ (P. III. 4, 68) Ch.

48. यथाप्राप्तं चेति भावे कर्मणि चेत्यर्थः ।॰। भविष्यति कटविषयेयो ऽसौ विशेषस्तच्च कटशब्दस्तादर्थ्यात् कटार्थत्वात्तस्येति ॥ T.

54. क्वचित्प्रतिषेधो वक्तव्यः । ऊर्णायुः । कंयुः । संयुः ॥ भुजिमृङ्भ्यां युक्त्युकौ । भुज्युः । मृत्युः ॥ Ch.

60. प्रवाच्य इति यो बालानां दीयते पाठः स प्रवाच्य इति॰ T.

61. वक्रेत्यादि । वक्रा चासौ वाक्यरचना चेति तया रमणीयो ग्रन्थः समासेनोत्तरकालं ग्रन्थः शब्दो गम्यते नावयवेन वाक्यशब्देन॰ T.

65. ज्योतिर्जनपदरात्रिनाभिमानगोत्रपुत्ररूपस्थानवर्णवयोवचनचक्षुःष्वपि भवतीति वक्तव्यम् ।॰ Ch. cf. P. VI. 3, 85.

72. Cf. Vop. 26, 82, where only वीरुध् is admitted.

79. ऊर्णोतेर्न भवतीति वक्तव्यम्॰ Ch.

80. तिकारे ग्रहादिभ्य इति वक्तव्यम् ।॰ Ch.

84. क्लिश उपतापे is here intended, not क्लिशू विबाधने, which falls under the preceding rule. पू is an exception to IV. 6, 79.

86. विमोहनमाकुलीकरणम् । लुभित्वाऽनाकुलमाकुलीकृत्येत्यर्थः। तथोत्तरत्रापि विलुभिताः केशा इत्यनाकुला आकुलीकृता इत्यर्थः ॥ T.

93. घृषिशसोर्वैयात्य इति वक्तव्यम् Ch. (P. VII. 2, 19).

104. ऋकारान्तल्वादिभ्यः क्तेर्निष्ठावद्भवतीति व० ॥ दुग्वोर्दीर्घश्चेति व० ॥ पुनातेर्विनाश इति व० ॥ Ch.

## VARIOUS READINGS OF THE *LAGHU-VṚITTI* IN THE CHAPTER ON *KṚIT-AFFIXES.*

In order to show more clearly in what respect the text of the *Laghu-vṛitti* differs from that commented upon by *Durgasiṃha,* the more important various readings of the former in the last book are here given. As I had at my disposal only a modern transcript, kindly sent me by Dr. Burnell, I have no means of ascertaining how far these readings are peculiar to the MS. from which the transcript was made, or even to the transcript itself. It will be seen that most of the additional sûṭras here given, occur in *Durgasiṃha's Vṛitti* in the shape of *vârttikas,* or rather memoranda, intended for the grammatical teachers; the matter they refer to being apparently considered to be beyond the scope of an elementary grammar such as the Kâtantra professes to be.

After IV. 1, 19 the sûtra is inserted: अर्चिशुचि° इस् ॥ see Vṛitti on 19.

After 32 the L.V. inserts: समासेऽव्ययो मस्य क्त्वे लुक् ॥

After 37: (*a*) ऋदृचि° आय्यः ॥ (*b*) गण्डि° ङः ॥ s. Vṛitti.

After 38: आपः परस्य वा ॥

After 41: आक्रोशदैन्ययोर्वा ॥

After 67: युटि च ॥

After 71: सनि च ॥

After 81: सुविन्यवाङ्भ्यः क्ति वा ॥

After 83: अचि च ॥

After 84: क्वामसंध्यचरान्तोऽव्ययम् ॥

After IV. 2, 4: ग्रादिस्व ॥

After 29: दुहिशंसिभ्यां च ॥

After 50: याचिव्रजिवद्वसो नञ्पूर्वात् ॥

Sûtra 66 is omitted.

To Rule IV. 3, 6 it adds: अलसानन्दकरयोः ॥

After 18 it inserts the sûtras: पार्श्वादौ करल उपपदे शी-तेरज्भवति ॥ उत्तानादिषु कर्तृषु ॥

In 23 it reads: त्यदाद्यन्तानन्त॰ and लिंवि for लिवि; see footnote on text.

To sûtra 24 it adds: कर्मणि ॥

To 25: व्रीहिवत्सयोः ॥

After 41 it inserts the sûtra: अभये च ॥

In 58 it reads विष्णुच्छुकञौ॰ as MS. O.

In 74 it omits क्विद्.

IV. 4, 2 runs thus: वर्तमाने शन्तृङानशौ ॥

To 4 it adds वा ॥

Sûtra 21 runs thus: (ग्रमा ?)द्यष्टानां घिनिण् ॥

Sûtra 35 is omitted.

After 38 it inserts the sûtra: कृपाहृदयादालुः ॥

After 69 the sûtras: काममनसोस्तुमो मो लोपः ॥ समस्व ॥ हिततते वा ॥ यणि नित्यम् ॥

In IV. 5, 2 it reads (perhaps correctly) सु: for सृ.

Sûtras 23 and 24 are omitted.

After 34 it inserts the sûtra: न स्तेये ॥

In sûtra 60 it reads: अन्तर्घणो°.

In sûtra 81: °निष्ठायां सेट: ॥

Instead of 83 it has: गुहितुक्षिवश्रिवपिच्छपिरुजिजिम्लुषिदय-ऊनिचोदिपीडिम्लषिषिच्छिभ्यः संज्ञायाम् ॥ to which that in our text is given as vârttika.

After 91 it inserts the sûtras: ह्लाज्याग्लाभ्यश्च ॥ संपदादिभ्यः क्विप् ॥ इक्तिपौ धातुस्वरूपे ॥ वर्णात्कारः ॥ रादिफो वा ॥ एवमादिश्च ॥

IV. 6, 2 runs thus: मेङ्स्तुमर्थे ॥

After 11 it inserts the sutra विदेश्च ॥

To sûtra 30 it adds कार्यः ॥

Sûtra 43 runs thus: तिरश्च्यपवर्गे ।

After 45 it inserts the sûtras: अन्वकि आनुलोम्ये (s. Chaitr.) ॥ नानाविनयोः कृञश्च ॥

In 50 it reads: दास for दाम्न.

In 53: क्तोऽधिकरणे च ध्रौ° s. footnote on text.

Sûtras 54 and 58 are omitted.

In 60 it reads: °याचियजित्यजाम् ॥ s. footnote on text.

After 69 it inserts the sûtras: समानान्ययोश्च ॥ यत्तदे-तद्भ्योऽस्य परिमाणेऽर्थे वतुश्च ॥

In sûtra 76 it reads: °घसैकस्वरादन्तानामिट्°.

Sûtras 81 and 82 are omitted.

In 83 it reads: ०ऽनुबन्धाद्वा ॥

After 83 it inserts the sûtras: न खृखूङोऽस्य कानुबन्धे ॥ निष्कुषोर्वा ॥

In 84 and 89 it has पूं for पू.

Sûtra 90 is omitted.

After 91 it inserts the sûtras: जपिवमिभ्यां वा ॥ व्याङ्भ्यां श्वसः ॥

Sûtras 104 and 111 are omitted.

# ALPHABETICAL INDEX OF SÛTRAS.